मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे ।
इतीव रचितो धात्रा कवी रत्नाकरोऽपरः ।।
(राजशेखरः)

उत्तरप्रदेशीयसंस्कृताकादम्या विशिष्टपुरस्कारेण सम्मानितम्

# महाकवी रत्नाकर-स्तदीयं हरविजयञ्च

लेखकः
**डॉ० कृष्णकान्त शुक्लः**
एम० ए० (हिन्दी-संस्कृतयोः), पी-एच० डी०, साहित्याचार्यः, साहित्यरत्नम्
संस्कृत-विभागाध्यक्षः
बरेली कालेजः (रुहेलखण्ड विश्वविद्यालयः), बरेली

शारदा-सदनम्, मुजफ्फरनगरम्

# महाकवी रत्नाकरस्तदीयं हरविजयञ्च

लेखक: : डॉ० कृष्णकान्त शुक्लः

मूल्यम् : १००·०० रुप्यकशतमितम् ।



प्रकाशकः : शारदा-सदनम्, मुजफ्फरनगरम्-२५१००१

वितरकः : सुधा-कमल-ग्रन्थालयः
२६४, उत्तरी गाँधी कालोनी, मुजफ्फरनगरम्

मुद्रकः : देव प्रिण्टर्स एण्ड पब्लिशर्स, मुजफ्फरनगरम्

संस्करणम् : द्वितीयम्, १९८१

प्रतिरूपाणि : २००

# समर्पणम्

यैः केवलमियं तनुरेव न प्रदत्ताऽपितु सुरभारतीप्रसादोऽपि
जडेऽस्मिन् वितीर्णस्तेषां वन्दनीयचरणानां
वाग्देवतावताराणां कीर्तिकलेवराणां
कुलपतिकल्पानां महाकवीनां
परमपूज्यपितृपादानां
**श्रीमदाचार्यब्रह्मानन्दशुक्लमहाभागानां**
पावनस्मृतौ
किञ्च
समाराध्यचरणाया मातुः
**श्रीमत्याः प्रियम्वदादेव्याः**
सुश्लाघ्यसेवायां
सादरं समर्पितेयं वाङ्मयी पूजा
तत्प्रसादात् सफलीभवतु ।

विनयावनतः
कृष्णः

# अनुक्रमणिका

# पुरोवाक्

संस्कृत-साहित्यं हि नाम वाग्देवताया विलासः, तपःपूतानां ऋषीणां साधनाफलम्, रससिद्धानां कवीनां च 'मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां' वाचां परिस्पन्दः। तद्धि बाह्योपादानरहितं किमप्यपूर्वस्वास्थ्यप्रदं रसायनम्, अकज्जलं सिद्धाञ्जनम्, अचिन्ताकरं चिन्तनम्। हेतुः परमशान्तेः, सेतुरभ्युदयनिःश्रेयसयोः, केतुर्मानवता-मन्दिरस्य।

तत्रापि काव्यानां महत्त्वं किमप्यवर्णनीयमेव। अतीतसच्चरितचित्रणेन सुरवाचि निबद्धानि, पुरुषार्थचतुष्टयापादकानि काव्यानि मानवजीवनं, समुद्द्योतयितुं निकषोपलसन्निभानि सन्ति। तेषां सरसता, सरलता, विशदता, गम्भीरता च न केषामपि काव्यकलाकोविदानां तिरोहिता। सहृदयहृदयवशीकाराय कार्मणकल्पानां, चेतनानटीसवननभूतानां, मनःकुरङ्गवागुरायमाणानां तेषां लोकातिशायि माधुर्यमास्वाद्य विदां समाजश्चिराय माद्यति।

चिरनिव्यूढलोकाभ्युपपत्तिव्रतानां कृतधियां कवीनां वाग्धाराऽजस्रं हृद्धरातलं तरलतामुपनयति। वाल्मीकिव्यासकालिदासाश्वघोषादीनां भारत्यद्याप्यन्तश्चेतनां भृशमुत्कलिकाकुलतां प्रापयति।

कालिदासानन्तरं यस्या अलङ्करणप्रवृत्तेरुदयः काव्यवर्त्मन्यभूत्, तस्याः प्रतिनिधिभूता 'बृहत्त्रयी' विद्वत्सु नितान्तमादरणीया। भारवेरर्थगौरवम्, माघस्योपमार्थगौरवपदलालित्यात्मकं गुणत्रयम्, श्रीहर्षस्यालोकसामान्यं वैदुष्यं च संस्कृतजगति प्रख्यातमस्ति। बृहत्त्रय्या आधारभूतानाममीषां त्रयाणां महाकवीनां विषये तु पर्याप्तमध्ययनमभूत् परं विस्मयावहं, खेदावहं चैतद् यन्महाकवे रत्नाकरस्य, यत्र माघद्वारा प्रतिष्ठापितस्य कविताया मानदण्डस्य चरमा परिणतिः प्राप्यते, न तादृगध्ययनं संवृत्तम्।

अयं रत्नाकरः कश्मीरशासकस्यावन्तिवर्मणः सभापण्डित आसीत्। अवन्तिवर्मणः शासनकालः ८५५—८८४ ई० आसीत्। तस्य नाम्ना (क) हरविजयम् (ख) वक्रोक्तिपञ्चाशिका (ग) ध्वनिगाथापञ्चिका

चेति ग्रन्थत्रयं प्रसिद्धं वर्तते। एषु पञ्चाशत्सर्गात्मकं ४३२१ श्लोकात्मकं च 'हरविजयं' महाकाव्यं संस्कृतसाहित्यस्यानुपमं रत्नमस्ति। कविता-कामिनी स्वाप्रतिमवैभवेन तत्र नरीनृत्यति। तस्य वैदुष्यमप्रतिद्वन्द्वि, विस्मयकरं च वर्तते। माघः सर्वाभिर्दृष्टिभिस्तत्समक्षं विच्छाय इवाभाति।

पुरा तु रत्नाकरस्य यशो महत्वं च विद्वत्समाजे प्रचुरतया प्रसृतमासीत्। कल्हण-राजशेखर-क्षेमेन्द्र-प्रमुखाः कवयः समालोचकास्तु तस्य प्रशंसामकार्षुरेव, काव्यप्रकाशसदृशेऽलङ्कारशास्त्रमुकुटायमाने ग्रन्थेऽपि तस्य "मधुपराजिपराजितमानिनी............" (३।२), "स्पृशति तिग्मरुचौ ककुभः करैः......" (३।३७), "राजति तटीयमभिनव............" (५।१३७), "स्पष्टोल्लसत्किरण........ " (१६।१), प्रभृतीन्युदाहरणानि प्रदत्तानि। परमनन्तरं दैवदुर्विपाकात् न जाने कस्मादकस्मादिदं महाकाव्यं विरलप्रचारं समजायत। काव्यगुणगणमण्डितस्य महाकाव्यस्यास्यागाधगाम्भीर्याद् भीतभीतैरिव परवर्तिभिः पण्डितैर्मन्येऽस्य पूर्वं गजनिमीलिका पश्चाच्च योजनाबद्धरूपेणोपेक्षा समपादि। टीकाकारैरप्यस्यां दिशि मौनमेवावलम्बितम्। अस्यैकेव टीका राजानकालकृता 'विषमपदोद्योत'-नाम्नी समुपलभ्यते सापि च खण्डिता-षष्ठे सर्गे २५तः ११५ श्लोकं यावत्, ४६ सर्गस्य च ६७ श्लोकान्महाकाव्यस्यान्तं यावत्। अद्यापीदमभि विदुषां कौम्भकर्णी निद्रा पदं जहात्येव न। अद्यत्वे नेदं कस्मिंश्चित् पाठ्यक्रमे न च सहृदयानां कण्ठेषु विराजते। अस्यैकं संस्करणं १८९० ईशवीये वत्सरे निर्णयसागरात् प्रकाशितमासीद्, द्वितीयसंस्करणप्रकाशनस्यावसर एव नायातः। अद्य प्रायेणेदमनुपलब्धग्रन्थकोटौ समायातमस्ति।

अनया स्थित्या दूयमानेनानेन जनेन स्वकीयामशक्तिं जानतापि दोर्भ्यामिव रत्नाकरावगाहनस्य दुःसाहसं कृतम्। यथाशक्ति यावन्ति रत्नान्युद्धृतानि तानि सहृदयानां सेवायामुपायनीक्रियन्ते।

अस्य महाकाव्यस्य पर्यालोचनसमये मदीयोऽयं विचारो दृढोऽभूद् यद् रत्नाकरस्य समुचितं स्थानं बृहत्त्रय्यामेवास्ति। यतोहि तस्याः परम्परायाः सर्वा अपि विशेषता अस्मिन् समुपलभ्यन्ते। बृहत्त्रय्यां नैषधीयचरितस्य समावेशो नोचितस्तस्य रसपरम्पराकाव्यत्वात्। किञ्च श्रीकीथमहाभागेन स्वसंस्कृतसाहित्येतिहासे रत्नाकरो द्वितीयश्रेणीकेषु कविषु स्थापितोऽस्ति। इदमप्यनुचितमस्ति। अस्य ग्रन्थस्योपसंहारेऽस्मिन् विषये विचारः कृतोऽस्ति।

प्रबन्धोऽयं भागद्वये एकादशाध्यायेषु च विभक्तोऽस्ति। पूर्वभागे चतुर्ष्वध्यायेषु महाकवे रत्नाकरस्य व्यक्तित्व-कर्तृत्व-वैदुष्य-भक्तिभावनानां विषयेऽपेक्षिता

सामग्री प्रस्तुता, उत्तरभागे च सप्तस्वध्यायेषु हरविजयस्य साहित्यिकं समीक्षणं प्रस्तुतीकृतम्। सांस्कृतिकाध्ययनस्य पृथक्करणीयत्वात्तदत्र न समीक्षितम्।

परिशिष्टेषु रत्नाकरसम्बन्धे कथितानां विदुषां साहित्यिकमूल्याङ्कनसम्बन्धिनीनामुक्तीनां, रत्नाकरस्य सूक्तीनां, सहायकसन्दर्भग्रन्थानांच सङ्कलनं कृतमस्ति।

हरविजयस्य विरलप्रचारत्वात् विस्तृतान्युद्धरणानि दत्तानि; केवलं संख्यामात्रप्रदानेन काव्यमहत्त्वं पूर्णतयास्वादनीयं न भवतीत्यनुभवसिद्धं सहृदयानाम्।

पादटिप्पणीषु पूर्णतया संस्कृतव्याकरणदृशा शुद्धानां वाक्यानां प्रयोगः सदैव न कृतः। साम्प्रतिकी प्रचलिता पद्धतिरेवाङ्गीकृता। तद्यथा—'विश्वनाथप्रणीते साहित्यदर्पणे, सप्तमपरिच्छेदेऽमुकपृष्ठे इत्यस्य स्थाने 'विश्वनाथः, साहित्यदर्पणः, परि० ७, पृ० अमुकः' इत्येव लिखितम्। मुद्रणानुरोधादनेकत्र परसवर्णस्य स्थानेऽनुस्वारप्रयोग एव कृतः। दीर्घऋकारमात्रायाः स्थाने ह्रस्वमात्रयैव कार्यं सञ्चालितम्।

भाषा च नितान्तं सरलैव प्रयुक्ता, शब्दाडम्बरेण दुरूहतां नापादिता। अद्यत्वे संस्कृतस्य सरलमेव रूपं श्रेयस्करमिति कालज्ञानां विचारः। 'नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते' इत्यादर्शः सम्मुखे स्थापितः। कलेवरवृद्धिभयादीहमानेनापि बहुशः समासेनैव कार्यं सञ्चालितम्। विशेषतश्चित्रकाव्यप्रसङ्गे श्लोकानामर्था अस्मादेव हेतोर्न प्रदत्ताः।

अस्य वास्तविकमध्ययनं तु दुरूहकाव्यग्रन्थिस्फोरणपुरस्सरं सम्पादन एव भवितुं शक्नोति। एतन्महत्कार्यं भाविन्यां मामकीनायां योजनायामस्ति।

अयं प्रबन्धो मूलरूपेण १९७४ ईशवीयाब्दे आगरा विश्वविद्यालयस्य पी–एच० डी० उपाध्यर्थं प्रस्तुत आसीत्। अस्य प्रथमं संस्करणमुत्तरप्रदेशीयसंस्कृताकादमीप्रदत्तेन पञ्चसहस्ररूप्यकाणामांशिकार्थिकसाहाय्येन १९७९ वर्षे प्रकाशितमभूत्। तदनु १९८० वर्षे दिल्लीस्थ देववाणीपरिषदा 'हरविजयस्य साहित्यिकमध्ययनम्' इति नाम्नास्य साहित्यिकानुशीलनपरोंऽशः पुस्तकाकारेण प्रकाशितः। सम्प्रति गुणग्राहकाणामनुरोधात् सम्पूर्णाकारे पुनः प्रकाश्यते।

अस्मिन्नन्तराले समधिगतेयं सूचना यदयं ग्रन्थ उत्तरप्रदेशीयसंस्कृताकादम्या त्रिसहस्रमुद्राणां विशिष्टपुरस्कारेण पुरस्कृतोऽस्ति, भृशं प्रीणाति; प्रेरयति च मां गुणग्राहिणीमकादमीं प्रति पुनःपुनर्धन्यवादान् व्याहर्तुम्।

स्वप्रेरणास्रोतसामशेषशास्त्राटवीसञ्चरणपञ्चाननानां श्रीमतां सीतारामचतुर्वेदानाम्, अलीगढ़स्थश्रीवार्ष्णेयकालेजस्य संस्कृतविभागस्य भूतपूर्वाचार्याणां, सुरभारतीमयजीवितानाम्, अनेकग्रन्थप्रणेतृणां श्रीमतामाचार्यरमेशचन्द्रशुक्ला-

नाम्, शोधप्रबन्धनिर्देशकानां, बरेलीकालेजस्य भूतपूर्वसंस्कृतविभागाध्यक्षाणामाचार्यलक्ष्मीचन्द्रकौशिकमहाभागानां, लखनऊविश्वविद्यालये संस्कृतविभागाध्यक्षाणां श्रीमतां डॉ० शिवशेखरमिश्रमहाभागानाम्, ग्वालियरस्थशासकीयसंस्कृतकालेजस्यावकाशप्राप्तानामाचार्यवराणां कविचक्रवर्तीनां भट्टपद्मनाभशास्त्रिणां, मयराष्ट्रस्थसाहित्यभण्डारप्रकाशनसंस्थानाध्यक्षाणां श्रीमतां रतिरामशास्त्रिणां, बरेलीस्थविष्णुसंस्कृतमहाविद्यालयस्य भूतपूर्वप्रधानाचार्याणां श्रीमतां शिवदत्तमिश्रमहाभागानां, स्नेहमूर्तीनां ज्येष्ठभगिनीनां श्रीमतीनां डॉ०सावित्रीदेवीनां च हार्दिकमुपकारभारं सादरं वहे येषां कृपां विनैतत्कार्यसम्पादनं सम्भवं नासीत्।

समये–समये सत्परामर्शप्रदानार्थं क्रमशो मुजफ्फरनगरस्थसनातनधर्मकालेजे, दिल्लीस्थ राजधानीकालेजे, सहारनपुरस्थ जे०वी०जैन कालेजे च संस्कृत-हिन्दी–विभागयोराचार्यपदमधितिष्ठतश्चिरायुषो यशस्विनश्च प्रो० उमाकान्त शुक्ल–डॉ०रमाकान्तशुक्ल–पण्डितविष्णुकान्तशुक्लानहं शुभाशिषां राशिभिः संवर्धयामि। सर्वविधसौविध्यप्रदानार्थं सहधर्मचारिणी साहित्याचार्या श्रीमती मञ्जु शुक्ला साभारमभिनन्द्यते। वात्सल्यमूर्तयः कुमार्यो रश्मिराकामनीषानीरजाशुक्लाश्च सस्नेहं समुपलाल्यन्ते। नवजातं प्रियवत्सं पद्मनाभशुक्लं, यस्य शुभजन्मानन्तरं संस्करणमेतत्प्रकाश्यतेऽहं शुभाशीर्भिः संयोजयामि याचे च परमेश्वरं तस्य सर्वविधं माङ्गल्यम्।

पूर्ववन्मुजफ्फरनगरस्थशारदासदनेनेदं प्रकाश्यते, इत्येतत् प्रकाशनसंस्थानं प्रति कृतज्ञतामावहामि। देवप्रिण्टर्स प्रतिष्ठानाध्यक्षाय चिरायुषे कमलेशकुमारकपिलाय च भूयोभूयः साधुवादा येन सत्वरमेव पूर्ववदस्य पुनर्मुद्रणं सम्पादितम्।

मुद्रणयन्त्रस्य दवीयस्त्वात् काश्चन प्रूफसम्बन्धिन्यस्त्रुटयः सञ्जाता एव, विज्ञपाठकैस्ताः संशोध्य पठनीया इति विनम्रं निवेदनम्।

मननमन्थराचलावगाहनयोग्यस्य रत्नाकरस्य मया तु वेलास्थितेनेव केवलं दर्शनमात्रमेव कृतम्। स्वल्पीयस्या बुद्धया तस्य पारगमनलालसा दोर्भ्यां रत्नाकरतितीर्षेवास्त्युपहासास्पदम्। महाकवेरेव शब्देषु—

"मन्दाकिनीं प्रथितपुण्यगुणां विहाय,
रत्नाकरं क इव पूरयितुं क्षमोऽन्यः ?"

तथाप्येतेन कर्मणा यदि सुरभारत्या मनागपि सेवा भवति तदाहमात्मानं धन्यं मंस्ये।

बरेली
विजयादशमी, ८–१०–८१

विदुषामाश्रवः
—कृष्णकान्त शुक्लः

प्रथमोऽध्यायः

# साहित्यिकपृष्ठभूमिः

## (क) लौकिककाव्यपीठिका

'पश्य देवस्य काव्यं, न ममार, न जीर्यति', 'कविर्मनीषी परिभूः स्वयंभूः' इत्यादिभिः श्रुतिवचनैः काव्यस्य मूलं वेदेष्वेव प्राप्यते। ईश्वरस्य निःश्वसितभूतेषु वेदेषु काव्य-सौन्दर्यमतितमां भ्राजते। वैदिका द्रष्टारः प्रकृतेर्जीवनस्य चानावृतसौन्दर्यं साक्षात्कुर्वन्ति स्म। वैदिके काव्ये मानवः प्रकृतिश्च जीवनस्यैकस्मिन्नेवोल्लासमये प्राणतत्वे स्फुरितौ प्रतीयेते। समेषामपि प्राकृतानामुपादानानां जीवनेन साकं गुम्फनमिवावलोक्यते। एकतः प्रकृतेः प्रत्यक्षं रूपं वर्तते यस्मिन् सूर्याचन्द्रमसौ, ग्रहाः, नक्षत्राणि, तारकावलयः, उभे सन्ध्ये, अग्निः, मेघाः, विद्युत्, अन्धकार-प्रकाशौ, क्षिति-जल-पावक-गगन-समीराः, सरांसि, वनानि, वृक्षाः, पशवः पक्षिणश्च स्वकीययाऽनुपमया सुषमया सहिता भावजगत आलम्बनभूताः संदृश्यन्ते; अपरतश्चैषु व्याप्तायाः सत्ताया अधिष्ठातृरूपेणेन्द्रवरुण-उषः–पवन-अग्नी–रुद्रादयो देवाः साक्षात्क्रियन्ते। एतेषां माध्यमेन वैदिको द्रष्टा सत्य-अमृत-शक्ति-प्रकाश-ऊर्जस्वलता-स्फूर्ति–पराक्रम-संघर्ष–आवेग–संवेग-तृप्ति-क्षमा-मैत्री-सौमनस्य-साहचर्यादीनां भावानामप्यावाहनं करोति।[1]वैदिकऋषीणां शंसनं, हवनम्, उद्गीथश्च साहित्यिकवितानस्य सूत्रपातमकरोत्। तेषां भावाः स्वतएव साहित्यस्य संगीते द्रवीभूता अजायन्त। मानवस्य सौन्दर्याभिव्यंजिका वाणी अनायासमेव कवितारूपे परिणता बभूव।[2]

आन्तरिकी स्वच्छन्दता, बाह्यानन्तता चादिकालिकजीवनस्य च मूलभूतेऽनुभूती आस्ताम्।[3] प्रकृतेः सहजविस्तारस्य साहचर्याद् वैदिकऋषेरन्तःकरणं भावोद्वेलितं बभूव। ततोऽलंकृता कविता प्रादुर्बभूव। उषसो दर्शनावसरे वैदिकः

---

१. द्रष्टव्यम् : 'प्रकृति और काव्य' (संस्कृत–साहित्य) डा० रघुवंशः, भूमिका

२. संस्कृत–कवि–दर्शन, डा० भोलाशंकर व्यासः, पृ० २

३. सौन्दर्यशास्त्रः, डा० हरद्वारीलाल शर्मा, पृ० १७

कविः कथयति :

सूर्यो देवीमुषसं रोचमानां, मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि, वितन्वते प्रतिभद्राय भद्रम् ।।[४]

उषः सूर्याय स्वकीयं रूपराशिमेवं विवृणोति यथा जाया पत्ये स्वसौन्दर्यमुद्घाटयति :

जायेव पत्य उशती सुवासा, उषा हस्तेव निरणीते आसः ।[५]

उषः कन्येव प्रेमाकुलस्य प्रेमिणः सूर्यस्यान्तिकं गच्छति, यौवनोन्मत्ता, स्मितवदना च सा तत्समक्षं स्ववक्षःस्थलमपावृणोति :

कन्येव तन्वा शशदानां एषि देवि ! देवमियक्षमाणम् ।
संस्मयमाना युवतिः पुरस्तादाविर्वक्षांसि कृणुषे विभाती ।।[६]

ऋग्वेदस्य दशमे मण्डले उर्वशी-पुरुरवसोः प्रेम-प्रसंगः काव्यात्मकतत्त्वानां तीव्रतया समुद्घाटनं करोति । पुरुरवसो विरहविह्वलेयमुक्तिर्यदुत्कृष्टकोटिकः प्रेयानहमन्तरिक्षविमानीमुर्वशीमावाहयामि । सुकृतैः संचितपुण्यराशिस्तत्सविधे प्रयातु । सा प्रत्यागच्छतु । मदीयं हृदयं विरहेण ज्वलतीव :

अन्तरिक्षप्रां रजसो विमानीमुपशिक्षाम्युर्वशीं वशिष्ठः ।
उप त्वा रातिः सुकृतस्य निष्ठान्निवर्तस्व हृदयं तप्यते मे ।।[७]

प्रेम्णस्तीव्रतां द्योतयितुमलम् ।

इदं हि जगत् तं किस्मयविमूढं करोति ।।[८]

सृष्टेः प्रारम्भे किमासीदिति जिज्ञासायां कविः स्वकीयं कौतुकमाविष्करोतिः

नासदासीन्नो सदासीत्तदानीं, नासीद् रजो नो व्योमा परो यत् ।
किमावरीवः, कुह कस्य शर्मन्, अम्भः किमासीद् गहनं गभीरम् ।।[९]

विषादस्यासन्तोषस्यात्मग्लानेश्च निरूपणम् अक्षसूक्ते प्राप्यते यत्र द्यूतकरस्य दुर्दशाया वर्णनं कृतमस्ति । द्यूतकरस्य जायापि सम्मानं न करोति,स मर्डितारम्=अनुकम्पिनं न प्राप्नोति, वस्न्यस्य=विक्रीयमाणस्य वृद्धस्याश्वस्येव द्यूतकरस्य जीवने कोऽप्यानन्दो नानुभूयते । अस्य जायां परपुरुषा अस्यैव समक्षं वस्त्राद्याकर्षणेन संस्पृशन्ति, पितरौ भ्रातरश्चापि 'न वयमिमं जानीमो बद्ध्वैनं

४. ऋक्, १।११३।२
५. तदेव, १।१२४।७
६. तदेव, १२३।१०
७. ऋक्, १०।९५।१७
८. तदेव, १०।१२९।१
९. तदेव ४।१७।२

नयत' इति वदन्ति। द्यूतकरो वारंवारं प्रतिजानीते यदहमक्षैः कदापि न क्रीडिष्यामि। एवंकृत्वा स द्यूतकराणां सङ्गं विहाय क्षणं पृथग् भवति परं यदा तैः सुहृद्भिः क्षिप्ता अक्षाः शब्दं कुर्वन्ति तदा स बलादिव नियोजितस्तत्रैवमेव गच्छति यथाऽभिसारिका संकेतस्थलम् :

द्वेष्टि श्वश्रूरप जाया रुणद्धि; न नाथितो विन्दते मर्डितारम्।
अश्वस्येव जरतो वस्न्यस्य, नाहं विन्दामि कितवस्य भोगम्॥
अन्ये जायां परिमृशन्त्यस्य, यस्यागृधद् वेदने वाज्य१क्षः।
पिता, माता, भ्रातर एनमाहुर्न जानीमो नयताबद्धमेतत्॥
यदाधीध्ये न दविषाण्येभिः, परायद्भ्योऽवहीये सखिभ्यः।
न्युप्ताश्च बभ्रवो वाचमक्रतं एमीदेषां निष्कृतं जारिणीव॥[१०]

वैदिक युगस्येयं स्वच्छन्दात्माभिव्यक्तिरुपनिषत्सु गम्भीरं रूपमादधाना समवलोक्यते। तत्र रूपकाणां प्रतीकानां च संयोजनयाऽपूर्वा गभीरता प्रसरन्ती समवलोक्यते। जीवात्मपरमात्मनोरन्तरम् :

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषष्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥[११]

शरीर-बुद्धि-मन-इन्द्रियाणायात्मनश्च सम्बन्धस्य रूपकद्वारेण शोभनाभिव्यक्तिः कृताऽस्ते :

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि, मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥[१२]

ब्रह्मणो विराट्स्वरूपमेवं विवृणोति कवि :

अग्निर्मूर्धा, चक्षुषी चन्द्रसूर्यौ, दिशः श्रोत्रे, वाग् विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य, पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा॥[१३]

संक्षेपतो वैदिक काव्ये प्राकृतिक सौन्दर्यस्य च मनोरमाणां चित्राणां भूयस्कता वर्तते। मानव सौन्दर्यमभि तेषां तत्वद्रष्टॄणां ध्यानं न्यूनतयैव गतम्। प्रेम, विस्मयः, रहस्यानुभूतिः, उत्कृष्टा कल्पना, अकृत्रिमाऽभिव्यक्तिर्वैदिककाव्यं भाविनः साहित्यस्य मूलस्रोतः साधयितुमलंकर्मीणाः सन्ति।

---

१०. ऋक् १०।३४।३–५

११. कठोपनिषद ३।४

१२. श्वेताश्वतर० ४।६

१३. मुण्डक० २।१।४

## (ख) लौकिककाव्योदयः

एषा वैदिकी कविताधारा साहित्य-भुवं सरसयन्ती मन्दं-मन्दं प्रवहमाना स्वस्य विशालरूपमीहमाऽऽनासीत् । तस्यापि संयोगः समुपलब्धोऽभूत् । तमसाया रम्यपुलिने काममोहितात् क्रौंचमिथुनादनागस्कमेकं व्यापाद्यमानमवलोक्य महर्षे-र्वाल्मीकेर्मुखात्— 'मा निषाद ! प्रतिष्ठां त्वमगमः शाश्वतीः समाः । यत्क्रौं-चमिथुनादेकमवधीः काममोहितम् ।'[१४] इति रूपेण विनिर्गता वागेव लौकिकका-व्यस्य प्रारम्भ आसीत् । आम्नायादन्यत्र नूतनश्छन्दसामवतारोऽभूत् । महाकवि-र्भवभूतिरेनमर्थमेवं निरूपयति—'तेन हि समयेन तं भगवन्तमाविर्भूतशब्दब्रह्मप्र-काशमृषिमुपसंगम्य भगवान् भूतभावनः पद्मयोनिरवोचत्—'ऋषे ! प्रबुद्धोऽसि वागात्मनि ब्रह्मणि तद् ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते चक्षुः प्रति-भातु । आद्यः कविरसि' इत्युक्त्वान्तर्हितः । अथ स भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं प्रणिनाय ।'[१५]

## (ग) महाकाव्यपरम्परा (रत्नाकरं यावत्)

### (१) विकासयुगः

वाल्मीकिरामायणं महाकाव्यानामुपजीव्यम् । यद्यपि वाल्मीकेः समक्षं महा-काव्यस्य किमपि शास्त्रीयं रूपं नासीत् परमार्षेण चक्षुषा वीक्ष्य तेन यदप्युपनि-बद्धं तल्लक्ष्यतां गतं सत्परवर्तिकाव्यशास्त्रकाराणां कृते आदर्शरूपं बभूव । महाकाव्यस्य यानि-यानि तत्त्वानि, याः याः विशिष्टता, यद्-यद् सौन्दर्यं तत्तत् सर्वमत्र सुशोभते ।

उदात्तं कथानकम्, उदात्तोद्देश्यम्, उदात्तं चरित्रम्, उदात्ता भावाः, उदात्ता शैली च महाकाव्यस्य प्रायेण निर्भ्रान्तानि तत्वानि सन्ति । महाकाव्य-स्य बह्व्यः परिभाषाः पुरातनै[१६]र्नवीनैश्च विद्वद्भिः कृताः परं साररूपतयैतत् कथयितुं शक्यते—'महाकाव्यं काव्यस्य तन्महद् रूपमस्ति यस्मिन् व्यापकं कथानकं, विराट्चरित्रकल्पना, गम्भीराभिव्यंजन शैली, विशिष्टं शिल्पविधानं, युग-चेतना, सांस्कृतिकपृष्ठफलके चित्रिताः क्रियन्ते । तस्य रचना मानवतायाः श्रेयसे प्रेयसे च भवति ।'[१७] वाल्मीकिरामायण एतत्सर्वं प्राप्यते । तत्रोदात्तं कथानकम्, उदात्तोद्देश्यम्, उदात्तानि चरित्राणि, उदात्ता भावाः, उदात्तायां शैल्यामुपनिबद्धाः सन्ति ।

---

१४. रामायणम्, वाल० २।१८
१५. उत्तररामचरितम्, अंकः २
१६. द्रष्ट०—'डा० नगेन्द्र के सर्वश्रेष्ठ निवन्ध': सम्पादकः भारतभूषणोऽग्रवालः,पृ० १२५
१७. द्रष्ट०—हिन्दी-महाकाव्यः सिद्धान्त और मूल्यांकन, डा०देवीप्रसाद गुप्तः

'वाल्मीकेरिदं काव्यं पृथ्वीतलमुद्भिद्य जातस्य विशालवटवृक्षस्येवास्ति, यत् स्वशीतलच्छायया भारतस्य समस्तेभ्यो मानवेभ्यः प्रश्रयं ददत् प्रकृतेर्विशिष्टां विभूतिमिव स्वकीयं शिर उन्नमय्य स्थितमस्ति। कस्यापि देवचरित्रस्य वर्णने रामायणस्य गौरवं नास्ति प्रत्युतादर्शमानवस्य वर्णन एव तस्य वैशिष्ट्यमस्ति। भारतीय सभ्यताया मूलं गृहस्थाश्रमः, अतएवेदं काव्यं विस्तृतां भूमिकामेवाश्रितम्। आदर्शपिता, आदर्शमाता, आदर्शभ्राता, आदर्शपतिः, आदर्शपत्नी-सर्वाण्यपि चरित्राण्यादर्शगृहधर्मस्य पट एव चित्रितानि सन्ति। अतएव भारतीया संस्कृतिरस्मिन् काव्ये पूर्वरूपेणाभिव्यक्ताऽस्ति ॥'[१८]

भारतीयललनानामादर्शभूतमिदं कथनं सीतायाश्चरित्रस्यानवद्यतां द्योतयति-

चरणेनापि सव्येन, न स्पृशेयं निशाचरम्।
रावणं किं पुनरहं कामयेयं विगर्हितम् ॥

रावणस्यान्ते रामो रावणस्यान्त्येष्ट्यर्थं विभीषणमादिशति:

मरणान्तानि वैराणि, निर्वृत्तं नः प्रयोजनम्।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥

अलंकाराणां प्रयोगोऽतितमां शोभावहः। अशोकवने सीता-दर्शनावसरे हनूमतः सन्दिग्धा बुद्धिःकियता सौन्दर्येण चित्रिताऽस्ति :

तस्य सन्दिदिहे बुद्धिस्तथा सीतां निरीक्ष्य च।
आम्नायानामयोगेन विद्यां प्रशिथिलामिव ॥
दुःखेन बुबुधे सीतां हनूमाननलंकृताम्।
संस्कारेण यथा हीनां वाचमर्थान्तरं गताम् ॥[१९]

प्रकृति-सौन्दर्य-चित्रणे वाल्मीकिः परां सफलतामाससाद। स्वाभाविकता, सरसता, सुन्दरता च वाल्मीकेः प्रकृति-वर्णनस्य विशेषताः सन्ति। तस्य काव्ये प्रकृतेर्मृदुभयावहौ रूपौ सममेव दृश्येते। नवीनाः कल्पना मनो मोहयन्तीव।[२०] नीलमेघेषु परिस्फुरन्ति विद्युद् रामाय सीतेव प्रतिभाति।[२१] तोयधाराः सुरतकालविच्छिन्ना मुक्ताहारा इव प्रतिभान्ति।[२२]

---

१८. द्रष्ट०—सं० सा० का इतिहास, बलदेव उपाध्याय, पृ० ७४

१९. रामायणम्, सुन्दर०

२० कशामिरिव हेमीभिर्विद्युद्भिरभिताडितम्।
अन्तः स्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ (किष्किन्धा० २८।११)

२१. नीलमेघाश्रिता विद्युत् स्फुरन्ती प्रतिभाति मे।
स्फुरन्ती रावणस्यांके वैदेहीव तपस्विनी ॥ (तदेव २८।१२)

२२. सुरतामर्दविच्छिन्ना स्वर्गस्त्रीहारमौक्तिकाः।
पतन्ति चातुला दिक्षु तोयधाराः समन्ततः ॥ (तदेव)

दाम्पत्यस्य सुन्दरं चित्रणं वाल्मीकौ प्राप्यते । कारुण्यस्य तु कथैव का ? 'रामायणे हि करुणो रसः स्वयमादिकविना सूचितः 'शोकः श्लोकत्वमागतः' एवंवादिना, निर्व्यूढश्च स एवं सीतात्यन्तवियोगपर्यन्तमेव स्वप्रबन्धमुपरचयता ।'[२३] वाल्मीकिर्मूलतः करुणभावस्य कविरस्ति अतएव विरहविषाद निराशा-असन्तोष-रुदनादीनामवसरेषु तस्य रागात्मकताऽनावृतरूपे करुणायां पर्यवसन्नास्ति ।'[२४]

वाल्मीकेः पार्श्वे कथनाय बह्वस्ति । तस्याः कविता-धाराऽप्रतिहतं प्रवहति, वाहयति च पाठकान् सहैव । अयत्ननिर्वर्तिता अलंकाराः, अकृत्रिमो भावविन्यासः, ललितो पदबन्धः सर्वमत्र विराजते ।

'रामायणं हि मानव-जीवनस्य व्याख्यानमस्ति । तच्छ्रेयोमार्गप्रदर्शकं ज्योतिर्विधत्ते । तत्सांसारिकव्यवहारोपदेशकाचार्यो वर्तते । तत्सदाचार-मर्म्म प्रदर्शनपरं किमप्युद्भुतमेव सरसं धर्मशास्त्रमास्ते । तन्मानवमानसगतभावानां प्रदर्शनकारिणी काप्यनिर्वचनीयेव प्रदर्शनी विलसति । तद् भारतीयायाः संस्कृतेः समुज्ज्वलानां स्वाभाविकानां च चारुतराणां चित्राणां विचित्रमेव किमपि विशालं चित्रभवनं विभाति । तत्र नीतिशास्त्रस्यार्थशास्त्रस्याध्यात्मशास्त्रस्य च चतुर्विधानामपि पुरुषार्थानां हृदयहारीणि सजीवान्यभिनयनानि विलोकितानि जायन्ते तत्कौतुकवर्धनं प्रेक्षागृहमस्ति ।'[२५]

संक्षेपतो भावपक्ष-कलापक्षयोः, वाह्यान्तः-प्रकृत्योः यथार्थादर्शयोर्वर्णने वाल्मीकिरसम एवास्ति । तस्य काव्यं परवर्तिभ्यः कविभ्यः सततं प्रेरणां वितरन्निवाभाति ।[२६]

वाल्मीकिरिव व्यासोऽपि परवर्तिनां कवीनामुपजीव्यः । महाभारते हि धर्म-राजनीति-अर्थशास्त्र-साहित्यादीनां विस्तरशः प्रतिपादनमस्ति । इदं हि कथानामाख्यानानां चैकः कान्तारः सुमहान् । महाभारतं हि पंचमवेदत्वेन स्वीक्रियते भारतीय परम्परायाम् । अस्य महत्वं प्रतिपादयताऽत्रैव कथितम् :

धर्मे ह्यर्थे च कामे च मोक्षे च पुरुषर्षभ !
यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ॥

द्वैपायनोऽपरो ब्रह्मैव प्रतीयते, महाभारतार्णवश्च तत्सृष्टिः, सूक्तयो दिव्यरत्नानि,

२३. ध्वन्यालोकः, चतुर्थउद्योतः ।
२४. संस्कृत-कविता में रोमाण्टिक प्रवृत्ति': डा० हरिश्चन्द्र वर्मा ,पृ० १२०
२५. प्रबन्धरत्नाकरः, डा० रमेशचन्द्र शुक्लः, पृ० १६३
२६. अन्यो विधाता वाल्मीकिरादिकाव्यं कमण्डलः ।
रघुनाथकथा गंगा, तया पूता जगत्त्रयी ॥ (कविराजसूरिः राघवपाण्डवीयम् १।८)

तैश्च त्रैलोक्यमलंकृतं वर्तते ।[२७]

महर्षेर्व्यासस्य कृतिरियमितिहासत्वेन स्वीक्रियते तथाप्यत्र सुन्दरकाव्यस्योदाहरणानि प्राप्यन्ते । व्यासस्य वर्णनशक्तिरद्वितीयास्ति । कथानामनुपमो भाण्डार: किमप्युपदेष्टुं, शिक्षयितुं च प्रवर्तते ।

महाभारतस्य प्रधानो रसः शान्तोऽस्ति ।[२८] वीरश्चांगम् । अनेन महर्षिरिदमेवोपदिशन्नस्ति यद् यस्य वैभवस्य कृते पुमानाजीवनं कलहायते तदसारमेवास्ति, सारं तु केवलं तदेव यत्प्राप्तव्यं भवति ।

व्यासस्य जीवनदर्शनं नितान्तं प्रेरणाप्रदम् । सोऽन्यायं न सहते । न च कायरतां प्रशंसति । 'विदुलोपाख्याने' विदुला स्वपुत्रं केन वीरांगनोचितेन रूपेण निर्भर्त्सयति :

अलातं तिन्दुकस्येव मुहूर्तमपि प्रज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ।।
मुहूर्तं ज्वलितं श्रेयो, न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद् गेहे जनिः राज्ञो मृदु स्वरः ।।
दाने, तपसि, सत्ये च यस्य नोच्चरितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ।।
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ।।
सन्तोषो वै श्रियं हन्ति तथानुक्रोश एव च ।
अनुत्थानमये चोभे निरीहो नाश्नुते महत् ।।
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं, परत्र च शुभां गतिम् ।।

व्यासस्य शैली प्रायेण सरला परं यत्रक्वचित् कूटापि । दिङ्मात्रमुदाह्रियते :

एकया द्वे विनिश्चित्य, त्रींश्चतुर्भिर्वशे कुरु ।
पंच जित्वा विदित्वा षट्, सप्त, हित्वा सुखी भवेत् ।।

---

२७. द्वैपायनोऽपरो ब्रह्मा तत्सृष्टिर्भरतार्णवः ।
सूक्तयो दिव्यरत्नानि, त्रैलोक्यं तैरलंकृतम् ।। (तदेव १।६)

२८. ''महाभारतेऽपि शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदायिनीं समाप्तिमुपनिबध्नता महामुनिना वैराग्यजननतात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया विवक्षाविषयत्वेन सूचितः । एतच्चांशेन

एकया=बुद्धया, द्वे=कर्तव्याकर्तव्ये विनिश्चित्य, त्रीन्=मित्रोदासीनशत्रून् चतुर्भिः=सामदामदण्डभेदैर्वशे कुरु । पंच=पंचेन्द्रियाणि जित्वा, षट्=सन्धि-विग्रह-यान-आसन-द्वैधीभाव-समाश्रयाख्यान् विदित्वा, सप्त='स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पंचमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च' इति सप्तसंख्यकान् दोषान् हित्वा नरः सुखी भवेदिति ।[२९]

व्यासस्य प्रकृतिवर्णनमपेक्षाकृतमनलंकृतं घटनानुसारि चास्ति प्रकृतेर्भयावहानि चित्राणि विपुलतया दृश्यन्ते। उदाहरणार्थं दमयन्त्या वन-दर्शनस्य दृश्यम् :

निकुञ्जान्पक्षिसंघुष्टान् दरीश्चाद्भुतदर्शनाः ।
नदीः, सरांसि वापीश्च, विविधांश्च मृगद्विजान् ।।
सा बहून् भीमरूपांश्च पिशाचोरगराक्षसान् ।
पल्लवानि तडागानि गिरिकूटानि सर्वशः ।।
सरितः सागरांश्चैव ददर्शाद्भुतदर्शनम् ।।[३०]

सरसान्यपि दृश्यानि दृशमाकर्षयन्ति :

स यक्षगन्धर्वसुरब्रह्मर्षिगणसेवितम् ।
विलोकयामास तदा पुष्पहेतोररिन्दमः ।।
विषमच्छदै रचितैरनुलिप्त इवांगुलैः ।
वलिभिर्धातुविच्छेदैः कांचनांजनराजतैः ।
सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः ।।
मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः ।
अभिरामदरीकुंजनिर्झरोदककन्दरम् ।।
अप्सरोनूपुररवैः प्रनृत्तवरबर्हिणम् ।
दिग्वारणविषाणाग्रैघृष्टोपलशिलातलम् ।।

---

विवृतमेवान्यैर्व्याख्याविधायिभिः । स्वयं चोद्गीर्णं तेनोद्गीर्णमहामोहमग्नमुज्जिहीर्षता लोकमतिविमलज्ञानालोकदायिना लोकनाथेन :

यथा यथा विपर्येति लोकतन्त्रमसारवत् ।
तथा तथा विरागोऽत्र जायते नात्र संशयः ।।

इत्यादि बहुशः कथयता । ततश्च शान्तो रसो रसान्तरैः, मोक्ष-लक्षणः पुरुषार्थः पुरुषार्थान्तरैस्तदुपसर्जनत्वेनानुगम्यमानोऽङ्गित्वेन विवक्षाविषय इति महाभारत-तात्पर्य सुव्यक्तमेवावभासते ।"

(ध्वन्यालोकः उद्योतः ४)

२९. सं० सा० विमर्शः, श्री द्विजेन्द्रनाथ शास्त्री, पृ० ३६२

३०. महा० वन० ६१।६, ७

स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः ।
सशष्पकवलैः स्वस्थैरदूरपरवर्तिभिः ॥
भयानभिज्ञैर्हरिणैः कौतूहलनिरीक्षितः ।
चालयन्नुरुवेगेन लताजातान्यनेकशः ॥
आक्रीडमानो हृष्टात्मा श्रीमान् वायुसुतो ययौ ।
प्रियामनोरथं कर्तुमुद्यतश्चारुलोचनः ॥[३१]

इदमत्रावधेयमस्ति यन्महाभारते प्रकृतेर्मानव–भावनाभिः साकं न तादृशी साधारणीकृतिरवलोक्यते, यादृशी रामायणे ।

इतिहास-प्रधानत्वाद् रामायणवन्महाभारते कामं तावत्काव्यत्वं न स्या–त्परं तत्त्वं प्रकामं वर्तते येनेदं परिवर्तिनां कवीनां कृते उपजीव्यतां गतम् ।[३२]

सारांशतया संस्कृत–कवीनां समक्षं वाल्मीकि–व्यासावुपजीव्यत्वेन स्थितावास्ताम्, याभ्यां प्रेरणां प्राप्य ते स्वकाव्यानि विरचयामासुः । एतद-तिरिक्तमन्यानि पुराणानि, बुद्धचरितानि, वृहत्कथाप्रभृतयोऽप्युपजीव्यतां बिभ्रति ।

## (२) उत्कर्षयुगः

यद्यपि पाणिनेः 'जाम्बवतीविजयस्य', वररुचेः 'कण्ठाभरणस्य' एवमन्येषा-मपि काव्यानां नाममात्रेण संकेता विविधेषु ग्रन्थेषु प्राप्यन्ते तथापि महा-काव्यस्य समग्रापि सुषमा कालिदास एव प्राप्यते । कालिदासे वाल्मीकिना प्रतिष्ठापितः कवितायाः मानदण्ड उदात्ते उत्कृष्टरूपे च प्राप्यते । तेन स्वकीय आत्मा पूर्णतया वाल्मीकि-कवितायां विनिर्मज्जित आसीत् । कालिदासस्तं प्रति भृशमानतोऽस्ति । रघुवंशे 'अथवा कृतवाग्द्वारे वंशेऽस्मिन् पूर्वसूरिभिः' इति कथनं वाल्मीकिपरमेवास्ति । कालिदासस्य काव्येषु कथानकाभिव्यंजनयोः, भावपक्ष–कलापक्षयोः, प्रसादमाधुर्ययोः, संस्कृति-साहित्ययोरभिरामं सन्तुलनं विलोक्यते । औचित्याचार्यस्य तस्य रचनासु रसस्योपनिषत् पूर्णतया सुरक्षिता वर्तते । हृदयपक्षस्तत्र सुतरां मुखरः । स 'सुकुमारमार्गस्य'[३३] मूर्धन्यः कविः ।

---

३१. तदेव

३२. द्रष्ट०—'ए हिस्ट्री आफ् संस्कृत लिट०,' एन. एन. दासगुप्तः एस. के. दे. प्रथमो-ऽध्यायः पृ०१, २.

३३. अम्लानप्रतिमोद्भिन्ननवशब्दार्थ बन्धुरः ।
अयत्नविहितस्वल्पमनोहारिविभूषणः ॥
भावस्वभावप्राधान्याविकृताहार्यकौशलः ।

समुचितानां विच्छित्तिजनकानामलंकाराणां योजनायां तत्समः प्रवीणोऽपरो नास्त्येव। शृंगार करुण-रसयोः सोऽप्रतिमः कविः। आदर्शचरित्राणां प्रस्तुतीकरणे तस्य समतैव नास्ति। सः कर्तव्योद्बोधको राष्ट्रियः कविः। स प्रकृतेः प्रवीणः पुरोहितः। ततः सः स्फूर्तिमासादयति। वस्तुतस्तस्य कविता देववाण्याः शृंगारोऽस्ति। माधुर्यस्य मधुरः सन्निवेशः, प्रसादस्य स्निग्धता पदानां सरसा शैया, अर्थसौष्ठवम्, अलंकाराणां मंजुलः प्रयोग-इत्यादयः कमनीय-काव्यस्य सर्वाण्यपि लक्षणानि कालिदासस्य कवितायां सुप्रतिष्ठितानि सन्ति।[३४]

कथाया मर्मस्पर्शिणां स्थलानां मूल्यांकने तस्य दृष्टिरद्वितीयैवास्ति। संवाद-योजनाप्येतावती हृद्या भवति यत्तत्रोपदिष्टं वस्तु कान्तासम्मिततया झटित्येव स्वप्रभावमुपस्थापयति। तस्योपदेशा आरोप्यमाणा न प्रतीयन्ते।

मार्गानुगुण्यसुभगो माधुर्यादिगुणोदयः।
अलंकरणविन्यासो वक्रतातिशयान्वितः॥
वृत्तौचित्यमनोहारि रसानां परिपोषणम्।
स्पर्धया विद्यते यत्र यथास्वमुभयोरपि॥
सा काप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा।
पदादिवाक्परिस्पन्दसारः साहित्यमुच्यते॥[३५]

साहित्यस्येयं रूपं तद्रचनासु राराजते।

कालिदासस्य रघुवंश--कुमारसम्भवयोर्महाकाव्ययोरादर्शकवित्वस्य परः-शतान्युदाहरणानि विद्योतमानानि सन्ति, तेषां विस्तरशश्चर्चात्रोपेक्ष्यते यतो ह्यध्यायेऽस्मिन्नस्माभिर्महाकाव्यस्य प्रवृत्तीनामध्ययनं प्रमुखतया करणीयमस्ति। तथापि द्वित्रैरुदाहरणै यत्र-तत्र वयं स्वकथनं समर्थयिष्यामः।

कस्यापि कवेः प्रावीण्यं तन्निर्वाचित कथानकेन, चरित्रचित्रणेन, तन्माध्यमेनाभिव्यक्तस्य जीवनदर्शनेन च भवति। कालिदासस्य महाकाव्ययोः कथा-

---

रसादिपरमार्थज्ञमनः संवादसुन्दरः॥
अविभावितसंस्थानरामणीयकरञ्जकः।
विधिवैदग्ध्यनिष्पन्ननिर्माणातिशयोपमः॥
यत्किंचनापि वैचित्र्यं तत्सर्वं प्रतिमोद्भवम्।
सौकुमार्यपरिस्पन्दस्यन्दि यत्र विराजते॥
सुकुमाराभिधः सोऽयं येन सत्कवयो गताः।
मार्गेणोत्फुल्लकुसुमकाननेनेव षट्पदाः॥

(वक्रोक्ति १।२५—२९)

३४. द्रष्ट०–सं० सा० का इति०, वलदेव उपाध्याय,० पृ० १८६.
३५. वक्रोक्ति०, प्रथमोन्मेषः ३४–३६

नकं चरित्रचित्रणं चानुपममेव । रघुवंशे दिलीपादग्निमित्रं यावद् रघुवंशस्यानेकादर्शपुरुषाणां चतुरतया तेन वर्णनं कृतमस्ति । कथानके प्रवाहः सततं विराजमानोऽस्ति । तस्यादर्शचरित्राणि न सामान्यानि ; ते सन्ति परमपूता आदर्शभूताः ।[36] एतादृशानां पात्राणां चरित्रचित्रणं न सामान्येन जनेन कर्तुं पार्यते । साधनापरः-निष्ठाव्रती कश्चिद् धीर एव तथा कर्तुं प्रभुः । कालिदासस्तद्विध एव ।

प्रकृतेः लक्ष्णं रूपं कालिदास-कवितायां सुप्रतिबिम्बितं वर्तते । स्वाभाविकानि चित्राण्यक्ष्णोः समन्तादाविर्भवन्तीव समवलोकयन्ते ।[37]

अलंकाराणां हृद्या साभिप्राया च योजना कालिदास-कविताया वैशिष्ट्यम् । 'अन्यूनानतिरिक्तवृत्तित्वम्' तत्रालंकाराणां प्रतिभासते । 'दीपशिखा-कालिदासस्य'[38] श्लोकः सुप्रसिद्ध एव । 'वागर्थाविव सम्पृक्तौ'[39] इत्यादि श्लोके उपमाया लावण्यमवलोकनीयं वर्तते ।

कालिदासस्याभिव्यक्तिरत्यन्तं तीव्रा भवति । स एतादृशान् बिम्बान्

---

३६. सोऽहमाजन्मशुद्धानामाफलोदयकर्मणाम् ।
आसमुद्रक्षितीशानामानाकरथवर्त्मनाम् ॥
यथाविधि हुताग्नीनां यथाकामार्चितार्थिनाम् ।
यथापराधदण्डानां यथाकालप्रबोधिनाम् ॥
त्यागाय सम्भृतार्थानां, सत्याय मितभाषिणाम् ।
यशसे विजिगीषूणां, प्रजायै गृहमेधिनाम् ॥
शैशवेऽभ्यस्तविद्यानां, यौवने विषयैषिणाम् ।
वार्धके मुनिवृत्तीनां, योगेनान्ते तनुत्यजाम् ॥
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन् ।
तद्गुणैः कर्णमागत्य चापलाय प्रचोदितः ॥
(रघुवंशम्, १।५–९)

३७. दिङ्मात्रं यथा—
(क) 'स पल्वलोत्तीर्णवराहयूथान्यावासवृक्षोन्मुखबर्हिणानि ।
ययौमृगाध्यासितशाद्वलानि, श्यामायमानानि वनानि पश्यन् ॥
(रघु० १।१७)

(ख) भागीरथीनिर्झरसीकराणां वोढा, मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥
(कुमार० १।१५)

(ग) यथावा–त्रिवेणीवर्णनम् । (रघु० १३।५४–५७)

३८. रघु० ६।६७

३९. तदेव १।१

प्रस्तौति ये हृदयस्यान्तः प्रविशन्ति ।[४०] तस्य शब्दप्रयोगो नितान्तमभिप्रायगर्भो भवति । सुभाषितानि च हृदयग्राहीणि ।

तस्य काव्येषु नारी सुप्रतिष्ठिताऽस्ति । सा हि 'गृहिणी, सचिवः, सखी मिथः, प्रियशिष्या ललिते कलाविधौ'—सर्वमप्यस्ति । तेन नार्याः कुमारी-विवाहिता-जननी-प्रभृतिरूपाणां सफलं चित्रणं कृतमस्ति । कालिदासस्य प्रतिभया संसृतौ प्रसृतस्य सौन्दर्यराशेः संकलनं विधायैतादृशी रमणीया मूर्तिश्चित्रिता योपमानरहिता ।

प्रेम्णः सुन्दरं परिपक्वं च रूपं तत्र चकास्ति । न तत्र वासना । कर्तव्याच्च्युतकारिणे प्रेम्णे कालिदासो न स्पृहयति । इदं प्रेम न केवलं मानवेष्वेवापितु जड़-चेतनेष्वपि निर्विशिष्टम् । रघोस्त्रयोदशे सर्गे समुद्र-सरितां वर्णन-प्रसंगे,[४१] कुमारसम्भवे च भगवतः शंकरस्याश्रमे कामदेवस्य प्रवेश-समये सर्वमपि चराचरात्मकं जगत् प्रेमाप्लावितं भवति ।[४२] प्रेमणि जन्म-जन्मान्तराणां संस्काराः प्रधानं निदानम् । यथा चेन्दुमत्या अजस्य वरणानन्तरं तत्रत्य स्त्रीणां भणितिभिः सिद्धं भवति ।[४३] इन्दुमत्याः स्वयम्वरावसरे राज्ञां चेष्टानां चित्रणं, किंचानेकत्र नारीणां मनोभावानां प्रकाशनं तस्य सूक्ष्मेक्षिकां द्योतयति । शिवद्वारा गृहीतायाः पार्वत्या मनोभावानां वर्णने कवेरियं कला

४०. दिङ्मात्रं द्रष्टव्याः–रघु० २।२०, ११।१०, १३।२१, १३।२८
कुमार० १।५, १।६ प्रभृतयः श्लोकाः ।

४२. मुखार्पणेषु प्रकृतिप्रगल्भाः, स्वयं तरंगाधरदानदक्षः ।
अनन्यसामान्यकलत्रवृत्तिः, पिबत्यसौ पाययते च सिन्धूः ॥ (रघु० १३।६)

४२. तं देशमारोपितपुष्पचापे, रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥
मधु द्विरेकः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृंगेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥
ददौ रसात्पंकजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन विसेन जायां सम्भावयामास रथांगनामा ॥
गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किम्पुरुषश्चुचुम्ब ॥
पर्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालौष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥
(कुमार० ३।३५-३६)

४३. रतिस्मरौ नूनमिमावभूतां राज्ञां सहस्रेषु तथाहि बाला ।
गतेयमात्मप्रतिरन्यमेव मनो हि जन्मान्तरसंगतिज्ञम् ॥ (रघु०)

सुस्पष्टास्ति ।[४४]

उपनिषदां गम्भीरता रहस्यानुभूतिश्च तदीये काव्ये स्फुटा भवति । रघुवंशस्य दशमे सर्गे देवैः कृतायां विष्णुस्तुतौ,[४५] कुमारसम्भवस्य द्वितीये सर्गे तारकासुरस्यात्याचारैः पीडितैर्देवैर्ब्रह्मणः स्तुतौ,[४६] तत्रैव च षष्ठे सर्गे ऋषिभिः कृतायां शिवप्रशस्तौ,[४७] परीक्षणार्थमायातस्य बटुरूपधारिणः शंकरस्याक्षेपानां निरासं कुर्वन्त्याः शैलाधिराजतनयायाः कथनं कालिदासस्य सरसां गभीरां रहस्यपूर्णां च भक्तिभावनामभिव्यञ्जयन्ति ।[४८]

कालिदासस्य काव्यानामुत्कृष्टताया रहस्यं तस्य व्यक्तित्वस्य महत्तायां, समन्वयभावनायां, संवेदनशीलतायाम्, आदर्शजीवनपद्धत्यां, सशक्तमभिव्यंजन-क्षमतायां चास्ति ।

"वस्तुतो न शब्दानामाडम्बरो, न चित्रता,नालंकारप्रचुरता, न वर्णनानाम-तिशयविस्तारो, न दुर्बोधा वाक्यावली, न समासानां भूयस्कता, न कठोरा ऊहा, न च वाचकवाच्यविषयिणी पीनतैव काव्यत्वमादधाति, परं तदा-धानस्य कारणमन्यदेव किमपि भवति ।" अतएव तु ध्वन्यालोककारः प्राह :

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवांगनासु ।।

इयमुक्तिः कालिदास-सदृश-द्वि-त्रिकवीन् लक्ष्यीकृत्यैव निगदिताऽऽनन्द-वर्धनाचार्येण ।[४९] इदमेव रहस्यभूतं तत्वं तं रससिद्धकोटौ निर्भ्रान्ततया स्थापयति ।

कालिदासानन्तरं तदीयां शैलीं गृहीत्वा यदि कश्चित् कलाकारोऽस्माकं सम्मुखमायाति तदा सोऽश्वघोष एव । ईशवीयप्रथमशतकारम्भे समुत्पन्नस्याश्व-घोषस्य महाकाव्यद्वयमुपलब्धमस्ति--(१) बुद्धचरितम् (२) सौन्दरनन्दं च ।

४४. तं वीक्ष्य वेपथुमती सरसांगयष्टिर्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ, न तस्थौ ।।

४५. रघु० १०।१६–३२.

४६. कुमार० २।४–१७.

४७. तदेव, ६।१३–२३.

४८. अकिंचनःसन् प्रभवः स सम्पदां, त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीयते, न सन्ति याथार्थ्यविदः पिनाकिनः ।।
विभूषणोद्भासि पिनद्धभोगि वा, गजाननावलम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं, न विश्वमूर्तेरवधार्यते वपुः ।।
(कुमार० ५।७७, ७८)

४९. प्रवन्धरत्नाकरः, डा० रमेशचन्द्र शुक्लः, पृ०२५४–५५

बुद्धचरितम् अष्टाविंशतिसर्गाणां महाकाव्यमासीत् परं संस्कृते चतुर्दश सर्गा एवोपलभ्यन्ते । चीनी भाषायां तत्पूर्णमनूदितं प्राप्यते । 'सौन्दरनन्दं' च अष्टादशसर्गात्मकं महाकाव्यमस्ति । बुद्धचरितापेक्षया सौन्दरनन्देऽश्वघोषस्य काव्यकलाऽधिकं चमत्कारपूर्णास्ति । अश्वघोषस्य कला उद्देश्यपूर्णास्ति । बुद्धधर्मस्य सन्देशं दातुं तेन स्वकाव्यस्य रचना कृतास्ति । तदीया कला 'रतये' नास्त्यपि तु 'व्युपशान्तये'[५०] परं तदीयं काव्यं मर्यादामुल्लंघ्योपदेशदानप्रवणं नास्ति । एतदवश्यमस्ति यत्स काव्यानन्दं साधनं मन्यते यदा कालिदासस्तं साध्यम् ।[५१] अयमेव दृष्टिकोणस्तदीयां कवितां कालिदासकलातः पृथक्करोति ।

अश्वघोषो मूलतः शान्तरसस्य कविरस्ति । तथापि वीर-करुण-शृंगार-रसानामपि सुन्दराणि वर्णनानि तत्कृतिषु प्राप्यन्ते । शान्तस्य कृते शृंगारस्या-बलिदानमश्वघोषस्य कलां प्रति न्यायबुद्धिमभिव्यनक्ति ।[५२]

तस्य दार्शनिकं रूपं मध्ये-मध्ये प्रकटितं संजायते । बौद्धानां दुःखवादस्य मीमांसा कियत्या सरलया सरसया च पद्धत्या कृता वर्तते :

आकाशयोनिः पवनो यथाहि यथाशमीगर्भशयो हुताशः ।
आपो यथान्तर्वसुधाशयाश्च दुःखं तथा चित्तशरीरयोनिः ।।
अपां द्रवत्वं कठिनत्वमुर्व्यां वायोश्चलत्वं ध्रुवमौष्ण्यमग्नेः ।
यथा स्वभावो हि तथा स्वभावो दुःखं शरीरस्य च चेतसश्च ।।

शान्तस्योपदेशं ददन् स शृंगारमूर्ति ललनामन्यथैव विपरिणमते । गृहग-मनायोत्कण्ठितं नन्दमवलोक्येदमुपदिश्यते यन्मनोज्ञत्वेन भासमाना प्रमदा यदि विवसना, मलिना, अस्तव्यस्ता च पुरःस्थाप्येत तर्हि सा बीभत्सेव प्रतीयेत । एतादृशीमशुचिं नारीं जर्जरभाण्डवत् कः स्प्रष्टुमिच्छेद् यदि मक्षिकापक्षतुल्यया त्वचा सा समावृता न स्यात् ?

मलपंकधरा, दिगम्बरा प्रकृतिस्थैर्नखदन्तरोमभिः ।
यदि सा तव सुन्दरी भवेन्नियतं तेऽद्य न सुन्दरी भवेत् ।।
स्रवतीमशुचिं स्पृशेच्च कः सघृणो जर्जरभाण्डवत् स्त्रियम् ।
यदि केवलया त्वचावृता न भवेन्मक्षिकपत्रमात्रया ।।[५३]

---

५०. इत्येषा व्युपशान्तये न रतये मोक्षार्थगर्भाकृतिः,
श्रोतॄणां गृहणार्थमन्यमनसां काव्योपचारात्कृता ।
यन्मोक्षात्कृतमन्यदत्र हि मया तत्काव्यधर्मात्कृम्,
पातुं तिक्तमिवौषधं मधुयुतं हृद्यं कथं स्यादिति ।।

५१. द्रष्ट०—सं० कवि दर्शन, पृ० ५७

५२. द्रष्ट०—सं० कवि दर्शन, पृ० ६१

५३. सौन्दर० ८।५१,५२

तस्य वर्णनाशैली चित्राणां प्रदर्शिनीमिवावतारयति । नन्दमेकतो बुद्धगतं गौरवं कर्षति स्म, अपरतश्च प्रियानुरागः । अनयोर्मध्ये तरंगमध्ये तरन् राजहंस इव सोऽनिश्चयवशान्नच स्थातुं प्रभुरभून्नच गन्तुमेव :

तं गौरवं बुद्धगतं चकर्ष, भार्यानुरागः पुनराचकर्ष ।
सोऽनिश्चयान्नापि ययौ न तस्थौ, तरंस्तरंगेष्विव राजहंसः ।।[५४]

यथावा—

हतत्विषोऽन्याः शिथिलांसबाहवः स्त्रियो विषादेन विचेतना इव ।
न चुकुशुर्नाश्रु जहुर्न शश्वसुर्न चेलुरासुर्लिखिता इव स्थिताः ।।[५५]

अश्वघोषस्य दृष्टिः प्रतिपाद्यविषय एव प्रधानतया संलग्ना भवति । तदीयानि काव्यानि वर्गविशेषस्य कृते न सन्ति, अपितु जनतायै सन्ति । तदीया शैली कृत्रिमा परिश्रमसाध्या च नास्ति । कामं तत्र शास्त्रीया कला प्रभूतमात्रायां न स्याद्, हृदयतो विनिःसृतं रागात्मकं तत्त्वं त्वस्त्येव ।[५६]

अश्वघोषः स्वभावेन कविः, शिक्षया प्रकृष्टः पण्डितस्तथा हार्दिक-विश्वासेन धार्मिकोऽस्ति ।[५७] तदीयकविताया मर्म गम्भीरधर्मप्रवणतायां सन्निहितं वर्तते ।

निष्कर्षरूपेणेदं कथयितुं शक्यते यत्कालिदासीयपरम्परायामश्वघोष एकं जाज्वल्यमानं रत्नमस्ति । कवित्व-वैराग्ययोः, कलाकारत्व-निःस्पृहत्वयोः, दार्शनिक-प्रचारकयोरेतादृशा सुन्दरः समन्वयोऽन्यत्र दुर्लभ एव । एतेन दुर्लभसंयोगेन तदीया कविता सामान्यस्तरत उपर्युत्थिता प्रतिभाति ।

संस्कृत-महाकाव्यस्योत्कर्षयुगस्येभावुभावपि कवी मूर्धन्यौ स्तः । एतयोरनन्तरमियं पद्धतिर्जानकीहरणकर्तारं कुमारदासं परिहाय नान्येन केनापि परिपालिता । कुमारदासस्य प्रशंसायां राजशेखरेण साधूक्तम्—

जानकीहरणं कर्तुं रघुवंशे स्थिते सति ।
कविः कुमारदासश्च रावणश्च यदि क्षमौ ।।

## (३) ह्रासयुगः

कालिदासाश्वघोषयोरनन्तरमाचार्याः सक्रिया अभूवन् । लक्ष्यग्रन्थानां बाहुल्याद् आचार्याणां शेमुषी काव्यभेदानामुपरि विचारं कृतवती । भरतानन्तरमनेकशताब्द्योऽस्माकं समक्षमन्धकारावता एव समायान्ति । षष्ठे शतके

५४. सौन्दर० ४।४२
५५. तदेव, ४।३४
५६. द्रष्ट०—सं० कवि० दर्शनम्, पृ० ६७.
५७. द्रष्ट०—'ए हिस्ट्री आफ संस्कृत लिटरेचर' प्रथम खण्डः, एस. एन. दासगुप्तस्तथा एस. क़े. दे., पृ० ७६.

भामहस्य 'काव्यालंकारेण' वयं काव्यशास्त्रसम्बन्धिनामाचार्याणां विचारपरम्परायाः प्रारम्भमवगच्छाम: । भामहस्य काव्यलक्षणे भावपक्ष-कलापक्षयोः सन्तुलनं दृश्यते ।[५८] भामहः कृत्रिमतां न प्रोत्साहयति ।स प्रसन्नां शैलीं प्रशंसति।[५९] परमेतत् स्पष्टं यत्ततोऽपि पूर्वं कृत्रिमा शैली काव्यजगति प्रचलिता बभूव । परवर्तिनः कवयो ऋजुपद्धतिं नाकामयन्त, ते तु काव्यतुरंगं 'वल्गाविभाग-कुशलम्' अश्वारोहिणमिवानेकासु वीथिकासु संचारयितुमुत्सुका आसन् ।[६०]

दण्डिनः काव्यलक्षणस्य [६१] परीक्षणेन ज्ञायते यद् यद्यपि तत्र वर्णनीयानां विषयाणां भूयस्कता वर्तते परं स सन्तुलनस्य पक्षधरो नास्तीति तु केनापि कथयितुं न शक्यते ।

परं कवीनामाग्रहो विचित्रतायां, शब्दानामैन्द्रजालिकतायां, विविधचमत्कारपरम्परायामेवाभूद् येन शैली प्रधाना संवृत्ता, प्रतिपाद्यं च गौणम् । अश्वघोषं यावत् कथावस्तुनो निर्वाहे रसनिष्पत्तौ च कविरवधानवान् भवति स्म, परं परवर्तिभिः कविभिः कथावस्तुना साकमतितमामन्यायो विहितः । एका कृत्रिमा शैली विकसिता यस्यां कविताया मानदण्ड एव परिवर्तितोऽभूत् । एतादृशी प्रवृत्तिर्नूनं पर्याप्तकालात् पूर्वमेव प्रचलिताभविष्यत् । महाकाव्येषु भारविरेवास्याः प्रवर्तयिताऽत्रलोक्यते । प्रतीयते यद् दण्डिना स्व काव्यलक्षणं किरातार्जुनीयमेव सम्मुखे निधाय विहितं भवेत् ।

---

५८. सर्गबन्धो महाकाव्यं महतां च महच्च तत् ।
अग्राम्यशब्दमर्थ्यं च सालंकारं सदाश्रयम् ॥
मन्त्रदूतप्रयाणाजि नायकाभ्युदयैश्च यत् ।
पंचभिः सन्धिभिर्युक्तं नातिव्याख्येयमृद्धिमत् ॥
चतुर्वर्गाभिधानेऽपि भूयः सार्थोपदेशकृत् ।
युक्तं लोकस्वभावेन रसैश्च सकलैः पृथक् ॥
नायकं प्रागुपन्यस्य वंश–वीर्य–श्रुतादिभिः ।
न तस्यैव वधं ब्रूयादन्योत्कर्षाभिधित्सया ॥
(भामहः, काव्यालंकारः, परि० १, १९–२२)

५९. माधुर्यमभिवांच्छन्तः प्रसादं च सुमेधसः ।
समासवन्ति भूयांसि पदानि च प्रयुञ्जते ॥
केचिदोजोऽभिधित्सन्तः समस्यन्ति बहून्यपि ।
श्रव्यं नातिसमस्तार्थं काव्यं मधुरमिष्यते ।
आविद्वदंगनाबालप्रतीतार्थं प्रसादवत् ॥ (तदेव)

६० द्रष्ट–सं० कवि-दर्शन, पृ० ३०.

६१ काव्यादर्शः, प्रथमः परिच्छेदः, कारिकाः १४—१९

किरातार्जुनीयानन्तरं महाकाव्यकाराणां सम्मुखे स्पष्टतया मार्गद्वयमासीद्–एकः कालिदासीयः'सुकुमाराभिधो'ऽपरश्च भारविणा प्रतिष्ठापितो 'विचित्राभिधः'। चमत्कारप्रियैः कविभिरपर एव मार्ग उररीकृतः । पूर्वापेक्षयाऽग्रिमः कविरस्यां दिशि स्वपूर्ववर्तिनमधरीकर्तुमिवेयेष । भारवि–भट्टि–माघानां काव्यानि चमत्कारबहुलानि सन्ति । अस्य मार्गस्य कवीनां प्रवृत्तयः समासेनेत्थं निरूपयितुं शक्यन्ते :

(१) महाकाव्यानां स्वाभाविकता, नैसर्गिकी सुषमा, सहजावदातता च या वाल्मीकि–प्रभृतीनां सुकुमारमार्गीय कवीनां वैशिष्ट्यमस्ति अत्र दुर्लभैवास्ति ।

(२) प्रतिपाद्यं कथानकं वोपेक्षितं बभूव, शैली एव प्रधाना संवृत्ता ।

(३) काव्यानि पाण्डित्य–प्रदर्शनस्य माध्यमानि समजायन्त कवयः स्वकीयां वैदुषीमनेकप्रकारैः प्रकाशने बद्धपरिकरा अभूवन् ।

(४) काव्यानि मृद्वीका–रस–सम्मितानि नाभूवन्नपि तु ग्रन्थ–ग्रन्थिभिर्लौहचणकानीव कुत्रचित् संवृत्तानि । एषां शास्त्रकाव्यानां विषये 'कोषं पश्यन् पदे-पदे' इत्युक्तिश्चरितार्था भवति ।

(५) चित्रबन्धेषु कवीनामतितमामाग्रहोऽभूद् येषां चक्रव्यूहे कविता-कामिनी एवं भ्रान्ताभूद् यत्तस्याः सहजतैव विलीनतां गता । माघस्य शब्देषु 'महाकाव्यं सर्वतोभद्रचक्रगोमूत्रिकादिभिः विषमम् अभवत्' ।[६३]

(६) काव्ये रूढीनामेव प्राबल्यमभूत् । रूढयोऽपि ऋतुवर्णन–सूर्योदय–सूर्यास्त-जलक्रीडा–प्रसाधनादीनि बाह्यवर्णनान्याश्रित्यैव स्थापिता अभूवन् ।

(७) काव्यस्य क्षेत्रं सहृदयरसिकानां हस्तान्निर्गत्य पण्डितानामेवाधिकारे समागतमभूत् । काव्यानि 'व्याख्यागम्यान्यभवन्' ।

(८) काव्यास्वादः सुदीर्घमानसिकव्यायामानन्तरमेव प्राप्तुं सम्भवोऽभूत् 'सद्यः परनिर्वृत्यात्मकं' काव्यस्योद्देश्यं पृष्ठतो गतमभूत् ।

(९) मानव-मनोभावानां तादात्म्येन चित्रिता प्रकृतिरप्यस्मिन् काले कृत्रिमतया चित्रिताभूत् । तस्या उद्दीपनरूपमेव प्रायेणावलोक्यते । अप्रस्तु-

---

६२. यातास्ते रससारसंग्रहविधिं निष्पीड्य–निष्पीड्य ये,
वाक्तत्त्वेक्षुलतां पुरा कतिपये तत्त्वस्पृशश्चक्रिरे ।
जायन्तेऽद्य यथायथं तु कवयस्ते तत्र सन्तन्वते,
येऽनुप्रासकठोरचित्रयमकश्लेषादि शल्कोच्चयम् ॥
(मंखकः, श्रीकण्ठचरितम् २।४२)

६३. शिशु० १९।४१.

तविधानं सहजतामत्यजत् ।

(१०) अस्मिन् काले 'स्वान्तः सुखाय' कस्यापि महदुद्देश्यस्य स्थापनाय वा काव्यनिर्माणे महाकवीनां प्रवृत्तिर्नाभूदपितु 'गुरुकुलक्लिष्टतया'[६४] सततविद्याभ्यासेन च महाकवित्वपदलाभ एव तेषां लक्ष्यमभूत् ।

(११) साहित्याचार्याः 'सकलसत्कविकाव्योपनिषद्भूतम्, अतिरमणीयम्, अणीयसीभिरपि काव्यलक्षणविधायिनां बुद्धिभिरनुन्मीलितपूर्वम्'[६५] तत्वं गवेषयितु साधनारता आसन्, कवयश्च काव्यस्य स्थूलाभोगं तुन्दिलं विधातुमेव प्राणपणेन संलग्ना आसन् ।

आनन्दवर्धन आशावानासीद् यत्काव्यानुरूपस्य ध्वनिमार्गस्याज्ञातत्वात् कवय एतत्कालपर्यन्तं कामं चित्रकाव्यं प्रति संरम्भवन्तो बभूवुः, परं ज्ञाते ध्वनिप्रस्थाने आगामिनः कवयो रसाभिनिवेशिनो भविष्यन्ति,[६६]परमियमाशा दुराशैवाधिकांशेन सिद्धाभूत् । कवीनां चित्रं प्रति प्रेम सीमातिशाय्येवाभवत् । आचार्यत्वमपि च प्रसिद्धेरनुरोधाद् बाध्यमिवासीत् ।[६७]

(१२) प्रेम्णः सहजानि गभीराणि च चित्राणि प्रायेण न प्राप्यन्ते । तत्र हृदयस्य स्पन्दनं नास्ति । शृंगारवर्णनानि तात्कालिक–सामन्तप्रथानुकूलानि ।

(१३) नारी-प्रतिष्ठापि न तादृशी । सा 'भोग्या'-रूप एव प्रायेण चित्रितास्ति । तस्याः समर्पणभावनायाः, त्यागस्य, तपस्यायाश्चोपरि तेषां दृष्टिरेव न गता ।

(१४) 'तीक्ष्णा नारुन्तुदा बुद्धि'रस्य नियमस्य वैपरीत्यमिवास्मिन् काले सम-

---

६४. अनर्घराघवे मुरारिकविः :

देवीं वाचमुपासते हि वहवः सारं तु सारस्वतं,
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ।
अब्धिर्लङ्घित एव वानरभटैः किन्त्वस्य गम्भीरता–
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ॥

६५. ध्वन्यालोकः, प्रथमोद्योतः ।

६६. ......... इदानीन्तनानान्तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्यैव ध्वनि–व्यतिरिक्तः काव्यप्रकारः । यतः परिपाकवतां कवीनां रसादितात्पर्यविरहे व्यापार एव न शोभते । रसादितात्पर्ये च नास्त्येव तद्वस्तु यदभिमतरसांगतां नीयमानं न प्रगुणीभवति । अचेतना अपि भावा यथायथमुचितरसविभावतया, चेतनवृत्तान्तयोजनया वा न सन्त्येव ते यान्ति न रसाङ्गताम् । (ध्वन्यालोकः, तृतीयोद्योतः, कारिका ४३),

६७. 'रसगंगाधर का शास्त्रीय अध्ययन' : डा० प्रेमस्वरूप गुप्तः, पृ० ७५.

दृश्यत। कल्पनाशक्तिस्तीक्ष्णतायाश्चरमकोटिं भजमानापि कविता-कामिन्याः कृतेऽरुन्तुदैव क्वचित्क्वचिज्जाता। सा मस्तिष्कं विस्मयविमूढं करोति परं हृदयमानन्दतुन्दिलं न विदधाति।

(१५) एतेषां कवीनां कविता तस्मिन् काले परिशीलनस्य वस्तु नास्ति यदा हृदयं भावपूर्णं भवति, मस्तिष्कं च रिक्तं, मस्तिष्कस्य सावधानता, पूर्णता चैतेषां काव्यानामवबोधाय नितान्तमपरिहार्या।[६८]

निष्कर्षरूपेणेदं कथयितुं शक्यते यत्कालिदासोत्तरकवीनां काव्यं बुद्धिवैभवस्य, शास्त्राभ्यासस्य, सीमातिक्रान्तचमत्कारस्य च प्रयोगस्थलं वर्तते। नियमेषु निगडिता तेषां कविता-कामिनी विवशेव प्रतीयते।

भारविणा यः कविताया मानदण्डः स्थापितो माघेन तस्मिंश्चमत्कार उत्कर्षश्चापादितः, परं रत्नाकरेण तु स परां काष्ठां प्रापितः। रत्नाकरस्य काव्याध्ययनं विना चमत्कारयुगस्य काव्यानां वास्तविकं मूल्याङ्कनं कर्तुं न शक्यते।

## (घ) हरविजयम् : एकं पारम्परिकं विचित्रमार्गीयं च महाकाव्यम्

रत्नाकरस्य समक्षे चमत्कारप्रधानानां महाकाव्यानामेका विशिष्टा परम्पराऽऽसीत्। स सर्वानपि स्वपूर्ववर्तिनः कवयोऽधःकर्तुं स्वकीयं महाकाव्यं विरचितवान्। हरविजये महाकाव्यस्य सर्वाणि लक्षणानि प्राप्यन्ते। भामहदण्डीतोऽप्यधिकं तस्य महाकाव्ये रुद्रटस्य लक्षणं सर्वथा संघटते।

रुद्रटेन प्रबन्धकाव्यानामुत्पाद्यानुत्पाद्यभेदेन द्विधा विभाजनं कृतमास्ते।[६९] कविकल्पितमुत्पाद्यं भवति यथा बाणभट्टस्य कादम्बर्यां धनपालस्य तिलकमंजर्यां वा। शिशुपालवधं हरविजयं चोत्पाद्यकोटावेव समागच्छतः।[७०] येषु चतुर्वर्गस्योपन्यासो भवति, यथास्थानं सर्वेषां रसानां चाभिव्यञ्जनं क्रियते ते महाप्रबन्धा भवन्ति। येषु च चतुर्वर्गादन्यतमस्योपनिबन्धनं भवति, समग्रा रसा न भवन्ति, अथवा समग्रे प्रबन्ध एक एव रसो भवति, ते लघुप्रबन्धा

---

६८. सं० कवि-दर्शन, पृ० ३२

६९. सन्ति द्विधा प्रबन्धाः काव्यकथाख्यायिकादयः काव्ये।
उत्पाद्यानुत्पाद्या महल्लघुत्वेन भूयोऽपि॥
(रुद्रटः, काव्यालंकारः १६।२)

७०. तत्रोत्पाद्या येषा शरीरमुत्पादयेत्कविः सकलम्।
कल्पितयुक्तोत्पत्तिं नायकमपि कुत्रचित् कुर्यात्॥
(तदेव १६।३)

भवन्ति ।[७१]

उत्पाद्ये महाप्रबन्धे (महाकाव्ये) निम्नलिखितविषया विनिवेशनीया :

तत्रोत्पाद्ये पूर्वं सन्नगरीवर्णनं महाकाव्ये ।
कुर्वीत तदनु तस्यां नायकवंशप्रशंसां च ।।
तत्र त्रिवर्गसक्तं समिद्धशक्तित्रयं च सर्वगुणम् ।
रक्तसमस्तप्रकृतिं विजिगीषुं नायकं न्यस्येत् ।।
विधिवत्परिपालयतः सकलं राज्यं च राजवृत्तं च ।
तस्य कदाचिदुपेतं शरदादि वर्णयेत्समयम् ।।
स्वार्थं मित्रार्थं वा धर्मादि साधयिष्यतस्तस्य ।
कुल्यादिष्वन्यतमं प्रतिपक्षं वर्णयेद् गुणिनम् ।।
स्वचरात्तद्दूताद्वा कुतोऽपि शृण्वतोऽरिकार्याणि ।
कुर्वीत सदसि राज्ञां क्षोभं क्रोधेद्धचित्तगिराम् ।।
सम्मन्त्र्य समं सचिवैर्निश्चित्य च दण्डसाध्यतां शत्रोः ।
तं दापयेत्प्रयाणं दूतं वा प्रेषयेन्मुखरम् ।।
अथ नायकप्रयाणे नागरिकाक्षोभजनपदाद्रिनदीः ।
अटवीकाननसरसीमरुजलधिद्वीपभुवनानि ।।
स्कन्धावारनिवेशं क्रीडां यूनां यथायथं तेषु ।
रव्यस्तमयं, सन्ध्यां, सतमसमथोदयं शशिनः ।।
रजनीं च तत्र यूनां समाजसंगीतपानशृंगारान् ।
इति वर्णयेत् प्रसंगात् कथां च भूयो निबध्नीयात् ।।
प्रतिनायकमपि तद्वत्तदभिमुखममृष्यमाणमायान्तम् ।
अभिदध्यात् कार्यवशान्नगरीरोधस्थितं वापि ।।
'योद्धव्यंप्रातरिति' प्रबन्धमधुपीतिनिशि कलत्रेभ्यः ।
स्ववधं विशंकमानान् सन्देशान् दापयेत् सुभटान् ।।
सन्नह्य कृतव्यूहं सविस्मयं युध्यमानयोरुभयोः ।
कृच्छ्रेण साधु कुर्यादभ्युदयं नायकस्यान्ते ।।

---

७१. तत्र महान्तो येषु च विततेष्वभिधीयते चतुर्वर्गः ।
सर्वे रसाः क्रियन्ते काव्यस्थानानि सर्वाणि ।।
ते लघवो विज्ञेया येष्वन्यतमो भवेच्चतुर्वर्गात् ।
असमग्रानेकरसान्, ये च समग्रैकरसयुक्ताः ।।

सर्गाभिधानि चास्मिन्नवान्तरप्रकरणानि कुर्वीत ।
सन्धीनपि संश्लिष्टांस्तेषामन्योन्यसम्बन्धात् ॥[७२]

इमे सर्वेऽपि विषया हरविजये प्राप्यन्ते । चमत्कारप्रधानानां महाकाव्यानां परम्परायाः सर्वोत्कृष्टप्रतिनिधिरूपेण काव्यमिदं कविभ्यः काव्येभ्यश्च दत्तपत्रमिव प्रतीयते ।

७२. रुद्रटः, काव्यालंकारः, १६.

द्वितीयोऽध्यायः

# महाकवी रत्नाकरः-व्यक्तित्वं कर्तृत्वञ्च

## (क) पीटिका

क्रौञ्चद्वन्द्ववियोगोत्थशोकात् श्लोकत्वमागताऽऽदिकवेर्निर्व्याजमनोहरा कविताधारा कालिदासस्य सरले, सरसेऽलंकृते च परिधान आत्मानं परिवेष्टयन्त्येतादृशे विचित्रे मार्गे प्रवाहिता यत्र तस्या गतिरनेकेष्वावर्तेषु, गर्तेषु, शैलमालासु च तिरोहितेव संवृत्ता। स्वाभाविकतायाः पदं कृत्रिमतया गृहीतम्। हृदयपक्षो दुर्बलो बभूव, मस्तिष्कपक्षश्च प्राबल्यमवाप। आर्षाणि महाकाव्यानि खनि-निर्गत-मणय इवासन् येषु परिमार्जनस्य बह्ववसर आसीत्। कार्यमिदं कविकुलगुरुणा कालिदासेनातिकौशलेन सम्पादितम्। तस्य रससिद्धत्वे नास्ति संशीतिलेशः। तस्य जरामरणभयविनिर्मुक्तं काव्यमद्यापि सहृदय-समाजस्य कण्ठहारोऽस्ति।

ततः परमश्वघोषेण सा परम्पराग्रे सारिता। परं भारवि-माघ-भट्टिभिरेतादृशो विचित्रो मार्गोऽवतारितो[1] यस्मिन् शैली प्रधाना संवृत्ता आत्मा च गौणः। गद्येऽपि सुबन्धु-दण्डी-बाणैरियमेवालंकृता शैली प्रोत्साहिता। रसाभिनिवेशिन्यपि बाणस्य प्रवृत्तिरलंकृत-मार्ग-प्रोत्साहन-दोषेण सर्वथा मुक्ता नास्ति। वस्तुतस्तात्कालिवयः साहित्यिकपरिस्थितय एवैतादृश्य आसन्। तदानीन्तना आचार्या अपि विचित्रमार्गमेव संरक्षितवन्तः।

उत्तरवर्तिभिश्च कविभिरियं मान्यता इयत्या दृढतयाऽङ्गीकृता यत्कथाप्रवाहः काव्ये नितान्तं गौणो बभूव, शब्दानामैन्द्रजालिकतैवावलोचकान् चमत्कृतचक्षुष्कान् व्यधत्त। महाकविरवीन्द्रनाथठक्कुरस्य शब्देषु-"दी स्टोरीज़ आर अम्ब्रै ला-वियरर, दी लैंग्वेज इज़ दी किंग।" इयं प्रवृत्तिरनन्तरमियती प्रवृद्धा

---

१. द्रष्ट०-बलदेव उपाध्यायः, 'संस्कृत साहित्य का इतिहास', पृ० १५९-६२.

बभूव यत्काव्यानां सम्बन्धेऽपि कोषं पश्यन् पदे पदे' इयमुक्तिरन्वर्था बभूव। भारवेः 'किरातार्जुनीयम्' माघस्य 'शिशुपालवधम्' भट्टेश्च 'रावणवधकाव्यम्' अस्या एव परम्परायाः सोपानानि सन्ति।

भट्टेरिदं कथनम् :

दीपतुल्यः प्रबन्धोऽयं शब्दलक्षणचक्षुषाम्।
हस्तादर्श इवान्धानां भवेद् व्याकरणादृते॥
व्याख्यागम्यमिदं काव्यमुत्सवः सुधियामलम्।
हता दुर्मेधसश्चास्मिन् विद्वत्प्रियतया मया॥[२]

तदानीन्तननां कवीनां मनोवृत्तिं सूचयति। विविध-शास्त्राणां व्युत्पत्तिप्रदर्शने, नगर-सागर-नदी-पर्वत-ऋतु-सूर्योदय-सूर्यास्त-जलक्रीडा-सुरत-युद्धादीनां वर्णनेषु कविभिः स्वकीया बुद्धिः सन्निवेशिता। अलंकरणस्य सर्वग्रासिनी प्रवृत्तिः साहित्य-सौहित्यं निगीर्णयामास। विविधा बन्धाः, एकाक्षर-द्व्यक्षर-अनुलोम-प्रतिलोम-मात्राच्युतकप्रहेलिकादीनां प्रादुर्भूता भेदाः पाठकान् चिल्लचक्षुष्कान् विधातुं तु समर्था अभूवन् परं हृदय-कलिका-विकासेऽसमर्था एवातिष्ठन्। वस्तुतोऽयं कवितायाः सर्वात्मना ह्रासस्य युग आसीत्। क्व कालिदासस्य रस-भाव-निरन्तरः कविताया अनुपमो विलासः, क्व चालंकाराणां शब्दचित्राणां चेयं प्रदर्शनी ? किं कथायां, किमलंकार-योजनायां, किं भावानामभिव्यक्तौ—सर्वेष्वेव निरन्तरं ह्रासोऽस्माभिरवलोक्यते। कथावस्तुनो मार्मिकस्थलानां परिचिन्वनस्य याऽपूर्वा शक्ति कालिदासेऽस्ति सा शब्दकुतूहलीष्वेषु क्व ? प्रकृतिरप्येतादृशी समलंकृता चित्रिता यत्तस्या नैसर्गिकी सुषमाप्याक्रान्ता बभूव।

तात्कालिकी साहित्यिक-परिस्थितिरभिजातवर्गस्य विलासपूर्णं जीवनं, शासकानां पारस्परिको द्वेषभावः, विदुषां राजसभासु स्थितिः–एभिः सर्वैर्हेतुभिरेकीभूयैतादृग्वातावरणं विनिर्मितं यत्र एतादृशीभ्यो रचनाभ्यो रचनान्तराणां प्रादुर्भावः सम्भवः एव नासीत्।[३] शब्दान्तरेषु ह्रासयुगापेक्षया 'पाण्डित्य-कालः' इयमभिधाऽस्य कालस्य कृतेऽधिकं समुचिता स्यात्।[४]

एतादृशे काले रत्नाकरस्य प्रादुर्भावोऽभूत्। दायरूपे प्राप्तेयं परम्परा सुपात्रेणेव रत्नाकरेण नित्यमभिवर्धिता, स्वाप्रतिमेन पाण्डित्येन विलक्षणया वर्णन-

---

२. भट्टिकाव्यम्, २२।३३–३४.
३. द्रष्ट०–'संस्कृत–कवि–दर्शन'–डा० भोलाशंकरव्यासः, पृ० ११८.
४. 'ए क्रिटिकल स्टडी, आफ़ नैषधीयचरितम्' : डा० जानी, पृ० २४०.

शक्त्या च तेन सर्वेऽपि चामत्कारिका: कवयोऽधःकृता: । राजशेखरानुसारं वयमस्य गणनाम् 'उभयकवि' -भेदे कर्तुं शक्नुम: ।[५] शास्त्राणामप्रतिहता वैदुषी, यत्रेच्छति तत्र रसं प्रत्यवधानवता, स्वसमये प्रचलितासु सर्वासु शैलीषु काव्यरचना रत्नाकरं काव्य-जगतो रत्नाकरं साधयितुं समर्था: सन्ति । युगपदेव पाण्डित्य-वैदग्ध्ययोरेतादृशो मंजुल: सन्निवेशोऽन्यत्र न प्राप्यते ।

## (ख) रत्नाकरस्य स्थितिकाल:

रत्नाकरस्य स्थितिकाल-विषये काचिद् विप्रतिपत्तिर्नास्ति ।

(१) कल्हणेन (११४८ ई०) स्वराजतरंगिण्याभवन्तिवर्मण: सभाया अलंकारभूतत्वेन रत्नाकरस्य संकेत: कृत: :

मुक्ताकण:, शिवस्वामी, कविरानन्दवर्धन: ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मण: ।।[६]

अवन्तिवर्मण: शासन-काल: (८५५-८८४ ई०) वर्तते ।

(२) क्षेमेन्द्रेण (१०५० ई०) स्व 'सुवृत्ततिलके' अस्य 'वसन्ततिलका' वृत्तस्य प्रशंसा कृतास्ति ।

(३) नवम शताब्द्यामुत्पन्नेन राजशेखरेणाप्यस्य प्रशंसा कृतास्ति ।

(४) मुरारिकवि[७] कुनाटककृद्रूपेणायं कवि: संकेतयति । यदि चासावनर्घराघवस्यैव कता तदा तस्य 'अनर्घराघवाद्' अतिरिक्ता काचित्कृतिरभूद् यस्यां नायकवध: कारित: । मुरारिकवेश्च काल: ८०० ई० वर्तते ।

(५) रत्नाकरो बाणं स्व प्रशस्तौ सादरं सस्मार । बाणस्य च काल: सप्तम शताब्दया: पूर्वार्धो वर्तते । एवं रत्नाकरस्य पूर्वापरसीमा निर्धारिता भवति ।

परं सीमानिर्धारणस्य प्रश्न एव न समुदेति । कल्हणस्योक्तो लेखस्तस्य कालनिर्धारणे पुष्टं प्रमाणम् । किन्त्वयं कवि: 'हरविजयस्य प्रत्येकं सर्गस्य पुष्पिकायां लिखति-"इति श्री बालबृहस्पत्यनुजीविनो वागीश्वरांकस्य विद्याधिपत्यपरनाम्नो महाकवे राजानकश्रीरत्नाकरस्य कृतौ रत्नांके हरविजये महा—

---

५. काव्यमीमांसा—राजशेखर:, अ० ४.

६. कल्हण:, राजतरंगिणी, ५।३९.

७. अंके कुनाटक इवोत्तमनायकस्य, नाशं कविर्व्यधित यस्य : मुरारिरित्थम् ।
आक्रान्तकृत्स्नभुवन: क्व गत: स दैत्यनाथो हिरण्यकशिपु: सह बन्धुमिर्न: ।।
(हर० ३८।६८)

काव्ये······सर्गः।" अयं 'बालवृहस्पतिः' काश्मीर-शासकः 'चिप्पटजयापीड' आसीत्। अस्य शासनकालः ७७६-८१३ ई० आसीत्। यतोह्यमद्भुत-रूपेण मेधावी आसीद् अतएव 'बालवृहस्पतिः' इति कथ्यते स्म। तस्याल्पा-युष्कत्वद्योतको 'बाल' शब्द इत्यत्र संयुक्तः प्रतीयते। यथाह कल्हण :

श्री चिप्पडजयापीडो वृहस्पत्यपराभिधः।
ललितापीडजो राजा शिशूद्देश्यस्ततोऽभवत्॥[८]

एवं स्थितेऽवन्तिवर्मणः सभापण्डितत्वं रत्नाकरेण स्ववृद्धावस्थायामेव स्वीकृतं भवेत्। हरविजयस्य रचना तु 'चिप्पडजयापीडस्य' सभायां निवसतैव तेन कृता भवेत् परमवन्तिवर्मणा तस्य समादरः कृतो भवेत्। अतएव 'प्रथां रत्ना-करश्चागात्' इत्यत्र 'प्रथा' शब्दस्य प्रयोगः कृतोऽस्ति। वस्तुतः श्लोकेऽस्मिन् गणिताः सर्वेऽपि विद्वांसः बहोः कालात् पूर्वत एव साहित्य-साधनायां संलग्ना आसन्, तेषां गुणग्राहिणावन्तिवर्मणा स्व शासनकाले कीर्ति—प्रसारे भूयान् योगो दत्तः।

एवं रत्नाकरस्य स्थितिकालोऽष्टशताब्याश्चरमार्धात् नवमशताब्दया उत्तरार्धं यावन्निर्धारितो भवति।

स शारदादेशं काश्मीरं[९] स्व जनुषालंचकार। तस्य पितुर्नाम 'अमृतभानु-रासीत्' तस्य पितामहस्य नाम 'दुर्गदत्त' आसीत्। निवासस्थानं च 'गंगा-ह्रदः"[१०]। तस्य विषयेऽन्यत्किमपि न ज्ञायते। स्वजीवने तेन विद्याधिपतित्व-मर्जितं, वागीश्वरता च प्राप्ता। राज्य-सत्कारः, सर्वं सांसारिकं सुखं चोपलब्धम्।

## (ग) रत्नाकरस्य व्यक्तित्वम्

रत्नाकरस्य व्यक्तित्वमप्रतिहतवेगेन प्रवहमानाया धाराया इवास्ति यस्याः साम्मुख्यकरणस्य सामर्थ्यं कस्मिन्नपि नास्ति। तस्य व्यक्तित्वस्य सर्वाति-शायी पक्षोऽस्ति तस्याद्वितीयं पाण्डित्यम्। वेद-उपनिषद्-व्याकरण-न्याय-वेदान्त—सांख्य-योग—धर्मशास्त्र—अर्थशास्त्र—कामशास्त्र—ज्यौतिष—नाट्यशास्त्र—पुराण—वैशेषिक—मीमांसादीनामतिरिक्तं जैन—बौद्ध—कौल—लोकायतिकादीनां

८. कल्हण, राज०, ४।६७६.

९. द्रष्ट०—विश्व—संस्कृत—शताब्दी—ग्रन्थः (जम्बू—कश्मीर—राज्य—भागः) अखिल भारतीय संस्कृत—सम्मेलनम्, दिल्ली.

१० हर०, प्रशस्तिः, श्लोकः १.

श्री दुर्गदत्तनिजवंश-हिमाद्रि—सानु—गंगाह्रदाश्रयसुतामृतभानुसूनुः।
रत्नाकरो ललितबन्धमिदं व्यधत्त चन्दार्धचूडचरिताश्रयचारु काव्यम्॥

नास्तिक दर्शनानां, शैव-शाक्तागमानां च पूर्णतया मन्थनं तेन कृतमासीत्। पशुपक्षिणामपि ज्ञानं तस्य तलस्पर्शि आसीत्।[११] एतादृशीं विस्मय-विमूढता-मुत्पादयदद्भुतं पाण्डित्यमद्य १२०० वर्षाणि गच्छन्ति, महाकवि श्रीहर्षं विहायान्यस्मिन्न प्राप्यते, परं बहुषु स्थानेषु रत्नाकरस्य पाण्डित्यं तमप्यतिशयदिवात्रलोक्यते।

तस्य व्यक्तिगतरुचेः परिचयस्तस्य कृतिभ्यः प्राप्यते। स विनोदप्रियः, सरसः, स्वस्थमनोवृत्तेश्च पुरुष आसीत्। तस्य सांसारिकोऽनुभवो विशाल आसीत्। उन्नतिशिखरमारूढवतस्तस्य सम्पर्कोऽनेकप्रकारकैः पुरुषैः सहाभूत्। दुर्जनैरपि स व्यथामाप। अतएव ३८ सर्गे तेन सज्जनानां दुर्जनानां च विषयेऽनेकशः स्व विचाराः प्रकाशिताः। नीचमतयः स्वप्रशंसां तु रसना-सनस्त्रैः कुर्वन्ति परमन्येषां प्रशंसायां ते करिण इव विवृत्तजिह्वा भवन्ति।[१२] यः सज्जनो योऽपि च दुर्जनस्तौ द्वावप्यलीकवचसौ, यतो हि एकः (सज्जनः) अविद्यमानानपि गुणान् वक्ति, अपरश्च (खलश्च) विद्यमानानपि तान् व्यपोहति।[१३] सज्जन–वाग्भिश्चित्तवृत्तिरेवमेवोल्लसिता भवति यथा वसन्ते मलयानिलेन रसालयष्टिः।[१४] सज्जनस्य वाक् चित्तं विकासयति परं दुष्टस्य तु कर्णपतिता सती विषवल्लीव शिरो घूर्णयति।[१५] सज्जनानां हृदयं सागरस्येवागाधतां बिभर्ति परं दुष्टानां तु निस्सारतयोदुम्बरतुल्यमेव भवति।[१६] स एव यशोऽधिगन्तुं क्षमो यो गुणगणैर्युक्तः, खनिनिर्गतः स मणिस्त्वश्मैवास्ति य स्व किरणैन्धकारपाटनेऽसमर्थः।[१७] दुष्टा जानन्ति यत्तेषां वाण्यन्यान् प्रभावयितुमसमर्था अतएव ते सज्जनेभ्योऽसूयन्ति येन तेषां वाग्जाल एव जना भ्रान्ताः स्युः।[१८] ये परगुणग्रहणे दृढानुरागास्ते सज्जनमूर्धन्या वन्द्या ये च गुणेष्वसूयकास्ते निन्द्याः।[१९] महतां चरित्रं नूनमाश्चर्यशालि यत् स्व गुणतन्तुभिरन्यानक्रीतदासान् आवध्नाति।[२०] यः (सज्जनः) स्व संख्यातिगैर्गुणैर्न तुष्यति पर-

---

११. विशेष विस्तारः 'रत्नाकरस्य वैदुष्यम्' इति शीर्षकेऽध्यायेऽवलोकनीयः।
१२ हर० ३८।१०
१३. तदेव ३८।१२
१४. तदेव ३८।१४
१५. तदेव ३८।१५
१६. तदेव ३८।१६
१७. तदेव ३८।२०
१८. तदेव ३८।२२
१९. तदेव ३८।२४
२०. तदेव ३८।२६

मन्येषां स्वल्पानपि गुणान् वहु मन्यते किमेतत् सज्जनस्यासाधारणतां द्योतयितुं नालम् ?[२१] दुष्टैरुद्वेजिता अपि सज्जना निर्मत्सरा भवन्ति, जलनिधितरंगा इव च ये स्वान्तः स्थितान् गुण-मणीन् निरन्तरमुन्नमयन्ति।[२२] प्रकटतः साधुवादं ददानोऽप्यन्तर्मत्सरविषानलदह्यमानो दुर्जनः सज्जनान् लाञ्छितान् कृत्वैव सन्तोषं गृह्णाति ।[२३]

रत्नाकरः 'स जातो येन जातेन याति वंशः समुन्नतिम् ।' इत्यस्या मान्यतायाः समुपासक आसीत् ।[२४] प्रथमश्रेण्या मानधनः स स्वगौरवस्य पाण्डित्यस्य च विषये जागरूको वर्तते । स्थाने-स्थाने एवंविधाः संकेतास्तस्य काव्ये प्राप्यन्ते । स निर्भीकतया कथयति- "विवेकभाजो विरला हि लोके व्यतीतसंख्या ननु सन्ति मूर्खाः ।"[२५] बुद्धिमतां कृते जगति किमप्यसाध्यं नास्ति ।[२६] प्रज्ञयालोच्यमानं कार्यजातं सफलं सदेवमेव स्वकीयं सौरभं विकिरति यथोद्घृष्यमाणं चन्दनंसौरभम् ।[२७]

अनेकस्थलेषु तेन स्व चरित्रे रुचौ चापि प्रकाशः पातितः । संसारे स कश्चिदेक एव भवति यस्योक्तिषु सर्वमनोरमोऽर्थः स्फुरति ।[२८] सत्स्वप्यन्येषु प्रतिष्ठितेषु महाजनधुरां कतिचिदेव वहन्ति । समुद्रान्निर्गतेष्वपि बहुषु पदार्थेषु स कम्बुर्विलक्षण एवासीद्यः कैटमारेर्मुख-मरुताऽपूर्यत ।[२९] संसारे शब्दास्त्वसंख्याः सन्ति परं स कश्चिदन्य एवास्ति मृगेन्द्रस्य नादो यो द्विरदानां मदजलं शोषयति ।[३०] निसर्गगुरवोऽसम्भवमपि कार्यं कुर्वन्ति ।[३१] तेजस्विनः साधनसम्भारस्यापेक्षामकृत्वैव लोकोत्तरं कार्यं सम्पादयन्ति ।[३२] एभिरुद्गारैः स स्वमेव व्यंजनया बोधयन्निवाभाति ।

रत्नाकरः प्रथमश्रेण्या वक्ताऽऽसीत् । इदमत्रोल्लेखनीयं यद् विचित्रमार्गस्य

२१. तदेव ३८।२९
२२. तदेव ३८।३०
२३. तदेव ३८।३४
२४. तदेव ३८।३५
२५. तदेव ३८।८
२६. तदेव ९।७५
२७. तदेव ९।७३
२८. तदेव ११।११
२९. तदेव ११।६०
३०. तदेव १३।४९
३१. तदेव १३।६१
३२. तदेव ४५।१३

सर्वेऽपि कवयो भाषणकलायामति पटवः सन्ति । किरातार्जुनीयस्य प्रथम द्वितीययोः शिशुपालवधस्याप्यनयोः (प्रथम-द्वितीययोः) एव, भट्टिकाव्यस्य ५,२० सर्गयोश्च वक्तृत्वकलाया अनुपमान्युदाहरणानि प्राप्यन्ते, परं रत्नाकरस्य वक्तृता इमान् सर्वानतिशेते । शिवगणानां विस्तृतानि भाषणानि, सभाचतुरता, सभागतशिष्टाचाराः, तर्कानुमोदितानि तत्थ्यानि प्रभावोत्पादिका युक्तयः, उक्तिवैचित्र्यं, प्रत्युत्पन्नमतिता चेति सर्वेऽपि गुणास्तेषां भाषणेषु प्राप्यन्ते । भारवि-माघ-भट्टिभिः सर्गद्वयेनैव स्ववाग्वैदग्ध्यस्य परिचयः प्रदत्तोऽस्ति परं रत्नाकरेण पञ्चदश सर्गेष्वियं कला प्रकटीकृता । यथा इमे पात्राणि पाठकान् स्ववावदूकतायाः प्रभावयन्ति, विचित्र-गहने नीतिमार्गे संचारयन्ति, स्वतर्कैश्च मुद्रितमुखान् कुर्वन्ति तथा तस्याप्रतिमां भाषणकलामपि द्योतयन्ति ।

तस्य 'वागीश्वरत्वे' न कापि विचिकित्सा । तस्योद्भटं पाण्डित्यं पाठकं विस्मय-विस्फारित-लोचनं विदधाति । न जाने कियत्तपश्चरणानन्तरं तेनैतावज्ज्ञानमर्जितमासीत् । स्वविषये तस्य गर्वोक्तयस्तथ्योक्तय एव सन्ति ।[33]

रत्नाकरः पर्यटन-प्रेमी आसीत् । 'मार्गविभागवर्णन'—नाम्नि त्रिंशे सर्गे तस्य भौगोलिकं ज्ञानं स्पष्टतया प्रतिबिम्बितमस्ति । विभिन्ना जनपदाः, पर्वतमाला, नदी-नद-सागराश्च तेन भ्रमणावसरेषु साक्षात्कृता आसन् । काश्मीरस्य सुरम्यायां भूमौ निवासात् प्रकृतेः सुकुमाररूपस्य यादृशं चित्रं तेन चित्रितं तत्सर्वथा तं 'प्रकृतिकविं' प्रख्यातुमलम् । प्राकृतिकदृश्यानां वर्णनान्येतावन्त्यासेचनकदर्शनानि सन्ति यत्पाठको विस्मय-विमूढ-चेता एवावतिष्ठति । तालवृक्षे तस्य रुचिरत्यन्तमासीदतएव तेन तस्य बहुधोल्लेखः कृतः ।[34] सन्ध्याकालस्य सुषमामपूर्वरूपेण वर्णयन् स 'तालरत्नाकर' एव प्रसिद्धोऽभूत् ।[35]

---

३३. ललितमधुराः सालंकाराः प्रसादमनोरमा
विकटयमकश्लेषोद्धारप्रबन्धनिरर्गलाः ।
असदृशगतीश्चित्रे मार्गे ममोद्गिरतो गिरो
न खलु नृपते ! चेतो वाचस्पतेरपि शंकते ।।
सान्द्रानन्दामृतरसपरिस्पन्दनिःस्यन्दिनीनामस्मद्वाचामतिशयजुषां वस्तुतत्त्वाभिधाने ।
प्रौढज्योत्स्नाधवलविकसद्दिग्वधूकर्णपूरब्रह्मस्तम्भस्तवकयशसां कोऽपि टांकारटंकः ।। (हर०, प्रशस्तिः २–३)

३४. द्रष्ट०—हर० ४।२१, १९।५, २७।१८, ३०।५६, ३१।४९.

३५. अस्तावलम्बिरविबिम्बतयोदयाद्रिचूडोन्मिषत्सकलचन्द्रतया च सायम् ।
सन्ध्याप्रनृत्तहरवाद्यगृहीतकांस्यतालद्वयेव समलक्ष्यत नाकलक्ष्मीः ।। (हर० १९।५)

रत्नाकरस्तेषु नासीद् ये केवलं 'पुस्तककीटा' भवन्ति संसाराच्च सर्वथोदासीनतां भजन्ते। तेन लोक-निरीक्षणं निकटतः कृतमासीद् मानवस्वभावस्य सरलतां कुटिलतां च स सम्यग् ज्ञातवान्। संसारे निवासस्य कलां स जानाति स्म। अतएव नीतेर्वर्णनमियता विस्तारेण तस्य कृतौ प्राप्यते। नीतेः प्रयोगः केवलं युद्धक्षेत्र एव न भवत्यपि तु दैनिके व्यवहारेऽपि पदे-पदे तस्या आवश्यकतानुभूयते। नीतिज्ञं पुमांसं चञ्चलापि लक्ष्मीः कदाप्येवं न मुञ्चति यथा दीप्ता रुचिः सूर्यमण्डलं न जहाति।[36] नीतिरहितान् जनान् मायाविनोऽभिभवन्ति। चक्षुष्मतोऽप्यवधानरहितान् कण्टका अवश्यं भिन्दन्त्येव।[37] बुद्धिमता नीतिप्रयोगे कृतेऽसम्भवान्यपि कार्याणि सम्भवानि संजायन्ते।[38] परं व्यवहारे बाधां पातयन्ती नीतिः रत्नाकरस्य न रुचिकरा। एतादृशीं नीतिं स 'नीतिपिशाचिकां'[39] 'नीतिविषूचिकां'[40] वा कथयति।

संसारे निवासाय तेजस्विताऽऽनिवार्यास्ति। तेजोविरहितस्यापि जीवनं किं जीवनम्? तुच्छोपमानभूतेन हरिणेनापि चन्द्रस्योरसि यत्पदं धृतम् तत्तस्य निस्तेजस्कताया एव तु फलम्।[41] चन्द्रः सूर्येण प्रतिदिनमभिभूतोऽपि प्रतीकारशून्य एव यदुदेति तत् तदीयामनुष्णतामेव द्योतयति।[42] तेजसः स्वल्पापि मात्रा पराक्रमकारिणी, क्षुद्रोऽपि दीपकोऽन्धकारं विनाशयितुं स्वकीयां शिखां परिस्फोरयति, तेजःपिण्डस्य तु कथैव का?[43] शारीरिकबलापेक्षयात्मिकबलं श्रेष्ठतरम्। सिंहः करिणं प्रचण्डचपेटाघातेनैव भूमौ विपोथयति परमष्टपादः (जन्तुविशेषः) तं पृष्ठेनोद्वहति।[44]

रत्नाकरो मर्यादितविनोदप्रिय आसीत्। तस्य 'वक्रोक्तिपंचाशिकायां' शिवपार्वत्योर्वक्र-कथनैस्तस्य विनोदप्रियतायाः सुन्दरः परिचयः प्राप्यते। 'ध्वनिगाथापंचिकायां' संकलिता गाथास्तु चिरकालात्सहृदयानां कण्ठविभूषणतामवाप्नुवानाः सन्ति। हरविजयेऽपि जलविहारादि वर्णनेषु विनोद-प्रियताया दर्शनं

३६. हर० १०।१७
३७. तदेव १०।१९
३८. तदेव १०।१६
३९. तदेव १३।५८
४०. तदेव ३५।५८
४१. तदेव ११।५५
४२. तदेव ११।५६
४३. तदेव ११।५९
४४. तदेव १३।४७

भवति ।

सत्यामपि विनोदप्रियतायां रत्नाकरस्य व्यक्तित्वमतीव गाम्भीर्यशालि आसीत् । विभिन्नशास्त्राणां मन्थनेन, उच्चप्रतिष्ठया, श्लाघनीयेन पदेन चेयं गम्भीरता घनीभूताऽऽसीत् । गम्भीरतां विस्फोट्य विनोदस्य विकीर्णा कणिकास्तस्यानन्यसाधारणो गुणः । अन्यथा भवभूतेरिवात्रापि परिहासशून्यता सम्भवासीत् । तस्य धारणासीद्यत् पूर्वं महतां हृदयनिर्माणे गाम्भीर्यं परिसमाप्य तदवशिष्टैरंशैर्जलधिषु गम्भीरतां, पर्वतेषु स्थिरतामाकाशे च विस्तीर्णतां प्रजापतिश्चकार ।[४५] शेषशायिनस्तु हृदये त्रय एव लोका वसन्ति परं महतां हृदयेषु तु सप्त एव सविकासं तिष्ठन्ति ।[४६] संकटेऽपि धीरैर्धीरता न परित्याज्या । किमु प्रलयकालेऽपि मर्यादां परित्यजन्त. सागरा वचनीयतां न प्राप्नुवन्ति ?[४७]

रत्नाकरस्य हृदि शरणागतवत्सलतायाः कृतेऽतीवादर आसीत् । सम्भाव्यते यत्तेन बहूनामापद्गतानां रक्षा कृता भवेत् । अनेकशस्तस्येयं शरणागतवत्सलता मुखरीभूतास्ति । प्रकृतिवर्णनेऽन्यत्रापि च शरणागतमुपेक्षितवतां स्मरणं तेनात्यन्तं हीनदृशा कृतम् । आभिरन्योक्तिभिः कवेर्भावुकतायाः परिचयः सुतरां प्राप्यते । निकृष्टापि योनिः श्रेष्ठा यदि तया परोपकारः सम्पद्यते, उपयोगवन्ध्यैः स्थूलैर्वृथायासितधरैः किम् ?[४८] लूताकृतस्तन्तुर्वरं यमाश्रित्य कीट उन्नतिं प्राप्नोति परमुन्नतशीर्षस्यास्ताचलस्य को लाभो यः पततः सूर्यस्यावलम्बनं न बभूव ?[४९] अस्ताद्रेस्तुङ्गता किंफलका या पततो भास्करस्यावलम्बनं न भवति? ततस्तु कमलनालमेव श्रेष्ठतरं यदाश्रित्य दैत्यभीत्या सुरेन्द्रो निभृतमतिष्ठत ।[५०] आप्लावितक्षितितला जलधीनां सा श्रीर्दह्यतां, या स्वोत्पन्नस्य चन्द्रमसः कलङ्कमपि प्रक्षालयितुं क्षमा नाभूत् ।[५१] उन्नतिशालिनीभिर्वृक्षाणां शिखाभिः किम् ? ताभ्यस्तु अधोगच्छन्त्यो जटावल्ल्य एव श्लाघ्यतरा याः कदाचित्पततां जनानामवलम्बनहेतुतां तु प्राप्नुवन्ति ।[५२] विशिष्टकार्यस्य सम्पादनार्थं विशालवंशोद्भवताया आवश्यकता नास्ति । घटोद्भवेनापि किमगस्त्येनोदधिरेव न

---

४५. हर० १०।१८
४६ तदेव ११।६३
४७. तदेव १०।३६
४८. तदेव १०।६५
४९ तदेव १०।६७
५०. तदेव ११।६८
५१. तदेव ११।६९
५२. तदेव ११।७०

पीतः ?[५३]

सत्यपि सांसारिकेऽनुभवसंघाते रत्नाकरस्य हृदयं भक्ति—परिप्लुतमासीत् । यत्सत्यं, विना भक्तिमेतादृश्याः प्रतिभायाः स्फुरणमेव सम्भवं नास्ति । तस्य हृदयं शिवमयमिव बभूव । कश्मीर—कवीनां मानसं शिवभक्ताविथन्मग्नं यत्तदतिरिक्तं किमपि वस्तु तेभ्यो रोचत एव न । शिवमदलम्ब्याधिकांशतः स्तोत्रकाव्यान्येव विरचितान्यभूवन् परं रत्नाकरेण 'चन्द्रार्धचूडचरिताश्रयचारु' काव्यमिदं भगवतः शङ्करस्य चरणयोरेवार्पितम् । यद्यप्यस्मिन् वीररसोऽङ्गी, शृंगारादयश्चांगभूताः परं भगवद्विषयको रतिभावः स्थाने-स्थाने एव स्फुरितो भवति यत्कविर्भक्तावनुरागे चापुंखशिखं मग्नः संजायते । अन्तरान्तरा भगवतश्चन्द्रचूडस्य सभायां गणपतीनां भाषणैः शंकरं प्रति स्वकीयो भक्तिभावः कविना प्रदर्शितः । वस्तुतश्चन्द्रार्धचूडचरिताश्रयचारु काव्यमिदमैशं महत्त्वमवष्टभ्य स्थितं सत्साहित्यजगति स्वीयमुपमानमेव न धारयति । अष्टाभिमूर्तिभिः प्रपन्नो भगवान् हरोऽत्रावस्थितः सन् सर्वथा विजयते । शिव—भक्ति-लीनमपि कवि—हृदयं साम्प्रदायिक—द्वेषभावनया सर्वथा विनिर्मुक्तम् । विष्णु—नृसिंह वराह—वामनादीन् प्रति हार्दिकी श्रद्धा तस्य काव्ये प्राप्यते ।

स साधकोऽप्यासीत् । विना साधनामेतादृशी प्रतिभाऽसम्भवा । तेन स्थले-स्थले योगशास्त्रस्य पारिभाषिकानां शब्दानां प्रयोगः कृतोऽस्ति यस्तस्य साधकत्वमनुमापयति ।[५४]

तस्य जीवनदर्शनं सर्वथा स्वस्थं सन्तुलितं चासीत् । संसार उषित्वा तत औदासीन्याभावः प्रत्यभिज्ञादर्शनस्य वरदानमासीत् । कवौ निराशाभावः क्वचिदपि नावलोक्यते । वस्तुतो रत्नाकरः प्राणस्योर्जायाश्च कविरासीत् । तस्य काव्यं कायराणां कृते नास्ति । जीवने समुल्लासः, संसारस्य सशक्त उपभोग ईश्वरविश्वासः कस्यचित् सदुद्देश्यस्य कृते चोत्सर्ग इदमेव तु जीवनस्य चरमं लक्ष्यम् । अन्यायस्यविरोधो धर्मस्य प्रतिष्ठा—एष एव सन्मार्गः । अमुमवलम्ब्य मातृभूमे रक्षार्थं जीवनोत्सर्गः, आत्माहुति-सौरभेण मातृभूमेर्वातावरणस्य सुरभीकरणमेव तु जीवनस्य परमं लक्ष्यम् । देशस्याशिक्षा, कायरता, नास्तिकता, दूरीभूयात्र विद्या, वीरता, आस्तिकता विचारसहिष्णुता च प्रसरेदित्येव कवेर्जीवनदर्शनम । कविरस्य प्रतिपादने पूर्णतया साफल्यमवाप इत्यत्र नास्ति सन्देह-कणिकापि कापि । स्थाने-स्थाने सुरतादीनाम् अतिरंजितानि वर्णनानि

---

५३ तदेव १३।६२

५४ हर० १३।७८, २०।२८, ४३।३३७, ४४।६४, ४८।०६.

तस्यास्य सदुद्देश्यस्य पूर्तौ बाधकत्वेन नैव स्वीकार्याणि। एकस्य कलाकारस्य दृशा तेनैतत्सर्वं वर्णितं, किमपि रूढिवशात् किमपि पाण्डित्य-प्रदर्शनवशाच्च। यतो हि न कोऽपि स्वसमयस्य मान्यतानामुपेक्षां कर्तुं क्षमः। तथापि तस्य जीवन-दर्शनमद्याप्यस्माकं कृते प्रेरणादायकमस्ति।

रत्नाकरस्य हृदये प्रेम्णो मधुरास्तरंगा अपि कदाचित्स्फुरिता आसन्। प्रेमसम्बन्धिन्यस्तस्योक्तयोऽत्यन्तं मार्मिक्यः। तस्य जीवनं पूर्णतः सुख-सुविधा-सम्पन्नमासीत्। एतत्तस्य वैभवमयवर्णनैः सूच्यते। स्त्रीणां विलासवर्णनं, जल-क्रीडा, सुरतादयस्तस्य रसिकस्वभावं वैभवसम्पन्नतां च सूचयन्ति। प्रेम्णः सम्बन्धे तस्याधोलिखिता विचारा द्रष्टव्याः सन्ति :

प्रेमाहो ! क्वचिदपि नेक्षते व्यपायम्। १७।१२
प्रेमाहो विविधविधिप्रपञ्चदक्षम्। १७।१४
विस्रम्भः सुहृदि फलं ननु प्रधानम्। १७।३६
प्रेमाहो रचयितुमीहतेऽनुकूलम्। १७।६७
नौत्सुक्यं व्रजति हि रम्यदर्शनात्मकः ? १७।८५
प्रेमाहो युवतिषु मौग्ध्यदुर्विदग्धम्। १७।६१
प्रायेण ह्यननुगुणे विधावुपैति-
ध्यातोऽर्थः परिणतिमन्यथैव पुंसाम्। १७।६६
रम्याःस्युः क इव हि सुत्यजाः पदार्थाः। १७।१०८
सदानुकूले हि जनोऽनुरज्यते। २१।१७
प्रकर्षतः प्रेमगुणस्य नास्ति तन्-
न वल्लभस्य क्रियते यदीप्सितम्। २१।३५
न गण्यते प्रेमणि दोष-दूषणम्। २१।३७

रत्नाकरः प्रेम्णोऽव्यर्थायां शक्तौ विश्वसिति। अत एवाह :

किं तत्प्रेम्णा कार्यते यन्न लोकः ? १८।२६

रत्नाकरस्य पार्श्वेऽनुभवानामपारो भाण्डार आसीत्। शास्त्रैः साकं गजाश्व-मृगया-पानगोष्ठी-प्रभृतीनाम् असंख्यानां विद्यानां कलानां वा ज्ञानं तेनार्जितमासीत्। स साधारणेन पुंसा कथं सन्तुष्टो भवितुमशक्नोत् ? त तु सरस्वती--मन्दाकिन्येव पूरयितुमलमासीत् :

मन्दाकिनीं प्रथितपुण्यगुणां विहाय
रत्नाकरं क इव पूरयितुं क्षमोऽन्यः। १३।४६
न रत्नदीपस्य शिखा सकज्जला। १२।२३

अप्रौढानां कवीनां कृतिषु रसनिष्यन्दता कुत आगच्छेत् ? :

सान्द्रो रसः कथमिवाम्रशलाटुनि स्यात् ? १६।१०

सरसा हितकारिणी च रचना न सर्वसाधारणी । सा तु भूयसां पुण्यानां परिपाक :

कल्याणीं गिरमुत्स्रष्टुं विरला एव जानते ।
सत्यां रेखां विलिखितुं चित्रकर्मविदो यथा ।। (३२।७०)

सत्यमिमा उक्तयस्तत्परा एव प्रतिभान्ति । न केवलं व्यंजनयेत्रापित्वभिधयापि कविना यत्स्व विषये कथितं तदक्षरशः सत्यम् :

धाराकाव्यप्रबन्धप्रणिहितपरमः श्रोत्रपेया कवीनां
भाषाषट्केऽपि यस्य क्वचिदपि न गता भारती भारवत्त्वम् ।
प्राप्तज्ञेयावसानस्फुरदमलतरप्रातिभज्ञानसंपत्—
सोऽहं रत्नाकरस्ते सदसि कृतपदः क्ष्माप ! वागीश्वराङ्कः ।।
यस्योदयेऽन्धतमसं दधतो (दहतो) विशुद्धि—
राविर्भवत्यनिशमेव जलाशयानाम् ।
तद्ग्रस्तवाङ्मयसमुद्रमवेहि राजन् !
रत्नाकरं रविमथैनमगस्त्यमौर्वम् ।।
दृब्धं सत्प्रज्ञकैर्यन्न जगति कविभिर्वस्तु तन्नास्ति किंचित्
क्षुण्णे क्षुण्णत्वचिन्ता गहनविषयता तस्य दूरास्तु तावत् ।
तन्मन्दाभिप्रगल्भप्रसरगुरुगिरामग्रणीर्वाण एको
राजन् ! रत्नाकरश्च ज्वलनवदवनौ जाज्वलीति द्वितीयः ।।
हरविजयमहाकवेः प्रतिज्ञां शृणुत कृतप्रणयो मम प्रबन्धे ।
अपि शिशुरकविः कविः प्रभावाद्भवति कविश्च महाकविः क्रमेण।।[५५]

तस्य व्यक्तित्व-कर्तृत्वयोः प्रभावितैः समालोचकपुंगवैस्तस्य मुक्तकण्ठेन प्रशंसा कृता । राजशेखरस्य शब्देषु :

मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे ।
इतीव रचितो धात्रा कवी रत्नाकरोऽपरः ।।

तस्य व्यक्तित्वस्य विषयेऽस्मात्परं किं कथनीयं स्यात् ?

## रत्नाकरस्य कर्तृत्वम्

रत्नाकरस्य तिस्रो रचनाः प्राप्यन्ते । तेनावश्यमेवान्या अपि कृतयः प्रसूताः स्यु र्या कालवशादस्तङ्गताः । अत्रोपलब्धानां कृतीनां संक्षिप्तः परि-

---

५५. हर० प्रशस्तिः, श्लोकाः ४–७.

चयो दीयते :

## (१) हरविजयम्

इदं पंचाशत्सर्गात्मकं महाकाव्यमस्ति। अस्मिन्नन्धकासुरस्योपरि हरस्य विजयो वर्णितः। लघुकथानकस्येयतो विस्तारस्य काव्यमिदमद्वितीयमुदाहरणम्। चामत्कारिकाणि काव्यानि स्वगुणगौरवेणाधः कुर्वाणमप्यदः काव्यमुपेक्षितप्रायमेवास्ति। अस्यैकं संस्करणं १८९० ईसवीये वर्षे, निर्णयसागरमुद्रणालयतः, काव्यमालायाः २२ संख्याया अन्तर्गतमभूद् यस्य सम्पादनं जयपुरवास्तव्यैः राजपण्डितैः श्रीमद्भिर्दुर्गाप्रसादशास्त्रिभिर्बम्बई–वास्तव्यैः परवोपाह्वैः श्रीमद्भिः काशीनाथशर्मभिश्च कृतमासीत्। तदनन्तरं किमप्यन्यत्संस्करणं न निर्गतम्। सम्प्रति चेदमनुपलब्धानां ग्रन्थानां कोटौ समागतम्।

अस्यैकैव टीका, राजानकालककृता[५६] विषमपदोद्योत-नाम्नी सम्प्रत्युपलब्धा, साथि च खण्डिता-षष्ठे सर्गे, २५तः ११५ श्लोकं यावत्, ४६ सर्गस्य च ६७ श्लोकात् महाकाव्यस्यान्तं यावत्।

श्रीकृष्णमाचार्यः स्व संस्कृत–साहित्यस्येतिहासे वल्लभदेवस्यापि टीकायाः समुल्लेखं करोति[५७] परं सा न प्राप्यते। प्रो० स्टीन द्वारा सम्पादितस्य राजतरंगिण्याः संस्करणस्यामुखादेतज्ज्ञायते यत् परमविदुषा रत्नकण्ठेनापि काव्यस्यास्योपरि लघुपंचिका नाम्नी टीका विरचितासीत् परं साद्यत्वे न समुपलभ्यते।[५८] मन्येऽपूर्णैव सातिष्ठत। कृतेऽपि प्रयत्ने साधिगता नाभूत्।

अस्य महाकाव्यस्य ४६ तमे सर्गे ७१–७२ श्लोकयोः :

सश्रीमानमृदुर्निसर्गगहने दर्पान्निकृत्तद्विषो,
वंश्यश्चारुयशस्तदा दधदधः सद्यो हृतश्रीरिपोः।
दत्तार्घो नयमार्गगोचरगुणः पृष्ठीभवन्मारणे,
सेवानम्रलसत्कराञ्जलिपुटैर्वीतारिशंकं सुरैः॥

---

५६. अयमलको राजानकजयानकस्य पुत्रोऽवशिष्टस्य काव्यप्रकाशस्य च पूरक आसीत्। यथा च प्रसिद्धम् :

कृतः श्री मम्मटाचार्यवर्यैः परिकरावधिः।
प्रबन्धः पूरितः शेषो विधायालकसूरिणा॥

परमविद्वानसौ मम्मटस्य समकालिकः किञ्चित्परवर्ती वास्ति।

५७. कृष्णमाचार्यः हिस्ट्री आफ् क्लासिकल संस्कृत लिट्रेचर, पृ० १६८, सं० १९३७.

५८. ......राजानक रत्नकण्ठ हैज़, हाउ एवर, टेकन केअर टु लैट अस नो एबाउट हिज़

इत्थं दुर्धरदर्पदोद्धुमतया मृद्नन् चमूराततां,
भास्वान्सानुमति क्षपा इव तदा सूदारशोभानुगः।
टांकारैर्व्यथितारिसंहति धनुर्व्रत्या (व्रांता) त्तकीर्ती रणे,
यत्नासंजितशिंजिनीकसरटः कामं तमव्यंसयत् ॥

रेखांकितानाम् अक्षराणां योजनया निम्नलिखिता आर्या निष्पन्ना भवति :

श्री दुर्गदत्तवंश्यः सहृदयगोष्ठीरसेन ललिताङ्कम् ।
इदममृतभानुसूनुर्व्यधत रत्नाकरः काव्यम् ॥

अतः पंच श्लोकेभ्यः पूर्वतः (४६।६७ तः) अलकक्रता टीकापि नोपलभ्यते। अतः केषांचित् मतमस्ति यद् रत्नाकरेणात्रपर्यन्तमेव रचना कृताऽऽसीत्। श्रीकृष्णमाचार्यः स्वकीयेसंस्कृत साहित्यस्येतिहासे लिखति--"हरविजय वाज़ अनफिनिश्ड बाइ रत्नाकर एन्ड कम्प्लीटेड बाइ गणपति. इट इज़ पासिबिल देयरफोर, फ्राम दि लिमिट आफ अलक्स कमैन्टरी टु से दैट सो फ़ार रत्नाकर रोट टू।"[५६]

वस्तुतः काव्यस्य गणपति-कर्तृत्वे नास्ति किमपि साक्ष्यम्। ४६ सर्गतष्टीकानुपलब्धेरन्यकर्तृत्व-स्थापनाप्यहृदयंगमा। यतो हि संकेतैरेतत्स्पष्टं यद्

---

परसन एन्ड टाइम नोट ओन्ली इन दि मैन्युस्क्रिप्ट्स, ही कापीड, बट आल्सो इन सच वर्क्स एज़ ही कम्पोज्ड. इन ए कमैन्ट्री टू दि हरविजय नेम्ड लघुपंचिका रिटिन बाइ हिज़ ओन हैन्ड एन्ड एक्सटैंडिग टू दि एन्ड आफ दी फर्स्ट सर्ग इज़ नाउ इन माइ पज़ेश न, ही काल्स हिमसेल्फ़ दी सन आफ राजानक शंकरकंण्ठ आफ़ धौम्यायन गोत्र एन्ड स्टेट्स दि ईयर आफ कम्पोज़ीशन एज़ शक १६०३ (ए०डी० १६८१)

तदनु ५ संख्यक टिप्पण्यां स (प्रो० स्टीनः) मूललेखं ददाति :

"सी दि इन्ट्रोडक्शन टू दि लघुपंचिका :

त्रिनभोष्टि (१६०३) मिते शाके धौम्यायनकुलोद्भवः।
काश्मीर–देश–वास्तव्यो रत्नकण्ठामिधः सुधीः ॥
विपश्चिन्मण्डलीरत्नरत्नाकरमहाकवेः ।
गभीरवितते काव्ये करोति लघुपंचिकाम् ॥

एण्ड दि कोलोफ़न एट दि एन्ड आफ़ दि फर्स्ट सर्गः :

इति……श्री महाकवे राजानकरत्नाकरस्य कृतौ हरविजयाख्ये महाकाव्ये श्री शारदाचरणग्ज:-पवित्रस्थलवास्तव्यराजानकश्रीशंकरकण्ठात्मज राजानकरत्नकंठकृतायां लघुपंचिकायां …..प्रथमः सर्गः। लिखितं चैतन्मया राजानकरत्नकण्ठेन सं० ५७, शाके १६०३ (राजतरंगिणी स्टीन, भूमिका, पृष्ठः ७)"

५६. कृष्णमाचार्यः, हिस्ट्री आफ् क्लासिकल संस्कृत लिटरेचर, पृ० १६१.

अलकेन सम्पूर्णैव टीका कृताऽऽसीत् परं सा कालवशाद् विलुप्ता ।[६०]

किंच काव्यस्य फलावाप्तिरन्तिमे सर्ग एव भवति । प्रशस्तिरपि काव्यस्यान्त एव प्राप्यते । भाव-भाषा-शैलीषु चैकरूपता सर्वत्र दरीदृश्यते । अतोऽयमेव निष्कर्षः श्रेयान् यत्कस्यापि लेखकस्य प्रमादादियमार्यात्र लिखिताभूत् । लेखक-प्रमादकृतान्युदाहरणान्यन्यत्रापि प्राप्यन्ते । यथा १९।५ श्लोकस्य, प्रसंगे, यत्र टीकाकारोऽलकष्टिप्पणीं करोति—"अस्तेत्यादिश्लोकस्येह पाठः प्रमादज इव लक्ष्यते । अग्रे ह्यन्धकारोद्गमानन्तरं चन्द्रोदयो वर्णयिष्यते ।" एवमेवान्यत्रापि ४३।३४२, ४३श्लोकयोरपि टीकाकर्तुष्टिप्पणी द्रष्टव्या वर्तते— "सोऽवैद्" इत्यादि श्लोकद्वयं प्रागुप्तमिह तु लेखक-प्रमादात्पठितम् ।" अतोक्तरीत्येयं कारिकापि प्रमादलिखितात्र वर्तते । अस्याः समुचितं स्थानं त्वन्त एव वर्तते । नेयमत्र काव्यस्याङ्गं, यतोह्यस्यां न क्रमसंख्योल्लिखिता वर्तते । न च रत्नांकतापि काव्यस्यानया सिध्यति 'रत्न'-शब्दस्य प्रयोगस्त्वन्तिमे (४६।८१) श्लोक एव भवति । अतोऽनयाऽर्यया सह काव्य-समाप्ते निर्धारणं तथ्यानामपलाप एव ।[६१] सम्पूर्णं काव्यं रत्नाकरस्यैव कृतिः ।

काव्यस्य ध्वनि-गुणीभूत-चित्र-रूपाणि सर्वाण्यप्यत्र प्राप्यन्ते । विचित्र-मार्गस्य परां काष्ठां बिभ्रन्ममहाकाव्यमिदं संस्कृत-साहित्यस्य शेवधिः । भारवि-माघ-भट्टीनां नरशिखित्रयी अस्य समक्षे श्रीहीनेव प्रतिभाति ।

## (२) वक्रोक्तिपंचाशिका

"वक्रा उक्तिर्वक्रोक्तिः ।" यत्र श्रोता वक्तुरन्यार्थकस्य वाक्यस्यान्यमेवार्थं श्लेषबलेन, काकुबलेन वा करोति तत्र वक्रोक्तिर्भवति । यथाह साहित्यदर्पणकारः :

अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि ।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ।।[६२]

---

६०. द्रष्टव्या—हरविजयस्य, ४८ सर्गस्य१/१२३,२/२४श्लोकयोः कृता सम्पादकीया टिप्पणी-
१. "सदसं ससन्नाहमिति टीकायाम्", इति ख पुस्तके टिप्पणम् ।
२. टीकायामर्थन्नयवाचीत्येवोक्तम्, इति च ख पुस्तके टिप्पणम् ।
एतट्टिपणद्वयविलोकनेन, हरविजयस्य राजानकालकेन सम्पूर्णैव टीका प्रणीता, सा च कालदोषेण पश्चादन्तिमभागे खण्डितेत्यनुमीयते ।

६१. द्रष्ट०—डा०सन्तोषकुमारी शर्मा—'लाइफ आफ़ रत्नाकर' 'शारदापीठ-प्रदीप' (इण्डोलाजिकल रिसर्च इन्स्टीट्यूट, द्वारका), पृष्ठ सं० ७४–७८, खण्डः सं० २, अगस्त १९६४.

६२. विश्वनाथः, साहित्यदर्पणः १०।९

वक्रोक्तिरत्रालंकारत्वेनाभिप्रेता । कुन्तक-सम्मताया 'वैदग्धीभंगीभणिति'-रूपाया वक्रोक्तेर्विवेचनं यथास्थानं करिष्यते ।

"वक्रोक्तिपंचाशिकायां" ५१ श्लोकाः सन्ति समाप्तिसूचकमन्तिमं श्लोकं परिहृत्य सर्वेऽपि श्लोकाः शार्दूलविक्रीडितवृत्ते सन्ति, येषु शिव-पार्वत्योः परिहासोऽतीव पेशलतयोपनिबद्धः । प्रत्येकं श्लोकः शिष्टो मंगलाशंसापरकश्च । कवेर्वक्रोक्तिमयकाव्यनिर्माणस्याद्भुता चातुर्यनया पंचाशिकया प्रदर्श्यते । इयं कृतिः काव्यमालायाः प्रथमे गुच्छके १०१ पृष्ठतः ११४ पृष्ठं यावत् १८९३-ईसवीये वर्षे मुद्रितासीत् । अस्यां वल्लभदेवस्यैका टीकास्ति । वल्लभदेवोऽसौ सुभाषितावल्याः (१५०० ई०) संग्रहकाराद्भिन्नः । अस्य समय ईसवीयवत्सरस्य दशमशतकस्य पूर्वार्धमस्ति । एतत्कृता रघुवंश-कुमारसम्भव-मेघदूत-शिशुपालवध-सूर्यशतकादि टीकाः समुपलभ्यन्ते । हरविजयस्यापि टीकाकर्तृत्वमस्य कैश्चित् स्वीक्रियते, परं सा टीका प्राप्यते न ।

वक्रोक्तिपंचाशिकायाः समाप्तौ रत्नाकरेणोद्घोषितं यद् यः कश्चिदपि मत्सरशून्यबुद्धिरिमां पंचाशिकामनुशीलयेत् स विशदोत्तरवतीषु रचनासु ममेव प्रवीणो भविष्यति ।[६३] तस्येयमुक्तिरन्वर्थैव प्रतीयते ।

अत्र कतिपय-श्लोकानामुद्धरणमस्या रचनायाः सौन्दर्य-प्रकाशनार्थमुचितं स्यात् :

(क) सव्यालम्बनमेतदद्य भवतो निःस्नेह मुंचाम्यहं ।
सव्यालं विजहीहि सुन्दरि, वनं निःस्नेहता नास्ति मे ।।
मैवं वक्ष्यसि किं वनं ननु जलं मूर्ध्ना मयैवोह्यते ।
वक्रोक्त्येति हिमाद्रिजामवचसं कुर्वन् हरः पातु वः ।।[६४]

पार्वती शिवं कथयति यद् 'हे निः स्नेह, अहं भवतः सव्यालम्बनम् (वाम-भागस्थितिं) मुञ्चामि ।'

शिवः प्रत्युत्तरयति : सुन्दरि, सव्यालं + वनमवश्यं त्यज, परं मयि निःस्नेहतां मारोपय ।

पार्वती : किं कथयसि, अत्र वनस्य प्रश्न एव न समुदेति ।

शिवः : वनं (जलं) त्वहं शिरसैव धारयामि ।

एवं वक्रोक्त्या पार्वतीमुत्तरशून्यां कुर्वाणो हरो वः पातु ।

---

६३. वक्रोक्तिपंचाशतिमित्थमेनां, यो भावयेन्मत्सररिक्तबुद्धिः ।
स्पष्टोत्तरासूक्तिषु काव्यबन्धे, भवेत्स रत्नाकरवत्प्रवीणः ।
(वक्रोक्तिपंचाशिका, ५१)

६४. व० प०,१

अपिच

(ख) त्वं हालाहलभृत् करोषि मनसो मूर्छां ममालिङ्गतो,
हालां नैव बिभर्मि नैव च हलं मुग्धे, कथं हालिकः ?
सत्यं हालिकतैव ते समुचिता सक्तस्य गोवाहने,
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरो हरः पातु वः ॥[६५]

पार्वती : हालाहलं (कालकूटं) धारयन् भवान् आलिंगितः सन् मे मूर्छामुत्पादयति ।

शिवः : मुग्धे, नैवाहं हालां (सुरां धारयामि न च हलं (हाला + हल इति च्छेदः) तत्कथमहं हालिकः संवृत्तः ?

पार्वती : गोवाहनात् (१. गौरेव वाहनम्-गोवाहनम् २. गवां वृषभाणां प्रेरणम् च) भवतो हालिकता सर्वथैवोचिता ।

एवं वक्रोक्त्या हिमाद्रिजया जितः पुनश्च स्मेराननः शिवो वः पातु ।

(ग) यथावा :

त्वं मेनाभिमतो, भवामि सुतनु ! श्वश्र्वा त्ववश्यं मतः,
साधूक्तं भवता न मे रुचित इत्यत्र ब्रुवेऽहं पुनः ।
मुग्धे, नास्मि नमेरुणा ननु चितः प्रेक्षस्व मां, पातु वो
वक्रोक्त्येति हरो हिमाचलभुवं स्मेराननां मूकयन् ॥[६६]

पार्वती : भवान् मे न अभिमतः (मेनाभिमतः) ।

शिवः : सुतनु, अहं मेनायाः स्वश्वश्र्वा त्ववश्यमेवाभिमतोऽस्मि (मेना + अभिमतः) ।

पार्वती : भवतां कथनं साधु, परं ममाशयो वर्तते यद् भवान् 'न मे रुचितः' (अभीष्टः) ।

शिवः : मुग्धे : अहं नमेरुणा (वन्यफलविशेषेण) चितः (व्याप्तः) नास्मि (नमेरु + चितः), मां पश्य ।

एवं वक्रकथनेन पर्वतराजपुत्रीं मूकयन् शिवो वः श्रेयो विदधातु ।

(घ) किञ्च :

सालंकारतया त्वया मम कथं नेन्दोः कला दृश्यते ?
पश्यामीन्दुकलां स्फुटं पुनरिदं लंकारता नास्मि यत् ।

---

६५. सैव०, २

६६. सैव०, ३

नो भूषाविषयं मयोदितमिदं स्वामिन्, क्व भूः, क्वाप्युषा ?
दिश्याददिसुतानृजूक्तिविजतः शूली स वः सम्पदः ॥[६७]

शिवः : अलंकारतया (अलंकारत्वेन) प्रसिद्धा सा मम इन्दुकला त्वया कथं नावलोक्यते ?

पार्वती : इन्दुकलां त्वहं निश्चितं पश्यामि परं लंकारता नास्मि (सा + लंका + रतया) ।

शिवः : अहं तु भूषाया(अलंकारस्य)विषये कथयामि, नतु लंकायाः ।

पार्वती : स्वामिन्, अत्र प्रसंगे भूः (पृथ्वी) क्व ? उषा अपि च क्व ? (भू+उषा) ।

एवं गौर्याः कुटिलोक्तिभिर्जितः वः श्रेयो वितरतु ।

(ङ) यथावा :

सुभ्रूस्त्वं कुपिता ममेति हृदयं पर्याकुलं वर्तते ,
नैवाहं शठ, कुत्सितस्तव पिता भार्येति नावैषि किम् ?
ऋक्षाणां पतिरस्मि नेत्यसदृशं कस्मात्त्वयामन्त्रितः ?
पायाद्वो गिरिजां जयन्निति गिरा व्याजिह्मया धूर्जटिः ॥[६८]

शिवः : सुन्दरि, त्वं कुपिता (क्रुद्धा) अतो मे मनो दूयते ।

पार्वती : धृष्ट, अहं तव कुत्सितः पिता (कु + पिता) नास्मि, मां स्वकीयां भार्यां कथं न जानासि ?

शिवः : अहं भानां-नक्षत्राणां (ऋक्षाणां) पतिर्नास्मि किमेतदप्रासंगिकं त्वयाभिधीयते ? (भानां=नक्षत्राणाम् आर्य-प्रभो !)

इत्थमनृजूक्तिभिर्गिरिजां जयन्नीशो वो रक्षतु ।

(च) एवमेव :

आद्यूनोऽस्मि सभस्मकः सुरभिषक्कश्चिन्न किं पृच्छ्यते ?
सत्यं देवि, ममास्ति नादिरपरा भूतिस्तु देहस्थिता ।
केनागादि तवात्र भूतिरत्नेर्गुप्तिः स्थिता पादयो–
र्दिश्यान्निर्जितपार्वतीक इति वः सूक्त्या श्रियं शंकरः ॥[६९]

शिवः : अहं 'आद्यूनः' सभस्मकश्चास्मि ।

पार्वती : यदि भवान् आद्यूनः (बहुभोजी, औदरिकः), भस्मकरोगेण

---

६७. सैव०, ७

६८. सैव०, २४

६८. सैव, ३०

सहितश्च वर्तते तर्हि कमपि सुरवैद्यं कस्मान्न पृच्छति ?

शिवः : देवि, तव कथनं सत्यम् । परं मदीय आशयोऽस्ति यदहम् आदिना + ऊनः (रहितः), भूति-सहितश्च (सभस्मकश्च) अस्मि ।

पार्वती : 'भूति'-विषये केन कथितम् (मया तु 'भस्मक' रोगविषये कथितमासीत्) ।

शिवः : भूतिः (भुवः-पृथिव्या ऊतिः-अवनं=रक्षणं, भू + ऊतिः) तु मम पादयोर्वर्तते । (अहं स्वपादौ तथा भूमौ स्थापयामि यथा पृथिव्या रक्षणं भवेत् । सा कम्पिता न स्यादित्याशयः)।

एवं निजवक्रोक्तिभिः पार्वतीं विजयन् शिवो वः सम्पदं दिश्यात् ।

(छ) तथा च :

न क्रीडामहमुत्सहेऽत्र भवता सार्धं पयोधेर्नव–
प्रस्तावः क इवात्र नूतनमथ प्रत्नं न जानाम्यहम् ।
नव्यं कः कथयेत्, किमत्र भवता व्यंकेन सांकेन वा ?
गौर्यात्तप्रतिपत्तिरुत्तरगिरा शम्भुः कृतः पातु वः ।।[७०]

पार्वती : अहं भवता सार्धं क्रीडार्थं नोत्सहे ।

शिवः : (नक्री + इडा, इति च्छेदं कृत्वा कथयति-) अत्र नक्रिणः (समुद्रस्य) इडायाः (स्तुतेः) को नवः प्रस्तावः ?

पार्वती : ('नव' इत्यस्योत्तरे कथयति) इदहं नवीनं प्राचीनं वा न जानामि ।

शिवः : नव्यं (नूतनं) कः कथयेत् ?

पार्वती : ('नव्यं कः' इत्यत्र न + व्यंकः इति छेदं कृत्वा कथयति-) व्यंकेन (विगतांकेन), सांकेन (अंकसहितेन) च भवतः किं प्रयोजनम् ?

एवं गौर्याः स्वोत्तरैः सन्तुष्टः शिवो वोऽवतात् ।

(ज) अन्यदपि :

मुञ्चामीश्वर ! कुञ्जराजिनमहं ते विस्रगन्धाकुलं
कुञ्जे राजितमस्य शैलमिह ते सुभ्रूः पिता पर्वतः ।
नोक्तिर्मज्जनकाश्रया तव भवेत् किं मज्जनेनात्र मे,
शंसन्नित्यजितोऽद्रिराजतनयां नेयाद्द्विषो वः क्षयम् ।[७१]

---

७०. सैव, ३५.

७१ सैव, ४३

पार्वती : ईश्वर, अहं ते विस्रगन्धाकुलं (दुर्गन्धितं) कुञ्जरस्य गजस्याजिनं चर्म मुञ्चामि (परित्यजामि)।

शिवः : ('कुञ्ज+राजिनम्' इति छेदं कृत्वा कथयति) कुञ्जैः राजितं (सुशोभितं) शैलम् अस्य=प्रक्षिप (दूरीकुरु) परमेतज्जानीहि यत् पर्वतस्ते पिता वर्तते।

पार्वती : इयमुक्तिर्मज्जनकाश्रया (मम तातं लक्ष्यीकृत्य) नास्ति।

शिवः : (मज्जनस्य स्नानार्थं गृह्णन् कथयति यत्) अत्र मज्जनेन (स्नानेन) किं प्रयोजनम्?

एवं वक्रोक्तिष्वपराजितः, पार्वतीमालपन् शिवो भवतां शत्रूणां क्षयं कुर्यात्।

(झ) तथैव :

धत्ते चन्द्रकलाञ्छितस्तव जटाजूटः श्रियं हारिणीं
वर्हेणैष न लाञ्छितो न च रुचिं मार्गीं विभर्ति क्वचित्।
उक्तिस्ते विषमातनोति मनसः क्षोभं ममोक्तिः कथं
क्ष्वेडं ते तनुयादुमामिति जयन् सूक्त्या हरो वोऽवतात्॥[७२]

पार्वती : चन्द्रकलया=आञ्छितो युक्तस्तव जटाजूटो मनोहारिणीं श्रियं धत्ते।

शिवः : ('चन्द्रक+लाञ्छित' इति च्छेदं कृत्वा 'हारिणीम्' इत्यस्य च 'हरिणसम्बन्धिनीम्' इत्यर्थं कृत्वा ब्रूते) एष जटाजूटो न तु वर्हेण (चन्द्रकेन) लाञ्छितो न वा मार्गीम्(मृगसम्बन्धिनीं–हारिणीमिति यावत्) एत्र रुचिं (कान्तिं) बिभर्ति (धारयति)।

पार्वती : ते विषमा (कुटिला) उक्तिर्मे मनसः क्षोभं तनोति।

शिवः : (विषमातनोति इत्यत्र 'विषम्+आतनोति' इतिच्छेदं कृत्वा कथयति) ममोक्तिस्त्वयि विषं कथं तनुयात् (संक्रामयेत्)?

एवं वक्रोक्तिविजितपार्वतीकः शम्भुर्वो रक्षतु।

(ञ) अन्यत्रापि च :

कर्ता शूलपराजितां रिपुचमूमेकस्त्वमेवोद्धतां,
नो शीघ्रं तृणमण्डितारिपृतना केनापि काचित्कृता।

---

७२. सैव, ४४

वक्तुं ते कुशला कया तव गिरा स्यां दुःशलाका न वा-
गस्तीशो वचसाद्रिजामिति जयन्निष्टं निधासीष्ट वः ।।[७३]

पार्वती : उद्धतां रिपुचमूम् (शत्रुसेनाम्) शूलपराजिताम् (शूलेन पराजिताम्) एकस्त्वमेव कर्त्ता ।

शिवः : ('कर्त्ता+आशु+उलप - (तृणविशेष + राजिताम्' इतिच्छेदं कृत्वा स्वं वाग्वैदग्ध्यं प्रकाशयति-) शीघ्रमेव तृणैराजिता (मण्डिता) शत्रूणां सेना तु न केनापि कांचित् कृता ।

पार्वती : अहं भवता साकं कया गिरा (वाचा) वक्तुं कुशला (समर्था) स्याम् ?

शिवः : (कुशला कया इत्यत्र 'कुशलाकया' इति तृतीयान्तं मत्वा कुत्सितया शलाकयेत्यर्थं च कृत्वा वक्ति-)तव वाक् दुःशलाका तु नास्ति । एवमुक्ति - प्रत्युक्तिभिर्गिरिजां मूकयन् पिनाकी वोऽवतात् ।

एवमनेकैः संभगैरभंगैश्च श्लेषैः पूर्णाभिर्वक्रोक्तिभिर्मण्डितेयं 'वक्रोक्ति-पंचाशिका'ऽनुशीलिता सती सहृदयानां हृदयेषु कामप्यनिर्वचनीयां रुहरुहिकाम् (उत्कलिकां) जनयति ।

## (२) ध्वनिगाथापंचिका

'ध्वनिगाथापंचिका' रत्नाकरस्यापरा कृतिः । 'शारदापीठप्रदीप' नाम्नि पूर्वोट्टंकिते शोधपत्रे डा० कु० सन्तोषकुमारी देव्या रत्नाकरस्य जीवनसम्बन्धे एको लेखः प्रकाशितोऽस्ति, यस्मिन् ध्वनिगाथापञ्चिकायाः सम्बन्धे लिखितमस्ति 'इट इज़ स्मौल पोयम आफ़ फ़िफ्टी वर्सेज़ ओन्ली, इन ह्विच दि पोयट हैज़ डेस्क्राइब्ड एन इमेजिनरी। डायलोग बिट्वीन लार्ड शिवा एन्ड गोड्डेस पार्वती' ।[७४]

ध्वनिगाथापञ्चिकाया एकस्याः पाण्डुलिपेः, प्रतिलिपिः, मम प्रार्थनायां, 'भण्डारकर ओरियण्टल रिसर्च, इन्स्टीट्यूट' इत्यस्याध्यक्षैः डा० ए० डी० पुसालकरैः स्व शोध - संस्थानात् मम पार्श्वे प्रेषिता । तेषां पत्रानुसारं सा १८७५-७६ ईसवीये वर्षे शोध-संस्थानार्थे प्रस्तुतासीत् । तस्याः संख्या संस्थानानुसारं २५३ वर्तते ।

७३ सैव, ४८

७४. डा० सन्तोषकुमारी शर्मा-'लाइफ़ आफ़ रत्नाकर', 'शारदापीठ-प्रदीप' (इण्डोलाजिकल रिसर्च इन्स्टीट्यूट, द्वारका) पृष्ठ सं०७८ खण्डः सं २, १९६४,

तां प्रतिलिपिं दृष्ट्वा दक्षतर्याः सन्तोषकुमार्या 'ध्वनिगाथापंचिकायाः' सम्बन्धे उक्तं विवरणं मय्यत्यन्तमाश्चर्यमजीजनत्। यद्यपि सा प्रतिलिपिर्बहुशो लेखकप्रमाद-ग्रस्ता, तथापीदं स्पष्टं यत्तत्र शिव—पार्वत्योः सम्भाषणस्य चर्चा दूरतोऽपि नास्ति। तत्र तु ध्वन्यालोके उद्धृतानां गाथानामानुपूर्वीतः संकलनमस्ति। सहैव च तासां व्याख्याप्यस्ति। व्याख्या च ध्वन्यालोकानुसारमेवास्ति। तस्याः प्रारम्भे मंगलाचरणमेवं वर्तते :

वाग्देवीं शिरसा नत्वा वाचो वैचित्र्यहेतवे।
करोति कश्चिद् गाथानां ध्वनिशास्त्रस्य पंचिकाम्॥

अन्ते च पुष्पिकेत्थमस्ति - "समाप्ता ध्वनिगाथापंचिका। कृतिरियं काश्मीराचार्यरत्नाकरस्य।"

पुष्पिकया त्वस्या रत्नाकर-कर्तृत्वं सिध्यति, परमासु तिस्रो गाथा एतादृश्यः सन्ति या नामग्राहं ध्वन्यालोके समुद्धृताः सन्ति। एका 'भ्रम धार्मिक' इत्याख्या गाथा 'गाथासप्तशत्या' अस्ति।

(क) आनन्दवर्धनाचार्येण 'उपमा-ध्वनि'-प्रसंगे स्व 'विषमबाणलीला'-नाम्न्याः प्राकृतकृतेस्त्रैलोक्यविजेतुः कामदेवस्यासुरविषयकपराक्रमाप्रसंगान्निम्नलिखिता गाथा समुद्धृतास्ति :

तं ताण सिरिसहोअररअणाहरणम्भि हिअअमक्करसम्।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन॥

छाया : (तक्त्युषां श्रीसहोदररत्नाहरणे हृदयमेकरसम्।
बिम्बाधरे प्रियाणां निवेशितं कुसुमबाणेन॥)[७५]

(ख) अपरा गाथा विवक्षितान्यपरवाच्यध्वनेः कविप्रौढोक्तिमात्रसिद्धार्थशक्त्युद्भवभेदे पदप्रकाश्यताया उदाहरणस्वरूपं प्रवरसेनकृतात् 'हरिविजय'-नाम्नः प्राकृतरूपकाद् उद्धृतास्ति :

चूअंकुरावअंसं छणमप्पसरमहग्घपरामणहरसुरामोअम्।
असमप्पिअं पि गहिअं कुसुमसरेण महुमासलच्छिमुहम्॥

छाया : (चूतांकुरावतंसं क्षणप्रसरमहार्घमनोहरसुरामोदम्।
असमर्पितमपि गृहीतं कुसुमशरेण मधुमासलक्ष्मीमुखम्॥)[७६]

(ग) तृतीया च गाथा संसृष्टालंकारेण साकं ध्वनिसंसृष्टेरुदाहरणस्वरूपमुद्धृतास्ति। इयं गाथा 'गाथासप्तशत्याः' उद्धृतास्ति :

---

७५. ध्वन्यालोकस्य द्वितीयोद्योते, २७ कारिकायाम्।

७६. ध्वन्यालोकस्य तृतीयोद्योते, १ कारिकायाम्।

अहिणअपओदरसिएसु पहिअसमाइएसु दिअहेसु ।
सोहइ पसारिअगिआणं णच्चिअं मोरवन्दाणम् ।।

छाया : (अभिनवपयोदरसितेषु पथिकश्यामायितेषु(सामाजिकेषु)दिवसेषु ।
शोभते प्रसारितग्रीवाणां (गीतानां) नृत्तं मयूरवृन्दानाम् ।।)[७७]

एवं स्थिते समग्राया अस्या रचनाया रत्नाकरकर्तृत्वं बुद्धिसंगतं न प्रतिभाति । इदमप्युल्लेखनीयं वर्तते यद् यत्र-यत्र प्रत्येकमुद्योतस्य गाथाः समाप्तिं यान्ति तत्रतत्रास्यां प्रतिलिप्याम् 'इति प्रथमोद्योतगाथासंकेतः', 'इति द्वितीयोद्योत-गाथा संकेतः,' इत्यादयः संकेताः प्राप्यन्ते । अनेन किमेतन्न सिध्यति यद् ध्वन्या-लोके समुद्धृतानां गाथानामेव केनापीदं संकलनं कृतं भवेत् ? मंगलाचरणस्य 'कश्चित्' शब्दोऽपीमामेव सम्भावनां पोषयति ।

परं किं 'ध्वनिगाथापंजिकाया' रत्नाकर-कर्तृत्वं, यत्पण्डितेषु प्रसिद्धं, सर्वथा निर्मूलमस्ति ? अत्र समाधानप्रकार एवं सम्भवति राजतरंगिण्यनुसारं रत्ना-कर-आनन्दवर्धनाचार्यौ सम्राजोऽवन्तिवर्मणः समापण्डितावास्ताम् । इमावु-भावपि सुहृदावास्ताम् । रत्नाकरो न केवलं संस्कृतस्यापितु लोकभाषा-णामपि मार्मिको विद्वानासीत् तस्य प्राकृतस्याप्यनेका रचनास्तदा प्रसिद्धाः स्युः । तासु कासांचिद् उपयोग आनन्दवर्धनेन स्व ध्वन्यालोकग्रन्थे कृतो भवेत् । एतेन लाभद्वयं संजातम् । एकतस्तु आनन्दवर्धनाचार्यः स्वोपयोगस्य महत्वपूर्णम् वस्तुजातं सरलतयैव प्राप्तवान्, अपरतश्चस्वमित्रस्य कृतीन् सहृदय-समाजे प्रतिष्ठापनात् स हार्दिकं सन्तोषमवाप ।

इमाः सर्वा अपि गाथा नितान्तं सारगर्भिताः । एतासां महत्वं त्वनेनैव सिध्यति यद् ध्वनिप्रस्थापनपरमाचार्येण 'आनन्दवर्धनाचार्य'-सदृशेन काव्यमर्म-ज्ञेन तासां स्वग्रन्थे सादरमुल्लेखः कृतः । इमा रत्नाकरं 'पण्डितकविना' साकं 'सफललोककवि' रूपेऽपि समानयन्ति । युगपदेव काव्यस्य सर्वेष्वपि भेदेषु कवेरप्रतिहतमधिकारं दर्श-दर्शं स्वकृते तस्य 'वागीश्वर'-कथनं सर्वथोचितं प्रतिभाति ।

'शारदापीठप्रदीपे' प्रकाशिते उपरिनिर्दिष्टे लेखे एका भ्रान्तिरप्याप्यभूत्, सा चेयम् यल्लेखिकयास्याः कृतेर्नाम 'ध्वनिगाथापंचाशिका' स्वीकृतम् । अस्मिन्नेवाधारे हरविजयं ५० सर्गात्मकं साधयन्त्या तया तर्कोऽयं प्रदत्तः-''दी हरविजय ओरिजनली कण्टेन्ड फिफ्टी कैन्टोज़. दि नम्बर फ़िफ़्टी एप्पीयर्स टु वी फ़ेवरेट विद् द पोयट फ़ार द 'वक्रोक्तिपंचाशिका' एण्ड 'ध्वनिगाथापंचा-

---

७७. ध्वन्यालोकस्य तृतीयोद्योते, ४४ कारिकाया विवेचने ।

शिका' आल्सो कन्टेन इट, एज़ दे कन्सिस्ट आफ् फ़िफटी स्टैन्जाज़।[७८]

ध्वनिगाथापंजिकाया: मत्पापार्श्ववर्तिन्यां प्रतिलिप्यां ४७ गाथा: सन्ति। आसु :

सज्जेहि सुरहिमासो ण दाव अप्पेइ जुअइजणलक्खमुहे।
अहिणवसहआरमुहे णवपल्लवपत्तले अणंगस्स शरे॥

छाया : (सज्जयति सुरभिमासो न तावदर्पयति युवतिजनलक्ष्यमुखान्।
अभिनवसहकारमुखान् नवपल्लवपत्रलताननङ्गस्य शरान्॥)[७९]

इयं गाथा वारत्रयम्,

वाणिअअ हत्तिदन्ता कुतो अह्माणं बाघकित्ती अ।
जाव लुलिआलअमुही घरम्भि परिसक्कए सुह्णा॥

छाया : (वणिजक हस्तिदन्ता: कुतोऽस्माकं व्याघ्रकृत्तयश्च।
यावल्लुलितालकमुखी गृहे परिष्वङ्क्ते स्नुषा॥)[८०]

इयं वारद्वयम्,

साअरविइण्णजोव्वणहत्थालम्बं समुण्णमन्तेहिम्।
अब्भुठ्ठाणं विअ मम्महस्स दिण्णं तुइ थणेहिम्॥

छाया : (सादरवितीर्णयौवनहस्तावलम्बं समुन्नमद्भ्याम्।
अभ्युत्थानमिव मन्मथस्य दत्तं तव स्तनाभ्याम्॥[८१]

इयं चापि वारद्वयं समायाता।

एवं गाथात्रयस्य नौन्यात् ४४ गाथा एवावशिष्यन्ते। यद्युपर्युक्ता नामोत्लेखवत्यस्तिस्रो गाथा 'भ्रमधार्मिक' इत्यनेनसाकमऽपि निष्कास्यन्ते तदा त्वियं संख्या ४० एव भवति। अतो ध्वनिगाथापञ्जिकायां, ५० गाथा: स्वीकृत्य तस्या नाम 'ध्वनिगाथापंचाशिका' करणमहृदयङ्गममाभाति।

अस्या: समग्रभ्रान्तेर्मूलं श्रीमत: कृष्णमाचार्यमहोदयस्यैतत् कथनं प्रतिभाति--'वक्रोक्तिपञ्चाशिका' इज़ ए स्माल पोयम आफ़ फ़िफ्टी वर्सेज़, बीग एन इमेजिनरी डायलाग़ बिट्वीन शिव एण्ड पार्वती आफ् इंजीनियस् इण्ट्रिकेसी, एण्ड 'ध्वनिगाथापञ्चिका' इज़ ए सिमिलर पोयम'।[८२]

अत्र 'सिमिलर' शब्द एव भ्रामक:। यद्ययं शिव-पार्वती-वार्तालापपरकस्तदा

---

७८. शारदापीठ–प्रदीपे प्रकाशित: पूर्वोक्त: लेख:

७९. ध्व० उ० २, कारिका २४.

८०. तदैव उ०, कारिका २४,

८१. ध्व० ३ का० १

८२. श्री कृष्णमाचार्य, हिस्ट्री आफ़ क्लासिकल सं० सिट०, पृ० १६१ (स० १९३७)

स्त्वत्रापि सैव विप्रतिपत्तिर्यदि च संख्यासूचक एव तदास्य कथञ्चित् समाधान मंगलाचरण– पुष्पिका-पुनरावृत्त - गाथानां संकलनेन, पंचाशदुपलक्षणेन संख्या-नेन, भवितुं शक्नोति ।

अन्यच्च– 'हरविजयस्य' 'वक्रोक्तिपंचाशिकायाश्'चान्ते 'रत्नाङ्क' शब्दस्य प्रयोगः प्राप्यते परं 'ध्वनिगाथापञ्जिकाया' अन्ते न । अत इयं कृतिर्वर्तमानरूप एव रत्नाकरस्य स्वीकर्तुं न शक्यते ।

अत इदं निर्धारणमुचितं प्रतीयते यद् रत्नाकरस्य प्राकृत–गाथानां किमपि संकलनं प्रचलितं भवेत् तस्माद् गाथानामधिकांशो ध्वन्यालोके उद्धृतो भवेत् । कालान्तरे चात्यन्तप्रचलितानां गाथानां संकलनं केनापि कृतं स्यात् । ध्वन्या-लोके उद्धृताः सर्वा अपि गाथास्तेनसंकलिताः स्युः । 'ध्वनिगाथापञ्जिका' च तस्य संकलनस्य नाम कृतं भवेत् । एतदेव 'करोति कश्चिद् गाथानां ध्वनि-शास्त्रस्य पञ्जिकाम्' इत्यनेन प्रतीयते ।

ध्वनिगाथापंचिकाया विषयेऽपरां भ्रान्तिं डा० कृष्णकुमारः स्वसम्पादित-ध्वन्यालोक - भूमिकायां [८३] करोति । स लिखति — 'रत्नाकरेण स्वध्वनिगा-थापंचिकायां ध्वन्यालोकस्य प्राकृतगाथानां व्याख्या कृतास्ति । रत्नाकरस्य समयोऽभिनवगुप्तानन्तरमभविष्यद् यतोहि तेनास्यां व्याख्यायामभिनवगुप्तस्या-नुकरणं कृतम् । रत्नाकरानन्दवर्धनाचार्यौ समसामयिकौ । यथा च कल्हणेन राजतरंगिण्यामुक्तम् । तस्याभिनवगुप्तस्यानन्तरं स्थितेस्तु प्रश्न एव नोदेति ।' उक्त सम्पादकस्येदं कथनं स्ववचनविरोधादेवापास्तं भवति ।

पुस्तकमिदं कदाचिदुभाभ्यामपि नोपलब्धमस्मादेतद्विषये भ्रान्तिर्नात्यन्ता-श्चर्यकारिणी ।

(४) रत्नाकरेण कश्मीरस्येतिहास -- सम्बन्धेऽपि कस्यचित् पुराणस्य रचना कृताऽऽसीत् । तत्पुराणं श्रीमतो रणवीरसिंहस्य शासन–काले (१८८६-१९४२) काश्मीरे सुप्रसिद्धस्य पण्डितप्रवरस्य श्रीरामचन्द्र गारुडस्य गृहे दग्धे तस्य बहुभि-रन्यैर्बहुमूल्यैर्ग्रन्थैः साकं भस्मसादभूत् ।[८४] यदि तत्प्राप्तमभविष्यत्तर्हि काश्मीरे-तिहासे नूतनः प्रकाशोऽपतिष्यत् ।

एवं बहूनामन्येषामपि ग्रन्थानां कर्तृत्वं, रत्नाकरस्य, बुद्धिसंवेद्यम् ।

अस्मिन् ग्रन्थे 'हरविजयस्य' समीक्षात्मकमध्ययनं प्रस्तुतीकृतं स्यात् ॥

---

८३. ध्वन्यालोकः, सम्पादकः डा० कृष्णकुमारः, सा०भ० मेरठ, भूमिका, पृ० ६०-६१ (१९७३).

८४. विश्व-संस्कृत-शताब्दी-ग्रन्थः, जम्मू-कश्मीर-राज्य-भागः, अखिल भारतीय संस्कृत-साहित्य-सम्मेलनम् संवत् २०२२, 'आमुखम्' (ण) पंक्तिः ९-११.

### तृतीयोऽध्यायः

# रत्नाकरस्य वैदुष्यम्

कवीनां कृते न केवलं शक्तिरेवापितु व्युत्पत्तिरप्यनिवार्या। "बहुज्ञता व्युत्पत्ति"रित्याचार्याणां मतम्। 'समस्तवस्तुपौर्वापर्यपरामर्शकौशलं व्युत्पत्तिः'-इत्यभिनवगुप्तपादाः। 'छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात्। युक्तायुक्तविवेको व्युत्पत्तिरियं समासेन' इति रुद्रटः।[1] 'उचितानुचितविवेको' व्युत्पत्तिरिति राजशेखरः।[2] मम्मट इमामेव 'निपुणता' कथयति। सा च निपुणता 'लोकस्य स्थावरजंगमात्मकस्य लोकवृत्तस्य, शास्त्राणां छन्दोव्याकरणाभिधानकोशकलाचतुर्वर्गगजतुरगादिलक्षणग्रन्थानां, काव्यानां च महाकविसम्वन्धिनाम् आदिग्रहणादितिहासादीनां च विमर्शनाद्'[3] अर्जयितुं शक्यते।

भामहादीनामपि मते विविधशास्त्रव्युत्पत्तिः कवीनां कृते नितान्तमनिवार्यास्ति :

शब्दश्छन्दोऽभिधानार्थौ इतिहासाश्रयाः कथाः।
लोकोयुक्तिकलाश्चेति मन्तव्याः काव्ययोनयः॥
लोको विद्या प्रकीर्णं च काव्याङ्गानि॥[4]

काव्यमीमांसायामपि काव्यार्थानां षोडश योनय उक्ता :
'श्रुतिः, स्मृतिः, इतिहासः, पुराणं, प्रमाणविद्या, राजसिद्धान्तत्रयी, लोको, विरचना, प्रकीर्णकं च काव्यार्थानां द्वादशयोनयः इत्याचार्याः, उचितसंयोगेन, योक्तृसंयोगेन, उत्पाद्यसंयोगेन, संयोगविकारेण च सह षोडश इति यायावरीयः।[5]

प्रतिभा-व्युत्पत्योः कतरा श्रेष्ठतरेति विषये विदुषां विसंवादाः सन्ति। अनयो, प्रतिभा श्रेयसीत्यानन्दवर्धनाचार्याः। 'एतद् विपरीतं काव्यमीमांसायामुद्धृ-

१. काव्यालंकार, १।१८
२. काव्यमीमांसा, अध्यायः
३. काव्यप्रकाशः, उल्लासः १
४. भामहः, काव्यालंकारः
५. काव्यमीमांसा, अष्टमोऽध्यायः।

तानां मंगलाचार्याणां मतम् ।[७] परं राजशेखरस्य मतमस्ति — 'प्रतिभाव्युत्पत्ती मिथ: समवेते श्रेयस्यौ ।'[८] मम्मटाचार्येण शक्तिनिपुणताभ्यासानाममेकत्वमङ्गीकृतम् ।[९] काव्यस्य यः शक्यतावच्छेदकोऽनुपहसनीयतारूपः सोऽप्युक्तकाव्यहेतूनां सन्तुलनेनैवोपपादयितुं शक्यते ।

मम्मटाचार्यानन्तरमपीदं विवेचनं प्रसरदेवासीत् । वाग्भटः प्रतिभामेव प्रधानाममन्यत श्रुत्यभ्यासौ च तत्संस्कारकत्वेन ।[१०] केशवमिश्रोऽपीत्थमेव मन्यते :

प्रतिभा कारणं तस्य, व्युत्पत्तिस्तु विभूषणम् ।
भृशोत्पत्तिकृदभ्यासः काव्यस्यैषा व्यवस्थितिः ।।

पण्डितराजो जगन्नाथः प्रतिभामेव प्रधानत्वेन स्वीकरोति । प्रतिभास्वरूपं च तन्मते—"काव्यघटनानुकूलशब्दार्थोपस्थितिः ।[११]

प्रतिभाया महत्वं प्रतिपादयता महिमभट्टेन साधूक्तमासीत् :

स हि चक्षुर्भगवतस्तृतीयमिति गीयते ।
येन साक्षात्करोत्येष भावांस्त्रैलोक्यवर्तिनः ।।[१२]

सा च प्रतिभा कारयित्री भावयित्री चेति द्विधा । कारयित्री कवेरुपकर्त्री, भावयित्री च सहृदयोपकर्त्री । निर्मला प्रज्ञा, अभ्यासः, शक्तिश्चेत्येकत्र दुर्लभमस्ति,[१३] यत्र च सुलभं तत्र कविराजता नेदिष्ठैव भवति ।

अनेन च शक्तिव्युत्पत्यभ्यासबलेन विरचितं काव्यं तारतम्यातिशायि सत् सर्वत्र प्राप्तप्रसरं भवति :

एकस्य तिष्ठति कवेर्गृह एव काव्यमन्यस्य गच्छति सुहृद्भवनानि यावत् ।
न्यस्याविदग्धवदनेषु पदानि शश्वत् कस्यापि संचरति विश्वकुतूहलीव ।।[१४]

---

६ अव्युत्पत्तिकृतो दोषः शक्त्या संव्रियते कवेः ।
यस्त्वशक्तिकृतस्तस्य झगित्येवावभासते ।
न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः । (ध्वन्यालोकः)

७. कवेः संव्रियतेऽशक्तिर्व्युत्पत्त्या काव्यवर्त्मनि ।
वैदग्धीचित्तचित्तानां हेया शब्दस्य गुम्फना ।।

८. का० मी० ५,

९. त्रयः समुदिताः, न तु व्यस्तास्तस्य काव्यस्योद्भवे,
निर्माणे, समुल्लासे च हेतु र्नतु हेतवः ।। (काव्यप्रकाशः, १)

१० प्रतिभैव च कवीनां काव्यकरणकारणकम् ।

११. रसगंगाधरः ।

१२. व्यक्तिविवेकः ।

१३. बुद्धिमत्वं च काव्यांगविद्यास्वभ्यासकर्म च ।
कवेश्चोपनिपच्छक्तिस्त्रयमेकत्र दुर्लभम् ।। (आ० मी० अ०४)

१४. सैव, अ० ४.

रत्नाकरस्य महाकाव्यमेतद्विधमेवास्ति । शक्तिनिपुणताभ्यासानामेवंविधं सम्मेलनं सुदुर्लभमेवास्ति । तस्य वैदुषी निभालं-निभालं चेतश्चमत्कृतं सञ्जायते । सरस्वती सविग्रहेवात्र विराजमाना समवलोक्यते । तस्यासाधारणी शेमुषी सर्वत्र नरीनृत्यति । सोऽशेषशास्त्राटवीसंचरणपंचानन इवावलोक्यते । रत्नाकरवद्गभीरस्य तस्य पाण्डित्यस्य विषयेऽस्मिन्नध्याये किमप्युक्तं स्यात् ।

**वैदिकम्**

मन्त्रब्राह्मणात्मको वेदः । मन्त्राणां समुदायः संहिता । ब्राह्मणानां विभाग-त्रयम्—(१) ब्राह्मणाः (२) आरण्यकाः (३) उपनिषदश्च । उपनिषदां सारः श्रीमद्भगवद्गीता । उपनिषदः, श्रीमद्भगवद्गीता ब्रह्मसूत्राणि च मिलित्वा 'प्रस्थानत्रयी'ति कथ्यते । वेदस्य काण्डत्रयं प्रसिद्धं वर्तते—कर्मकाण्डम्, उपासनाकाण्डम्, ज्ञानकाण्डं चेति । हरविजये यथायथं रत्नाकरेण वेदस्योक्त-स्वरूपस्य काव्यशैल्योपनिबन्धनं कृतमस्ति । चतुर्दशसर्गस्य चतुर्विंशे श्लोके सामवेदस्य पंचभक्तीनां संकेतः कृतो वर्तते ।[१५] श्रौतमागमं मन्त्रयुक्तिगहनं,साम्ना च सुष्ठु भवति ।[१६] श्रौतो मन्त्रः शान्ति-हेतुर्भवति ।[१७] श्रुतिःसर्वदैवोङ्कारसहिता चकास्ति ।[१८] ओंकारो मूलमन्त्रः सर्वस्य ।[१९]

न केवलमेतेषां केचन सङ्केता एव प्राप्यन्तेऽपितु शिवस्तुति-चण्डीस्तुतिप्रसंग-योर्वेदानां मन्त्रा विनावरोधमवतरन्तोऽवलोक्यन्ते । उदाहरणार्थम् :

शीर्षैः सहस्रशिरसा पुरुषेण साम-गीतिर्विभेदगहनप्रतिपन्नशाखा ।
त्वं गीयसे श्रुतिसुखा रुचिरप्रपंचपंचप्रकारपरिनिष्ठितचारुभक्तिः ॥[२०]

यत्तत्वं सर्वत्र सर्वमप्यभिव्याप्य स्थितं तत्तत् :

व्याप्य स्थितो जगति यः सकला गिरश्च ,
यश्च प्रविश्य किल ता अपि धातुरीड्यम् ।

---

१५. आहवलम्, हिंकारः, प्रस्तावः, प्रतिहारकः ।
उद्गीथो, निधनश्चेति पंचोक्ताः सामभक्तयः ॥

१६. हर० १४।५६

१७. तदेव १६।३३

१८. तदेव ४३।४७

१९. तदेव १३।६९

२०. हर० ४७।५७,

तुलनीयम् : सहस्रशीर्षाः पुरुषः, सहस्राक्षः, सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्टद्दशाङ्गुलम् ॥ (पुरुषसूक्तम्)

यं सर्वतोमुखमथर्वगिरश्च हेतु-
मालम्बमूलमवदातधियो वदन्ति ।।[२१]

तत्तत्वं न सूर्येण न चाग्निनो प्रकाश्यते, स्वयंप्रकाशत्वात्तस्य । तस्यैव भासा सर्वमिदं चकास्ति :

नो ताम्यते विशि दिवाकरपावकैर्यद्-
भासा च यस्य सकलं व्यवभास्यतेऽदः ।
विद्या सतत्त्वमिति च प्रकृतिः परेति,
शक्तिश्च यस्य भगवानरविन्दनाभः ।।[२२]

एवंविधानां श्लोकानां संख्या भूयसी वर्तते, यत्र श्रुति-स्मृतीनां न केवलं संकेता अपितु शब्दा अप्यानुपूर्वीत उत्थिता एवायान्ति । केषाञ्चित् श्लोकाना-मुद्धृतिरप्रासंगिकी न स्यात् ।

श्रुतयः पदं परममामनन्ति यं बहुवक्त्रपादपि च योऽभिधीयते ।
अधिगम्य यं पुनरुदेति नो जनः, प्रणवस्तवैव भगवन् ! स वाचकः ।।[२३]
व्रजसीश ! पादरहितो गृहीतृतां प्रतिपद्यसे करविनाकृतोऽपि सन् ।
अवलोकयस्यनयनोऽप्यकर्णकः सकलं शृणोषि, न च वेत्सि, वेत्सि च ।।[२४]
चिदचित्परोऽप्यचिदचित्परो भवन्नतदाभ एव हि तदात्मतां दधत् ।
सदसत्परोऽप्यसदसत्परस्थितिर्बहुवक्त्रपादवयवैर्विनाकृतः ।।[२५]

विंशे सर्गे एकादश श्लोके हिरण्यगर्भस्य, सृष्टेरादौ चाप्सर्गस्य संकेतः प्राप्यते — 'सोऽभिध्याय शरीरात् स्वाः सिसृक्षुर्विविधाः प्रजाः । अप एव

---

२१. हर० ४७।६२,
तुलनीयम् : सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ।। (श्वेताश्वतर०)

२२. हर० ४७।८०,
तुलनीयम् :
न तत्र सूर्यो भाति न चन्द्रतारकं, नेमा विद्युतो भान्ति, कुतोऽयमग्निः ?
तमेव भान्तमनुभान्ति सर्वं, तस्य भासा सर्वमिदं विभाति ।।
(श्वेताश्वतर०)

२३. हर० ६।२४
२४. तदेव ६।४२
२५. तदेव ६।४६,
तुलनीयम् : पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ।।
अपाणिपादो जवनो गृहीता, पश्यत्यचक्षुः, स शृणोत्यकर्णः ।
स वेत्ति वेद्यं, न च तस्यास्ति वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम् ।।

ससर्जादौ तासु वीर्यमवासृजत् ।। तदण्डमभवद्धेमं सहस्रांशुसमप्रभम्'' इत्यादिवचनात् ।[२६]

वैदिक वाङ्मयस्य रहस्यं रत्नाकरस्य कृतौ चकास्ति । शिवशक्त्योस्तत्त्वनिरूपणे विशेषत इदं प्रद्योतते । तच्च मनागत्र प्रदर्शितम् ।

## पौराणिकम्

रत्नाकरेण पुराणानां गहनमनुशीलनं कृतमासीत् तस्य काव्येऽनर्गलं तत्त्रत्यानां संकेतानामोघः प्रसरन्निवाभाति । नृसिंहस्य, हिरण्यकशिपोः, हिरण्याक्षस्य चासकृदुल्लेखः (१।५, ३२।६, ३२।६६), भगवतः शंकरस्य किरातरूपधारणम्(८।१३), विष्णोश्च मोहनीरूपधारणम् वामनरूपधारणम् च (३८।६६) वातापि-अरिष्ट-शल्य-राक्षसानां चर्चा (११।३०), वराहावतारकथा (११।४३) ३०।८३, ४३।४७), सूर्याचन्द्रमसो राहुणा ग्रासः (११।४८), नमुचि-प्रसंगः (१५।५२, ५३, ५४, ५५, २०।६, ३८।४०), गंगायाश्चन्द्रमण्डलादुत्पत्तिः (२०।१३, २६।३१), बलरामद्वारा धेनुकवधः (२०।१७), सुधाकलशवृत्तान्तः (२०।२२), क्रौञ्चभेदकथा (२०।२३), चन्द्रस्यात्रिनेत्रादुत्पत्तिः (२०।२७), सन्ध्याजन्मकथा (२१।२३), इन्द्रस्य ब्रह्महत्याशापः (२६।५५) दमयन्ती-कथा (३२।२२), कश्यपस्य दक्षकन्याभिः साकं विवाहः, दैत्य-दानव-देवानां चोत्पत्तिः (३२।६१-१०१), शुक्राचार्य-तपश्चर्या (३३।८), गरुडद्वारा स्वपक्षत्यागादिन्द्रस्य वज्रस्यावैयर्थ्यपरिपालनम् (२३।४२), दक्षयक्षविध्वंसः (३६।५१), इन्द्रस्य पर्वतपक्षच्छेदः ३१।३७) भगवतः कृष्णस्य केशिना साकं युद्ध-गाथा (४२।४१), बालखिल्य-कथा (४७।१५०) स्यमन्तपंचके परशुराम-द्वारा क्षत्रप्रधनम् (४३।४) इत्येवमादिकाः पौराणिक्योऽन्तःकथाः कोष्ठकांकितेषु श्लोकेषु संकेतिताः । एतासां कथानां प्रसिद्धत्वात् कलेवरवृद्धिभयाच्चोद्धरणदानं न कृतम् । महाकाव्यस्य कथानकं तु शिवपुराणादगृहीतमेव ।

शिवस्तुतिवर्णने षष्ठे सर्गे शिवपुराणस्य भूयान् प्रभावोऽवलोक्यते । आगामिन्यध्याये शिवपुराणस्य केचनांशाः समुद्धृताः स्युः ।

## दार्शनिकम्

सांख्य-योग-न्याय-वैशेषिक-पूर्वमीमांसा-उत्तरमीमांसेति भेदेनास्तिकदर्श-

---

यदातमस्तन्न दिवा न रात्रि र्न सन्न चासच्छिव एव केवलः
तदक्षरं तत्सवितुर्वरेण्यं, प्रज्ञा च तस्मात् प्रसूता पुराणी ।।
(श्वेताश्वतर०)

२६. मनु० १।८, ६.

नानि षट् । चार्वाक-जैन-बौद्ध-भेदेन च नास्तिकानि त्रीणि । एतेषां शैवागमादीनां च प्रकाण्डं पाण्डित्यमस्मान् महाकाव्याद् रत्नाकरस्य ज्ञायते । संक्षेपतस्तदिह निरूप्यते ।

**सांख्ययोगौ**

सांख्यदर्शने प्रकृति-पुरुषयोः संयोगेन यथा सृष्टिर्भवति यथा च पुरुषस्य मोक्षो भवति, इति प्रतिपादितमस्ति । प्रकृतिपुरुषयोर्योग एव संसृतिहेतुर्वियोगश्च 'सत्त्वपुरुषान्यताख्यातिरूपेण कथ्यते । सांख्ये प्रकृतिः पुरुषस्य साहचर्यात् सक्रिया सञ्जायते । प्रकृतिः सत्वरजस्तमःस्वरूपा—त्रिगुणवती, जडा किन्तु क्रियाशीला, पुरुषश्च निर्गुणः, साक्षिमात्रं चेतनः किन्तु निष्क्रियो भवति । परस्परविलक्षणयोरनयोः सम्बन्धः 'पङ्ग्वन्धवत्' संजातः । सांख्ययोगयोस्तत्त्वमीमांसा प्रायेणैकरूपैव, केवलमन्तरमिदमस्ति यत् सांख्यमीश्वरं तथा न स्वीकरोति यथा योगः । अतएव योगस्य संज्ञा 'सेश्वरसांख्यम्' इत्यस्ति । सांख्ये पंचविंशतितत्त्वानि स्वीकृतानि । संख्यया सम्बद्धत्वादस्य संज्ञा 'सांख्यम्' इति संजाता । पंचविंशतितत्वानि चेमानि भवन्ति प्रकृतिः, महान् (बुद्धिः), अहंकारः, एकादशेन्द्रियाणि, पंचतन्मात्राः, पंचमहाभूतानि, पुरुषश्च । इमानि पंचविंशतितत्त्वानि वर्गचतुष्टये विभाजयितुं शक्यन्ते--(क)अविकृतिः(ख)प्रकृतिविकृतिः (ग) विकृतिः (घ) न प्रकृतिर्न विकृतिः । तत्र मूलप्रकृतिरविकृतिर्भवति, यतो हि सा कस्यचिद् विकारो नास्ति । महत्तत्वमहंकारः, पञ्चतन्मात्राश्च प्रकृति विकृतयो भवन्ति । प्रकृतयोऽस्माद् यत्तानि तत्त्वान्तराणि जनयन्ति, विकृतयोऽस्माद् यत्तानि कस्माच्चिद् द्रव्यादुत्पद्यन्ते । प्रकृतिविकृतयः सप्त । एकादशेन्द्रियाणि, पञ्चमहाभूतानि चेतीमानि षोडशतत्त्वानि केवलं विकृतय एव । इमानि किमपि न जनयन्ति, अतो न प्रकृतयः । पुरुषश्च न प्रकृति र्न--विकृतिः— सर्वथा विलक्षणः । यथा चोक्तम् :

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृति : र्न विकृति पुरुषः ॥[२७]

सांख्यस्य 'षष्टितन्त्रम्' इत्यपरामिधा । तत्र दश मौलिका पदार्थाः । ते चेमे — (१) प्रधानस्यास्तित्वम् (२) प्रधानस्यैकत्वम् (३) अव्यक्तस्य (प्रकृतेः) व्यक्तेन साकं कार्यकारणभावः (४) पुरुषात्प्रधानस्य भेदः (५) प्रकृतेः परार्थता पुरुषोपकारकत्वम् (६) पुरुषबहुत्वम् (७) अपवर्गस्थितौ प्रकृतिपुरुषयोर्विवेकः, (८) अपवर्गात्पूर्वमनयोर्योगः (९) शेषवृत्तिः— तत्वज्ञानानन्तरमपि जीवन्मुक्त-

२७. सांख्यकारिका, ३.

दशायां चक्रभ्रमिवत् तादृशस्य पुंसः क्रियासु वर्तनम् (१०) पुरुषस्याकर्तृभावश्च । इमे दश मौलिकाः पदार्था, पञ्चविपर्ययभेदाः, अष्टौ सिद्धयः अष्टाविंशतिधा अशक्तयश्च मिलित्वा 'षष्टि' संख्याका भवन्ति ।[२८] 'षष्टितन्त्रम्' इत्याख्यो ग्रन्थोऽपि पञ्चशिखाचार्येण निर्मित आसीद् यत्रैषां पदार्थानां सम्यङ्-निरूपणमासीत् ।

इदमेव सर्वमपि हृदये निधाय शिवस्तुतावेकः श्लोक उपनिबद्धोऽस्ति :

प्रकृतेः पृथग्विकृतिशून्यतां गतः, प्रतिषिद्धवस्तुगतधर्मनिष्क्रियः ।
पुरुषस्त्वमेव किल पंचविंशकस्फुटचूलिकार्थवचनैर्निगद्यसे ।।[२९]

भगवन् ! चूलिकस्य = पञ्चशिखस्य ये 'प्रधानास्तित्वमेकत्वमर्थवत्वमादयः' पदार्थास्तदनुसारं तस्य वचनैस्त्वमेव प्रकृतेः पृथग् विकृतिभ्यश्च शून्यः सन्— 'न प्रकृति र्न विकृति'श्च भवन् पञ्चविंशकः 'पुरुषः' निगद्यसे । त्वयि, ये '१. जायते २. अस्ति ३. विपरिणमते ४. विवर्धते ५. प्रक्षीयते ६. विनश्यति'--इति षड् विकारा भवन्ति तेषामपि स्थिति र्न भवति, उदासीनत्वात् ; अतएव भवान् 'प्रतिषिद्धवस्तुगतधर्मा' अस्ति ।।

राज्ञः कर्तव्यवर्णने 'चितिशक्ते'र्दृष्टान्तेन कामपि नवीनतामापादयन् कविः कथयति :

प्राप्ता विशुद्धिमधिकां परिणामरूपवन्ध्याश्रिता प्रकृतिभोगनिरर्गलत्वम् ।
उर्वीधरस्य चितिशक्तिरिवापचारशून्या भवत्यनिशमप्रतिसंक्रमा श्रीः ।।[३०]

उर्वीधरस्य = राज्ञः, श्रीः = लक्ष्मीः, अपचारशून्या = दुर्णयविहीना सती, विशुद्धि = मर्यादां प्राप्ता, प्रकृतिभोगनिरर्गलत्वम् = अमात्यादीनां सुलभं सहयोगं प्राप्य, अप्रतिसंक्रमा=अन्यत्राप्रसारा चितिशक्तिरिव संजायते । यथा सांख्ये चितिशक्तिः = पुरुषः, विशुद्धि = गुणैर्विहीनतां प्राप्ता, परिणामरूपवन्ध्याश्रिता, धर्मान्तरपरिग्रहरहिता, उदासीनत्वात्, अन्यत्र संक्रान्ता न

---

२८. प्रधानास्तित्वमेकत्वमर्थवत्वमथान्यता ।
पारार्थ्यं च तथानैक्यं वियोगो योग एव च ।।
शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश ।
विपर्ययः पंचविधस्तथोक्ता नवतुष्टयः ।।
करणानामसामर्थ्यमष्टाविंशतिधा मतम् ।
इति षष्टिपदार्थानामष्टाभिः सिद्धिभिः सह ।।

(राजवार्तिकम्)

२९. हर० ६।१८

३० तदेव १२।७५

भवति। यथा चोक्तम्—'चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता चेति ।[३१]

पुरुषस्य निष्क्रियत्वं, निर्गुणत्वमसंगत्वं च लक्ष्यीकृत्य श्लोकान्तरमुपादीयते, यत्र विपरीतलक्षणया पुरुषः प्रकृते 'र्विचित्रकामुकत्वेन' निरूपितः :

प्रथितप्रपंचरसभावर्वजितः क्वचिदेव किंचिदपि कर्तुमक्षमः ।
अवपुर्गतः करणवृत्तिशून्यतां प्रकृतेरहो न सदृशोऽसि कामुकः ।।[३२]

भगवन् ! भवान् प्रकृतेर्विचित्रः कामुकोऽस्ति । रागशून्यः, किंचित् कर्तुमक्षमः, अनभिव्यक्तस्वरूपः, करणशून्यः—कामशास्त्रप्रसिद्धोत्फुल्लकादिना, धनार्जनकरणे च शून्यः सन्नप्यङ्गनां कामयते—इत्याश्चर्यम् ।'

श्लोकान्तरे प्रकृतिसाधकानां पंच 'वीताख्यानां', पुरुषसाधकानां पंच 'अवीताख्यानां' च हेतूनां संकेतः प्राप्यते :

कथयन्ति नाथ! दशहेतुसंश्रयव्यवधूतविप्लवविशुद्धचेतसः ।
तव सांख्यवृद्धमतभेदवर्तिनः, कृतिनोऽनिवृत्ति किल तत्परं पदम् ।।[३३]

'भगवन् ! सांख्यवृद्धस्य कपिलाचार्यस्य मतानुसारिणो विद्वांसो भवदीयं पदमावागमनशून्यं निगदन्ति । तेषां चेतांसि प्रकृतेः साधकानां दश वीताख्यानां मतानां हेतूनां पुरुष-साधकानां च दश अवीताख्यानां हेतूनां च बलेन नास्तिकानां मतानां खण्डनकरणेन हेतुना निष्किल्विषाणि संजातानि । प्रकृतिसाधका 'वीताः' हेतव इमे :

भेदानां परिमाणात्, समन्वयात्, शक्तितः प्रवृत्तेश्च ।
कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य ।।
कारणमस्त्यव्यक्तम् ।[३४]

पुरुषस्य साधका 'अवीताः' हेतवश्चेमे :

संघातपरार्थत्वात्त्रिगुणादिविपर्ययादधिष्ठानात् ।
पुरुषोऽस्ति मोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च ।।[३५]

द्वात्रिंशे सर्गे तारकासुरं वर्णयता कविना विरोधाभासालंकारमाध्यमेन सांख्यतत्त्वानां संकेतः प्रदत्तोऽस्ति :

---

३१. पातंजल० १।२, व्यासभाष्यम् ।

३२. हर० ६।१६

३३. तदेव ६।२०

३४. सांख्यकारिका १५, १६

३५. सैव १७.

महानप्यनहंकारप्रसूतिरवलोकितः ।
तारकोऽप्यमुना विभ्यल्लोको नक्षिगतः श्रियम् ।।[३६]

कालमुसलेन तत्र तारकासुरोऽवलोकितो यो महान्=बुद्धिः सन्नप्य-हङ्कारस्य प्रसूतिर्नासीत् । महत्तत्वं सदप्यहंकारं न प्रसूते इति विरोधः । परि-हारश्च—महानपि सन् योऽहङ्कारयुक्तो नासीत् । तारकः=कनीनिका सन्नपि योऽक्षिगतो नासीदिति विरोधः, परिहारश्च–तारकः=विपद्धन्ता, अक्षिगतः= अद्वेष्यश्चासीदित्यविरोधः ।

चण्डीस्तुतिप्रसंगे—'अजामेकां लोहितशुक्लकृष्णां, बह्वीः प्रजाः सृजमानां नमामः' इत्यस्य प्रकृतिस्वरूपस्य स्पष्ट उल्लेखः प्राप्यते—

ब्रह्मा प्रजापतिरवक्षदृगादिवर्त्म,
यद्वह्निवाततरणीः किल यज्ञसिद्धयै ।
तस्मिन्नुशन्ति भवतीं भुवनस्य हेतु-
मेकामजां जननि ! लोहितशुक्लकृष्णाम् ।।[३७]

प्रकृतेरनादित्वमपि चण्डीस्तुतौ स्थापितम् ।[३८]

योगदर्शने 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः'[३९] प्रोक्तस्तस्य स्पष्टः संकेत श्लोकेऽस्मिन् प्राप्यते :

दधतीह कर्मफलभोगवर्जिते, सकलार्थतत्वविदि पुंविशेषताम् ।
त्वयि शब्दमीश्वर इति व्यवस्थितं, कथयन्त्यनन्यविषयं मनीषिणः ।।[४०]

तत्र 'निरतिशयं सर्वज्ञबीजम्',[४१] 'तस्य वाचकः प्रणवः'[४२] इत्यनयोर्योगसूत्रयोरपि तत्त्वं शिवस्तुतौ लभ्यते ।[४३]

सम्प्रज्ञातसमाधेर्भेदानां नामानि 'चण्डेश्वरदण्डोपन्यास' नाम्नि त्रयोदशे सर्गे सुस्फुटं प्राप्यन्ते । चण्डेश्वरः कथयति—'अतः परं वितर्कघटना=सन्दिग्ध-वृत्तिता नैव कार्या, युद्धावतरणविषये विचारस्य प्रश्न एव नोदेति । भगवन् ! अहमेकाकी एव राक्षसकुलम् आनन्दशून्यं, किंच स्मितानुगम्=उपहासपात्रं विधास्यामि, अयं मे समाधिः=निश्चयः ।

३६. हर० ३२।२४
३७. तदेव ४७।१०३
३८. तदेव ४७।१२५
३९. पातंजलयोगसूत्रम्, १।२४
४०. हर० ६।२१
४१. योगसूत्रम् १।२५
४२. तदेव १।२६
४३. हर० ६।२२, २४

अस्मिन् श्लोके सम्प्रज्ञातसमाधेः=वितर्कविचारानन्दास्मितारूपा भेदाः सकौशलं प्रयुक्ताः :

कार्या वितर्कघटना न कदाचिदूर्ध्वमायोधनावतरणे बत को विचारः ?
आनन्दशून्यममरारिकुलं सुरेश ! कुर्वे स्मितानुगमवन्ध्यमयं समाधिः ।।[४४]

चतुर्दशे सर्गे श्लेषबलेन सांख्ययोगयोर्महत्त्वमुपपादितम् :

सांख्ययोगपरिनिष्ठतात्मतां ज्ञातसत्त्वपुरुषान्तरो दधत् ।
नूनमेति न विकारविक्लवक्लेशसङ्घटनां विवेकभाक् ।।[४५]

ज्ञातसत्वपुरुषान्तरः=ज्ञातं सत्वशालिनां=बलशालिनां पुरुषान्तराणां=कायराणामन्तरं येनेतादृशो विवेकभाग्=विवेचनशीलो नीतिमान्, सांख्यस्य=युद्धस्य, योगस्य=युक्तिप्रकारस्य, परिनिष्ठितात्मताम्=पाण्डित्यं दधत् । भ्रुकुट्यादीनां विकाराणां क्लेशघटनाभिस्तथैव प्रभावितो न भवति यथा विवेकी=योगी सांख्ययोगयोस्तत्वे स्थिरमतिः प्रकृति-पुरुषयोर्वास्तविकमन्तरं विज्ञाय विकारेभ्यो महदहङ्कारादिभ्यो विप्लवः=समुत्थानं येषां तेषामविद्यास्मितादीनां क्लेशानां सम्पर्केण प्रभावितो न भवति ।

चण्डीस्तुतौ हठयोगस्यापि मनाङ् निरूपणमुपलभ्यते :

नाडीसहस्त्रसशिराम्बरगर्भवर्त्मसंचारचातुरकरी हृदि सन्निविष्टा ।
शक्तिस्त्वमेव परमात्मपरापरार्थब्रह्मार्कमण्डलसमागतगूढगुप्तिः ।।[४६]

एतेषां श्लोकानामुद्धरणेन रत्नाकरस्य सांख्ययोगयोः प्रकृष्टा प्रथा प्रथिता संजायते ।

## न्यायवैशेषिकम्

प्रत्यक्षतो दर्शनेनापीश्वरस्यानुमानं द्व्यणुकादिबन्धनेन क्रियते । इदं जगद् घटरूपम् । घटश्च विना कुलालेन निर्मातुं न शक्यते । अस्मात् कारणकार्य-न्यायेन बुद्धा ईश्वरस्यानुमानं कुर्वन्ति ।[४७]

---

४४. हर० १३।७८

४५. तदेव १४।५३

४६. तदेव ४७।६३.

४७ जनतेन्द्रियातिगविशुद्धगोचरद्व्यणुकादिबन्धगतकार्यदर्शनात् ।
घटकुम्भकारवदकारकात्मनस्तव कारणत्वमनुमीयते बुधैः ।। (हर० ६।७३)

द्व्यणुकादियुक्तिमशेषगोचरंकृतवान् विचित्रमिह कार्यमण्डलम् ।
अतिसूक्ष्मदृक्त्वसकलार्थवेदिता विभुतान्वितस्त्वमनुमीयसे बुधैः ।।

(तदेव ६।८१)

अनुमानस्य पंचावयवानां—प्रतिज्ञाहेतूदाहरणोपनयनिगमानामुल्लेखश्चतुर्दश-सर्गे कृतोऽस्ति ।[४८]

न्यायशास्त्रस्य षोडशतत्त्वेष्वेकस्य निग्रहस्थानस्योल्लेखोऽन्धकराजधानी-वर्णनप्रसंगे प्राप्यते ।[४९] तत्रैव सद्हेतोः, हेत्वाभासस्य चोल्लेखः समुपलभ्यते ।[५०] 'लिंगपरामर्शोऽनुमानम्'[५१] इति ह्यनुमानलक्षणम् । तत्र लिङ्गस्य=हेतोः, पक्ष-सत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वमावश्यकं भवति, इति हि तार्किकाणां राद्धान्तः ।

जलक्रीडावर्णने न्यायशास्त्रस्यैकस्य सिद्धान्तस्य कुशलतया प्रयोगः कृतोऽव-लोक्यते । वीचिभंगैर्नायिकाया अक्ष्णोरंजने प्रक्षालिते सत्यपि तत्रत्या स्वाभा-विकी सुषमा नाहीयत, [५२] यतोहि सिद्धान्तोऽयं वर्तते यद् 'येन नारब्धं तत्रा-नारब्धके विनिवृत्ते तस्यानारब्धस्याभावो नो युक्तः । तथात्वेऽतिप्रसंगोऽति-व्याप्तिरुत्पद्यते । कारण हि निवर्तमानं कार्यं निवर्तयति । स्वभावो भावम् । अव्यभिचारात्, अन्यथा घटपटयोरेकतरनिवृत्तापरनिवृत्तिः केन वार्येत ? अका-रणम् स्वभावश्च कज्जलं चक्षुषोः सहजलक्ष्म्या इति कथं तद्विगमे सा हीयेत ?"

उक्तं च—'तस्मात्तन्मात्रसम्बद्धः स्वभावोऽभावमेव वा । निवर्तयेत्कारणं वा कार्यमव्यभिचारतः ।[५३] कारणगुणाः 'कार्यमारभन्ते' इति न्यायसिद्धान्तोऽपि मधुपान-प्रसंगे सुरुचिरतया प्रतिष्ठापितो वर्तते । नायिकया पीतं सन्मधु तस्याः कपोलयो रक्तिमानमेवापादयत्, तेनैतत्प्रत्यक्षतया सिद्धमभूद् यत् कार्यं कारणेन सदृशं भवति ।[५४]

वैशेषिकदर्शनस्य प्रवर्तकस्य कणादस्य सिद्धान्तप्रक्रियान्धकपुरीवर्णने विवृ-तास्ति । तस्मिन् दर्शने सामान्यस्य=जातेः, गुणानां=शुक्लत्वादीनाम्, गुणा-धाराणाम्=द्रव्याणां, संयोगस्य समवायस्य च चर्चा भवति, पुरी च शौर्यादि—

---

४८ दर्शितावयवपंचकं क्रमात्तत्क्षणव्रतविनेयविभ्रमाः ।
दुर्जयोर्जितविपक्षनिर्णये वाक्यमंचितधियः प्रयुंजते ।। (तदेव १४।२७)

४९ अदृष्टनिग्रहस्थानां प्रौढवादविधामिह । (तदेव ३२।११)

५०. त्वया नैयायिकेनेव सत्पक्षाश्रयशालिना ।
हेतौ विदधता यत्नं परपक्षो निराकृतः ।। (तदेव ३२।७४)

५१. तर्कभाषा ।

५२. धौतेऽप्यक्ष्णोरंजने वीचिभङ्गैर्नैसर्गिक्या हानिरासीन्न लक्ष्म्याः ।
येनारब्धं यन्न तन्न व्यपेते तस्याभावाज्जायतेऽतिप्रसंगः ।। (तदेव १८।५३)

५३. उपर्युक्तश्लोकेऽलकस्य टिप्पणी ।

५४. विम्बाधरांचितरुचा मधुना तदाथ पीतेन पक्ष्मलदृशोऽच्छकपोलभागे ।
आसीन्मदः प्रकटितारुणराग एव, कार्यं हि कारणसदृग्भवतीति सत्यम् ।।
(तदेव २६।४१)

भिर्गुणै र्द्रव्यैः=धनैश्च दृढा भवति ।[५५]

चण्डीस्तुतिप्रसंगेऽपि कणादस्याक्षपादस्य च षोडशपदार्थानां विषये संकेतः प्राप्यते ।[५६] कणादस्योल्लेखः शिवस्तुतावपि प्राप्यते ।[५७]

## पूर्वमीमांसोत्तरमीमांसे

वेदस्य यो कर्मकाण्डाख्यो भागः स मीमांसेति कथ्यते । वस्तुतः 'पूर्वमीमांसा' इत्येव तस्याः पूर्णं नाम । तत्र यज्ञयागादिकानां निर्णयो भवति । जैमिनिस्तस्याः प्रमुखं आचार्यः । हरविजये पूर्वमीमांसा–विषयेऽधिकाः संकेता न प्राप्यन्ते पर जैमिनिऋषेर्नाम्न उल्लेखः कृतोऽस्ति । उत्तरमीमांसा, या वेदान्तनाम्ना व्यपदिश्यते तस्यानुसारं तु वर्णनानामत्र बाहुल्यम् । अध्यारोपापवादपुरस्सरं स्वात्मदर्शन एव वेदान्तानां तात्पर्यम् । "वेदान्तो हि नामोपनिषत्प्रमाणम् ।[५८] द्वैतं विहायाद्वैतोपलब्धिर्वेदान्तः । अद्वैतस्य हि बहवो भेदाः शुद्धाद्वैतविशिष्टाद्वैतादिरूपेण । परं यत्साध्यं, या च काष्ठा, या च परा गतिः सा अद्वैतमेवास्ति । तस्यां स्थितौ :

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।।[५९]

वेदान्तस्य कोटित्रयं वर्तते— १. तत्वमसि २. अहं ब्रह्मास्मि ३. सर्वं खल्विदं ब्रह्म । गुरुणा 'तत्वमसि' इति वाक्यार्थेनाववोधिते वस्तुरूपेऽधिकारिणोऽहं ब्रह्मास्मीत्याकारकारिता चित्तवृत्तिरुदेति । सर्वकर्मा, सर्वकामः, सर्वगन्धः, सर्वरसः, सर्वमिदमभ्यात्तो वाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्मैतदभितः प्रेत्याभिसम्भवितास्मि ।"[६०] एवं विचारयतो जीवन्मुक्तस्य 'सर्वं खल्विदं ब्रह्म' इत्याकारानुभूतिर्भवति । 'तदन्तरस्य सर्वस्य तदु सर्वस्य वाह्यतः ।[६१] तथा च :

---

५५. जहर्ष सामान्यगुणद्रव्यसंयोगसुस्थिताम् ।
तां कणव्रतसिद्धान्तप्रक्रियामिव वीक्ष्य सः ।। (तदेव ३२।२७)

५६. द्रव्यादिभेदपरिकल्पनयाप्रमाणसूत्रं विभज्य भुवि पोडशभेदभिन्नम् ।
व्याख्यातवान् कणचरश्च समक्षमक्षपादश्च यस्य भगवांस्तनुमप्रकम्प्याम् ।।
(तदेव ४७।८२)

५७. तदेव ६।९७

५८. वेदान्तसारः.

५९. श्रीमद्भागवतम्.

६०. छान्दोग्य० ३।१४।४.

६१. ईशावस्योपनिषद्, ५.

बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च यत् ।।[६२]

एवंविधः स्वयंप्रकाशानन्दमयसंवित्साक्षात्कारो हि जीवनस्य चरमं लक्ष्यम् । एषा हि समासतोऽद्वैतवेदान्तसारसरणिः । यथा च प्राक् प्रतिपादितम्–उपनिषद्भिः संवलिता रत्नाकरस्य भारती वेदान्तविद्यामुद्गिरतीव प्रतीयते ।

इदं जगद् ब्रह्मणो विराड्रूपमेव :

यस्य क्षितिश्च चरणौ, गगनं च नाभिः,
श्रोत्रे दिशस्तरणिरीक्षणमग्निरास्यम् ।
द्यौरुत्तमाङ्गमपि तस्य विभो ! किल त्व -
मुत्तंसितोडुकुसुमस्तवकोज्वलस्रक् ।।[६३]

तस्य परमात्मतत्त्वस्य विषये इदमित्थं वा किमपि कथयितुं न सम्भवम् । तत्र तु 'नेति–नेति' इत्येव वादोऽवलम्बनं संजायते :

प्रथिताः परापरदृशः पुराविदः, कथयन्ति विश्वनुत नेति–नेति यत् ।
सकलैर्विनाकृतमुपाधिसाधनैः, परमं तदेव तव तत्त्वमद्भुतम् ।।[६४]

तच्छिवस्वरूपमुपलभ्यान्यत्प्राप्तव्यं नावशिष्यते :

अवितर्कमस्थितविचारगोचरं, सुखवेदनोज्झितमनस्मितान्वयम् ।
अभिगम्य शंकर! समाधिमिच्छया,तव जातु नैव भजते भ्रमं पुमान् ।।[६५]

इयं स्थितिः सा वर्तते यस्या विषये कथितम्—'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह ।'

एवंविधा वेदान्तमयी वाग्घरविजये स्थाने-स्थाने प्राप्तप्रसारा परिलक्ष्यते । एतादृशी विचार-सरणिः काव्यमिदं विमर्शनीयं मननीयं च विदधाति ।

---

६२. गीता, १३।१५.
६३. हर० ४७।११७.
तुलनीयम् :
अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ, दिशः श्रोत्रे, वाग् विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य, पद्भ्यां पृथ्वी, ह्येष सर्वभूतान्तरात्मा ।।
(मुण्डकोपनिषद् २।१।४)
किंच :
यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ।। (महाभारतम्, शान्ति० ४७।७०)
६४. हर० ६।३९.
६५. तदेव ६।२७.

## दर्शनान्तराणि

एतदतिरिक्तं शैवागमानां, शैवदर्शनानां, शाक्ततन्त्राणां च गम्भीरं ज्ञानं हरविजयात्प्राप्यते । तेषां विषये आगामिन्यध्याये चर्चा कृता स्यात् । नास्तिकानां-चार्वाक-बौद्ध-जैनानां मतानां चर्चाप्यत्र प्राप्यते ।

स्वर्गाभोगनाम्नि सर्गे ऐरावतस्य वर्णनं कुर्वाणस्तस्य तुलनां चार्वाकेण सह कुर्वन् स कथयति :

तुंगं वपुः सकलहास्तिकमङ्गबद्ध-
कक्ष्योऽतिनास्तिक इव स्फुटसाधनश्रीः ।
विस्तारिचक्रमिव राशिमयं बिभर्ति,
योऽनेकधामकरकुम्भकरालशोभम् ॥[६६]

योऽनेकधामा=अनेकविधं धाम तेजो यस्य सः, करकुम्भकरालशोभम्=करेण= शुण्डादण्डेन च कराला शोभा यस्य तादृक् शरीरं विस्तारिचक्रमिव राशिमयं =राशिचक्रमिव बिभर्ति । तदप्यनेकधा मकरेण कुम्भेन च राशिना समुज्ज्वलशोभं भवति । स सकलहास्तिकभङ्गबद्धकक्ष्यः=सकलस्य हस्तिसमूहस्य (हस्तिनां समूहो हास्तिकम् तस्य) भंगे बद्धकक्ष्यः=सन्नद्धः, नास्तिक इवास्ति । नास्तिको सकलहानां शास्त्रार्थे रतानाम् आस्तिकानां भंगे=खण्डने, बद्धकक्ष्यो भवति । स्फुटसाधनश्रीश्च=स्फुटा साधनस्य=सैन्यस्य श्रीर्येन सः, अथवा स्फुटा, साधनस्य=मेढ्रस्य श्रीर्यस्यैवंविधो गजः । नास्तिकश्च स्फुटा शास्त्रार्थे संयोज्यमाना पक्षहेतुदृष्टान्तादिवचनानां श्रीर्यस्यैवंविधो भवति ।

एवमन्यत्रापि चार्वाकानामुल्लेखः प्राप्यते ।[६७]

क्लेशेन्धनोत्करनिरर्गलदाववह्नि-
ज्वालाहतावतमसा किल भावना त्वम् ।
अभ्यासयोगवशतो जननी जिनाना-
मालोकहेतुरुदिता जिनशासनस्थैः ॥
बोधिप्रकर्षमधिरूढवतो जिनस्य
सोपानपंक्तिरुदिता मुदितादिभूमिः ।
स्पष्टप्रकारयुगलाधिमुखं समाधे-
रभ्रंशभाग्भुवनधारिणि धारणी त्वम् ॥
क्लेशेन्धनौघघटनास्तववर्त्मवह्नि-
ज्वाला जिनस्य जननी त्वमुपोढमोहा ।

६६. हर० ३१।३३.
६७. तदेव ६।९८.

प्रज्ञा त्वमेव हतसन्तमसाम्ब तस्य
जैनैरभीक्ष्णमुदिता भवभङ्गहेतुः ।।[६८]

इत्यादिषु श्लोकेषु जैनदर्शनस्य

किंच :

अक्षुण्णमार्गयुगभंगदशाव्यतीत–
विस्पष्टमार्गगतिवर्त्मरथाधिरूढैः ।
त्वं कीर्तितामयनिरात्मकतावलग्न-
रूपा भवानि ! मतिपारमितेति बौद्धैः ।।
क्लेशप्रतानगहनप्रतिबन्धशून्य–
स्कन्धप्रवाहपरिहारिनिमित्तमेकः ।
अष्टांग एष परिनिर्वृतये त्वयैव
सन्दर्शितोऽतिगहनः सुगतस्य मार्गः ।।[६९]

इत्यत्राष्टांगादीनामुल्लेखात्, तथा चान्यत्र माध्यमिक दर्शनस्य,[७०] सौगतानां प्रथमप्रमाणस्य प्रत्यक्षस्य,[७१] भावनायार्थक्रियाकारित्वस्य,[७२] चोल्लेखात्तदीया बौद्धदर्शनाभिरुचिः, पारगमिता च प्रतीयते ।

एवं 'गारुत्मती' विद्यायाः,[७३] कौलदर्शनस्य,[७४] पाशुपतदर्शनस्य[७५] चोल्लेखः प्राप्यते ।

स्थालीपुलाकन्यायेन प्रदर्शितैरुद्धरणै रत्नाकरस्य दार्शनिकसार्वभौमता प्रकटीभवति ।

**व्याकरणम्**

स्थाने-स्थाने व्याकरणस्य पारिभाषिकाःशब्दाः, नियमोपनियमाः, दार्शनिक-राद्धान्ताश्च कवेः कृतौ प्राप्यन्ते । भगवतः शंकरस्य स्तुत्यवसरे ऋतूनामेतत् कथनम् :

सकलार्थविग्रहतया विवर्तते यदनादिमध्यनिधनं किलाक्षरम् ।
प्रथयन्ति तत्तव जगन्निबन्धनं शिवशब्दतत्त्वमविनश्वरं वपुः ।।[७६]

---

६८. हर० ४७।४६-५१
६९. तदेव ४७।५२-५३
७०. तदेव ६।६४
७१. तदेव ४१।१२
७२. तदेव ४३।१८५
७३. तदेव ३२।६
७४. तदेव ४७।६७
७५. तदेव ६।७६, १४७.
७६. हर० ६।५५

वाक्यपदीयकारस्य श्रीभर्तृहरेः सुप्रसिद्धमिमम् :

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम् ।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ।।[७७]

श्लोकं संस्मारयति ।

व्याकरणस्य ग्रन्थानामुल्लेख उपमानरूपेणानायासमेव कविना क्रियते । अन्धकराजधानीवर्णनप्रसंगे व्याकरणस्योपमा स्फुटं चकास्ति :

विदग्धमण्डलीमाराद् गोष्ठीवन्धमनोरमाम् ।
सदाकृतिगणोपेतां सद्वृत्ति स व्यलोकयत् ।।[७८]

सा नगरी विदग्धानां गोष्ठीभिः कृतिनां गणैरुपेता सद्वृत्तौ च बद्धानुरागाऽऽसीत् । व्याकरणशास्त्रमपि आकृतिगणैः सूत्राणां वृत्तिभिश्च युक्तं भवति ।

त्रयश्चत्वारिंशे सर्गे युद्धवर्णनप्रसंगे 'गति' संज्ञायाः प्रयोगः कविना नितान्तं कुशलतया कृत :

उपसर्गा इव गताः क्रियायोगेन शून्यताम् ।
आसंस्तस्य हता बाणैरप्राप्तगतिसंज्ञकाः ।।[७९]

भगवद्वाणैराहता दैत्या अप्राप्तगतिसंज्ञकाः=न प्राप्ता गतिर्गमनं संज्ञा चेतना च यैस्ते क्रियायोगेन च शून्यतां गताः=व्यापारशून्या आसन् । उपसर्गा इव, उपसर्गा हि क्रियायोगं विना गतिसंज्ञां न प्राप्नुवन्ति । 'उपसर्गाः क्रियायोगे (१।४।५९), 'गतिश्च' (१।४।६०), इत्यनयोरनुशासनयोरनुरोधात् ।

समासानां नामान्यनायासमेवावतरन्त्यागच्छन्ति । यथा तत्रैव युद्धवर्णने :

कोदण्डास्फालनोत्तालरवकातरितद्विषः ।
योधास्तत्पुरुषत्वेऽपि विस्पष्टद्वन्द्वतां ययुः ।।[८०]

तत्पुरुषत्वेऽपि=तस्याश्चण्ड्याः पुरुषत्वेऽपि योधाः विस्पष्टद्वन्द्वतां प्रकटविग्रहतामवापुः स्व कोदण्डमास्फालयन्तः । तत्पुरुषसमासो द्वन्द्वतां धारयतीति विचित्रम् । एवमेव कालमुसलो यदा तत्पुरुषस्य चरितार्थतां स्वनाम्नि प्रतिपिपादयिषुरुद्घोषयति तदापीयमेव प्रवृत्तिः कवेः साक्षात् संजायते ।[८१]

---

७७. वाक्यपदीयम्, ब्रह्मकाण्डम्

७८. हर० ३२।२५

७९. तदेव ४३।४६

८०. हर० ४३।८२

८१. क्षुन्दनरिपोर्विघटमानदृढास्थिसन्धिबन्धांश्चमूपरिवृढानहमूढरीढः ।
कालस्य किं मुसलतामधुनाविभाय नाम्नो बिभर्मि युधि तत्पुरुषार्थतत्वम् ।।
(तदेव ८।२६)

सामान्येष्वपि प्रसंगेषु कविर्व्याकरणस्य नियमान् प्रकाशयति । 'स्थानिवदादेशोऽनल्विधौ' (१।१।५६) इतिनियमं कियत्या मनोज्ञतया कविर्जलक्रीडावसरे संयोजयामास । वीचिभिः प्रभ्रष्टानामंशुकानां स्थानं गृह्णतां फेनपुञ्जानां स्थितिः स्थानिवद्भाव इवैवाभूत् :

प्रभ्रष्टानामशुकानां तदानीं फेनव्रातैर्वीचिभंगच्छटोत्थैः ।
लग्नैरारात् स्त्रीजनस्य स्तनेषु प्रापि स्थान्यादेशसम्बन्धिलक्ष्मीः ।।[८२]

युद्धे विचरन् सकृत् तेषां देवानां हिततां दधानो व्याकरणग्रन्थैस्तुलनां प्राप्नुवन् हरिर्देवैं रणाजिरेऽस्तूयत । लक्षणग्रन्थो ऽपि कृद्भिः तद्धितैश्च युक्तो भवति ।

अस्तूयत सुरैः संख्ये संचरिष्णुरनर्गलम् ।
संवादिलक्षणग्रन्थः सकृत्तद्धिततां दधत् ।।[८३]

अन्यस्मिन् स्थले देवाः प्रत्ययैर्युक्ता धातव इवाङ्गेषु वृद्धिगुणसंयुक्ता रूपाभिव्यक्तिमकुर्वन् । सेनायामङ्गं हस्त्यादि चतुरङ्गबलस्य वाचकं शरीराङ्गानां वाऽवबोधकं भवति । व्याकरणे चाङ्गसंज्ञा भवति । तस्यां सत्यां प्रत्ययैर्युक्ता धातवः कदाचिद् वृद्ध्या कदाचिद्गुणेन च रूपसिद्धिं कुर्वन्ति ।[८४]

वैय्याकरणानां सुप्रसिद्धस्य 'स्फोटवादस्य' संकीर्त्तनं सप्तचत्वारिंशत्तमे सर्गे देवीस्तवावसरे समुपलभ्यते :

वर्णेषु वाचकतया रहितेषु सत्सु—
वाक्तत्त्वमक्रममपाकृतभेदरूपम् ।
स्फोटाभिधानमिति यं कथयन्ति शाब्दाः
प्रत्यक्षताविकलवस्तुसतत्वयोगाः ।।[८५]

एवमेवान्यत्रापि व्याकरणस्य पारिभाषिकाः शब्दा अहमहमिकया समापतन्तो दृश्यन्ते । तद्यथा :

घोषाक्षरस्वरनिराकृतमप्यकण्ठ्यतालव्यमव्ययमनासिकमप्रतिष्ठम् ।
निस्संचरव्यतिकरप्रतिसंचरात्मा देहप्रभञ्जनविशालरथाधिरूढम् ।।[८६]

## साहित्यम्

श्रव्यदृश्यभेदेन काव्यं द्विधा वर्तते । तदेव चान्याभी रसाप्लुताभिर्विधाभिः

८२. तदेव १८।८८
८३. तदेव ४३।३२६
८४. हर० ४३।३८४
८५. तदेव ४७।८१
८६. तदेव ४७।७७

साकं साहित्यशब्देन व्यवह्रियते । काव्येऽस्मिन् रत्नाकरेणानेकशः काव्यानां नाटकानां वा विषये स्वकीयं पाण्डित्यं प्रकटीकृतं विद्यते । श्रेष्ठकाव्यस्य लक्षणं निरूपयता राजनीतिप्रसंगे द्वादशे सर्गे 'अट्टहासनयोन्यासे' कविना कियता सौन्दर्येण स्वविचाराः प्रकाशिताः :

अपार्थतादोषपरीतमक्रमं ससंशयं सन्धिविहीनतां गतम् ।
न देशकालादिविरोधि पण्डितैः प्रशस्यते कार्यमसाधुकाव्यवत् ।।[८७]

'अफलानि दुरन्तानि समव्ययफलानि च । अशक्यानि च कार्याणि नारभेत विचक्षणः ।' —इत्यनुसारम् :

राजनीतिविचक्षणा असफलं क्रमरहितम् (अस्तव्यस्तम्) सन्दिग्धं सन्धिरहितं देशकालादिविरोधि च कार्यमेवं न प्रशंसन्ति यथा साहित्यमर्मज्ञा अपार्थ-अक्रम-संशयदोषदुष्टं विरूपसन्धि च काव्यं न प्रशंसन्ति । अस्यां तुलनायां श्रेष्ठकाव्यस्य स्वरूपविषये कवेर्मान्यता सुतरां स्फुटा भवति ।

त्रयोदशे सर्गे कविताया मार्गत्रयस्योल्लेखो लभ्यते । तथाहि :

मार्गत्रयेऽप्यवहितप्रसरामनोज्ञ—
शब्दश्रुतिः शुचितयानुगताञ्चितश्रीः ।
जह्नोरिवाशु तनया घटमानकर्ण—
धारा मनो हरति कस्य सतां न वाणी ?।।[८८]

मार्गत्रयं च वैदर्भगौड़ीयपांचाललक्षणं प्रसिद्धमेव । तदेव च वक्रोक्तिजीवितकारेण कुन्तकेन सुकुमार–विचित्र--मध्यम–मार्गनाम्ना व्यवहृतम् । तथाहि :

सन्ति तत्र त्रयो मार्गाः कविप्रस्थानहेतवः ।
सुकुमारो विचित्रश्च मध्यमश्चोभयात्मकः ।।[८९]

कविः काव्यसौन्दर्यविषये अवधानवानस्ति ।[९०] 'कैशिकी वृत्तिः' (१७।७९), 'किलकिञ्चितम्' (१७।८०), 'कुट्टमितम्' (३।२२), प्रसादगुणः (१२।१८), शृंगाररसः (१७।५६), कोष्ठकांकितेषु श्लोकेषूपलभ्यन्ते । १५।७ श्लोके प्राकृतभाषाकाव्यस्य विशेषता संकेतिताः । नन्दिषेणः कथयति यद् यस्य मम मित्रस्य पराक्रमं दृष्ट्वा अनूष्मतां दधानं = दर्परहितं रिपुचक्रं प्राकृतभाषामयं काव्यमिव भवति । रिपुचक्रं परिवृत्तिपरीतं = भूलुण्ठनाद्धूलिधूसरितम्,

---

८७. तदेव १२।३२

८८. हर० १३।१०

८९. कुन्तकः, वक्रोक्तिजीवितम्, १।२४

९०. हर० १३।११

अतएव च वैवर्ण्यं गद्गदस्वरत्वं भजमानं त्यक्तमत्रीकं च भवति, प्राकृतकाव्यं चापि वर्णानां स्वराणां च परिवृत्त्या युक्तं क्वचित् सन्धिकार्यं त्यजद् अनूष्मताम् = ऊष्मवर्णहीनतां बिभर्ति । यथा चोक्तम् :

ऋ ॠ लृ ॡ न सन्त्यत्र ङ ण ना अपि नो पृथक् ।
न शषौ न द्विवचनं चतुर्थी दृश्यते क्वचित् ।।

कवेर्नाट्यशास्त्रेण घनिष्ठः परिचयोऽस्ति । अतिसामान्येपु स्थलेषु स स्वकीयं नाट्यनैपुण्यं प्रकाशयति । तस्य सम्मतौ मज्जनमपि नाट्यम् । १८।६३ श्लोके 'मज्जनारम्भनाट्ये' इति कथयित्वा स नाटकारम्भे विकीर्यमाणानां पुष्पाणामुल्लेखं करोति । ६।५७ श्लोके 'दाहक्रियाया इव पूर्वरंगम्' कथयति । मधुपानगोष्ठी 'सुरतनाटकपूर्वरंग'मस्ति (२६।६१) । संग्रामश्चापि नाटकम् (५०।५७) । ११।६, ४४ श्लोकयोः 'पीठमर्दस्य' प्रयोगः प्राप्यते । 'तिरस्करणी'-'प्ररोचना'-'प्रस्तावनानां' च चर्चा १७।३५ तमे श्लोके 'नवमधुमासनाटक'प्रसंगेऽस्ति । १७।१०२ पद्ये 'विन्दुः' 'वर्तते । न केवलमेतदेवापितु नाटकस्य विविधानां प्रकाराणामुल्लेखः सविस्तरं प्राप्यते । १६।५१ श्लोके दशरूपकप्रकारस्य 'उत्सृष्टिकांक'स्योल्लेखः समुपलभ्यते :

दोर्दण्डदर्पदलनाकुटिलत्वमाप्तमायोधनेषु रभसात्प्रविजृम्भमाणम् ।
उत्सृष्टिकांकमिव यो विदधौ निवृत्तयुद्धोद्धतप्रहरणं प्रतिपक्षभेकः ।।[६१]

शिवपार्षदः शिखण्डी शत्रूणां शक्तिविषये स्वसहचारिणः सावधानान् करोति यद्भवतेदमपि कच्चिज्ज्ञातं यदस्मदरातिः प्रतिपक्षमुत्सृष्टिकाङ्कमिव विदधाति । उत्सृष्टिकाङ्को दशरूपकप्रकारः, करुणरसप्रायः, युद्धोद्धतप्रहारैश्च युक्तो भवति । वाचैव तत्र युद्धं जय—पराजयौ च वर्ण्यन्ते । तद्यथा :

करुणरसप्रायकृतो निवृत्तयुद्धोद्धतप्रहारश्च ।
स्त्रीपरिदेवितबहुलो निर्वेदितभाषितैश्चैव ।।
नानाव्याकुलचेष्टः सात्वत्यारभटीकैशिकीहीनः ।
कार्यः कार्यविधिज्ञैः सततं ह्युत्सृष्टिकांकस्तु ।।[६२]

यथावा :

उत्सृष्टिकांकः पुंस्वामी ख्यातयुद्धोत्थवृत्तवान् ।
भाणोक्तवृत्तिसन्ध्यंको वाग्युद्धकरुणाङ्गिकः ।।[६३]

ईहामृग—डिम—वीथि—अंक--व्यायोगानामुल्लेखः 'कुसुमावचयवर्णन'--नाम्नि

---

६१. हर० १६।५१
६२. भरतनाट्यशास्त्रम् १८।१४७-४८.
६३. नाट्यदर्पणम् २।८८

सप्तदशे सर्गे प्राप्यते यत्र मन्दराचलस्य मणितटकाननस्य साम्यं दशरूपकेण सम्पादितम् :

स्पष्टेहामृगडिमवीथिकं सदंकव्यायोगं तदनु विहृत्य निःसहाङ्गचः ।
अत्याक्षुः स्पुटदशरूपकव्यवस्थं, मन्थाद्रेर्मणितटकाननं रमण्यः ॥[६४]

तदनन्तरं वनविहाराच्छ्रान्तास्तरुण्यो मन्दराचलस्य मणितटकाननमत्याक्षुः । कीदृशम् ? स्पष्टेहामृगडिमवीथिकम्=स्पष्ट ईहामृगाणां=वृकाणां डिमो युद्धं यत्र तादृश्यो वीथिकाः=मार्गा यत्र तद्विधम्, किंच सदंकव्यायोगम्=सदंके= शुभे क्रोडे वीनां पतत्राणामायोगः=संसर्गो यत्र (वि+आयोगः) तद्विधम्, स्पुटदशरूपकव्यवस्थं च—स्फुटा दशा येषां तेषां रूपकाणां=मृगशावकानां व्यवस्था=अवस्थितिर्यत्र तादृशम् । दशरूपकं च :

नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।
व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥

रूपकस्य एषु भेदेषु पंचोक्ते श्लोके समुल्लिखिता वर्तन्ते । ते च : (क) ईहामृग (ख) डिम (ग) वीथी (घ) अंक (ङ) व्यायोगाख्याः । तेषां लक्षणानि च दशरूपके विस्तरशः प्रदत्तानि ।[६५] एकस्मिन्नेव श्लोके इयतीनां विधानां श्लेषवलेन प्रयोगः कवेर्नाट्यशास्त्रनैपुण्यं प्रकामं परिचाययति ।

एवमेव ४८।४६ श्लोकेऽपीहामृगस्यारभटीवृत्तेश्चोल्लेखः कृतो वर्तते ।[६६]

नाटिकाया उल्लेखो निम्नलिखिते पद्ये प्राप्यते :

शृङ्गारस्थितिरमणीयनर्मगर्भव्यापारातनुरसनायकानुयाता ।
रम्भोरूरथचतुरकलाञ्छितश्रीः प्रत्यग्रामतनुत नाटिकेव शोभाम् ॥[६७]

कुसुमावचयवेलायां कापि रम्भोरूः शृङ्गाररसोपयुक्तहावभावैर्युक्ता,असीम-स्नेहसम्भृतनायकेनानुसृता चतुरं यथा स्यात्तथा कलाभिराञ्छिता च नाटिकेव शोभामधत्त ।

नाटिकापि शृङ्गाररसपूर्णा नर्मगर्भव्यापारा कैशिकीवृत्तिभेदेन नर्मगर्भाख्ये-नान्विता, अतनुरसा=रसपरिप्लुता, नायकानुयाता=धीरललितेन नायकेन चतुर्भिरङ्कैश्च सुशोभिता भवति ।

'नाटकप्रक्रिया' अन्धकपुरीवर्णने उपमान-रूपेण परिगृहीतास्ति कविना :

---

६४. हर० १७।१०७

६५. द्रष्टव्यः— दशरूपकस्य तृतीयः प्रकाशः ।

६६. एकस्य संख्ये परिपूर्णचारुशृंगाररागस्य वभूव तस्मिन् ।
ईहामृगांकस्य सुरांगनाभिदृष्टस्य चेष्टारभटीप्रधाना ॥ (हर० ४८।४६)

६७. १७।२६

शुभप्रस्तावनाहृद्यां प्रख्यातोदात्तनायकाम् ।
नानार्थप्रकृतिश्लाघ्यां नाटकप्रक्रियामिव ॥

सा नगरी शुभस्य=पुण्यस्य, प्रस्तावनया=प्रारम्भेण, हृद्या=मनोज्ञा, प्रसिद्धोदारनायकवती, नानार्थप्रकृतिश्लाघ्या=विविधधनैर्युक्ता, अमात्यप्रभृतिभिः प्रकृतिभिश्च युक्ताऽऽसीत् । नाटके च प्रस्तावना भवति, प्रख्यातो धीरोदात्तश्च नायको भवति अर्थप्रकृतयश्च भवन्ति ।

अनेनैकेन पद्येनैव सर्वमपि नाटकलक्ष्म व्याकृतम् ।[६८]

अन्यत्रापि गौरीश्वरदेहार्धवर्णननाम्नि सर्गे गौरीविग्रहसन्धानप्रक्रियां नाटकप्रक्रियया सह तुलयता कविना श्रेष्ठनाटककारस्य गुणानां विषये विचाराः प्रकाशिताः सन्ति—

इति रसपोषयुक्तिमदनुज्झितवृत्ति गुणव्यपाश्रयं,
प्रथितशुभांगलक्षणमपूर्वकृतिप्रवणात्मतां दधत् ।
कविरिव नाटकं घटितसन्धि विधाय शशांकशेखरः,
शिखरिसुतार्धमर्धवपुषि प्रमदान्वितमानसोऽभवत् ॥[६९]

गौर्याः शरीरस्य स्वशरीरे संघटनां विधाय भगवान् शंकरः प्रफुल्लचित्तः संवृत्तः, निर्दुष्टनाटकनिर्माणानन्तरं कविरिव । अर्धनारीनटेश्वरस्य संघटनं रसपोषयुक्तिमद्=अनुरागपरिपूर्णम्, अनुज्झितवृत्ति=व्यवहारपेशलं, गुणव्यपाश्रयम्=सौन्दर्यादि गुण-गण विभूषितम्, प्रथितशुभांगलक्षणम्=सन्तुलितांगच्छटापूर्णम्, अपूर्वकृतिप्रवणात्मतां दधत्=अन्येन केनाप्यकृतपूर्वम् घटितसन्धि चासीत् ।

नाटकमपि च शृंगारादिभी रसैः, भारतीसात्वत्यारभटीवृत्ति- ओजः प्रसाद-माधुर्यादिगुणैश्च युक्तं भवति । तत्र चतुष्षष्टि सन्धिलक्षणानि, मुखप्रतिमुखगर्भविमर्शनिर्वहणकाश्च सन्धयः सुतरामुपनिबध्यन्ते । तदैव च तद् अपूर्वतां भजते एतादृशं नाटकं विधाय कविरन्तरात्मनि परमानन्दमनुविन्दति ।

व्याख्यागम्यमिदं पद्यं विस्तृतिभयादव्याख्यातमपि कवेर्नाटककौशलमपूर्वं प्रथयद् विवेचकानां चमत्कारायालम् ।

नाटकस्य पारिभाषिकाः शब्दा अनायासमेवावतरन्तः समायान्ति । तद्यथा कुसुमावचयप्रसंगे :

---

६८. द्रष्टव्यः–साहित्यदर्पणः षष्ठः परिच्छेदः ।
६९. हर० २१।५७

पात्रत्वं मनसिजलासकस्य याता, नर्तित्वा कुसुमविहारनाटकान्ते ।
विष्कम्भस्थितिविशदप्रवेशमार्गान्निर्जग्मुः कमलदृशोऽथ काननाङ्कात् ॥[१००]

मनसिजलासकस्य=कामदेवनृत्तोपाध्यायस्य शिष्यतां धारयन्त्यस्ताः कामिन्यो नर्तनानन्तरं कुसुमविहारनाटकान्ते विष्कम्भस्थितिविशदप्रवेशमार्गात्=विष्कम्भो विस्तारस्तत्सद्भावात् सुगममार्गयुक्तात् काननाङ्कात्[१०१]=काननप्रदेशात्तथा निर्गता यथा नर्तक्यो नाटकान्तेऽङ्कान्नर्तकसहिता निर्गच्छन्ति । नाटके च विष्कम्भक[१०२]–प्रवेशकयोः[१०३] स्थितिः सुप्रसिद्धैव ।

इमान्युदाहरणानि रत्नाकरस्य नाटकमर्मज्ञतामावेदयन्ति ।

## संगीतशास्त्रम्

साहित्येन साकं संगीतस्य समुपासनमत्रत्यैरभियुक्तैरनिवार्यत्वेन प्रतिपन्नमासीत् । 'साहित्यसंगीतकलाविहीनः' इत्याद्युक्तिस्तथ्यमिदं दृशि निधायैव प्रसृता वर्तते । प्राचीनग्रन्थेषु संगीतस्य सूक्ष्मं विवेचनं कृतमस्ति । तदुपयोगिनां नृत्यानां वादित्राणाञ्चापि सूक्ष्मेक्षिकया वर्णनमस्ति । वादित्राणां भेदचतुष्टयं प्रसिद्धमासीत् । तद्यथा :

ततं चैवावनद्धं च घनं सुषिरमेव च ।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥[१०४]

---

१००. हर० १७।१०६

१०१. यत्रार्थस्य समाप्तिर्यत्र च बीजस्य भवति संहारः ।
किंचिदवलग्नबिन्दुः सोऽङ्क इति सदावगन्तव्यः ॥ (भरतनाट्य० १८।१६)

१०२. मध्यमपात्रैः कार्यो नित्यं विष्कम्भकस्तु विज्ञेयः ।
संस्मृतवचनानुगतः संक्षिप्तार्थः प्रवेशकवत् ॥
शुद्धः संकीर्णो वा द्विविधः खलु नाटके प्रयोगज्ञैः ।
मध्यमपात्रैः शुद्धः संकीर्णो नीचमध्यमकृतः ॥
अंकान्तरे मुखे वा प्रकरणमाश्रित्य नाटके वापि ।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरधमैः ॥
(तदेव १८।८६–६१)

१०३. अंकान्तरानुसारी संक्षेपार्थमधिकृत्य बिन्दूनाम् ।
प्रकरणनाटकविषयप्रवेशकः संविधातव्यः ॥
नोत्तममध्यमपुरुषैराचरितो नाप्युदात्तवचनकृतः ।
प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः ॥
कालोत्थानगतिरसौ व्यत्यासारम्भकार्यविषयाणाम् ।
अर्थाभिधानपूर्वः प्रवेशकः स्यादनेकार्थः ॥
(भरतनाट्यम्, १८।३५–३७)

१०४. भरतनाट्यशास्त्रम् २८।१

तन्त्रीवाद्यम् 'ततम्' चर्मावनद्धम् 'अवनद्धम्' फूत्कारेण वाद्यमानं 'सुषिरं' कांस्यादिधातुनिर्मितं च 'घनम्' इत्युच्यते ।[१०५] एतेषामुपकरणानां योगेन संगीतज्ञानां सहजापि कला समग्रे देशे व्यजृम्भत । हरविजयेऽप्यमीषां वादित्राणां नामानि समुपलभ्यन्ते । वीणा[१०६]–वल्लकी[१०७]–विपंची[१०८]–कूर्मी[१०९]–मुरज[११०]–मृदंग[१११]–ढक्का[११२]–कांस्यताल[११३]–घण्टा[११४]–वेणु[११५]–शंख[११६]–झल्लरी[११७]-प्रभृतीनां वाद्ययन्त्राणां नामान्यसकृत् समुपलभ्यन्ते । रत्नाकरोऽनायासेनैव क्वचिच्छ्लेषबलेन, क्वचिदुपमाबलेन, क्वचिच्चालंकारान्तराणां साहाय्येन संगीतस्य पारदृश्वतामुद्भावयति ।

हरविजये संगीतस्य पारिभाषिकाः शब्दाः प्रचुरतया समुपलभ्यन्ते । स्वर[११८]–यति[११९]–धातु[१२०]–कोण[१२१]–ताल–लय[१२२]–मार्ग-जाति-श्रुति[१२३]–आलिम–नाद[१२४]–गीत[१२५]–मूर्च्छना[१२६]–प्रभृतीनां शास्त्रीयानां शब्दानां सुष्ठुतया प्रयोगः प्राप्यते । सर्वेषामुद्धरणदानं व्यतिरिच्य केषांचित् स्थलविशेषाणां विवचनमत्र क्रियते ।

मन्दराचलस्य वर्णनं कुर्वाणो नन्दी श्लेषेणारोह्यवरोहिस्थायिसंचारीणां वर्णालङ्काराणां प्रयोगं कियता कौशलेन करोति :

स्थायित्वं क्वचन भजत्यसौ नगेऽस्मिन् ,
संचारी भवति पुनः क्वचित्सरागः ।
आरोही क्वचिदवरोह्यपि क्वचिच्च ,
श्रद्धेयो मृग इव चित्रवर्णशोभः ।।[१२७]

अत्र पर्वते चित्रवर्णशोभः शबलितशोभो मृगः कदाचित् स्थायी=स्थिरो भवति, कदाचित् संचारी=संचरणशीलः, कदाचित् पर्वतशृङ्गेष्वारोही=आरो-

१०५. भरतनाट्यशास्त्रम् २८।२
१०६. हर० २६।८८
१०७. तदेव २६।८४
१०८ तदेव २६।८६
१०९. तदेव २६।८७
११०. तदेव २।१९
१११. तदेव १४।४८
११२. तदेव ४०।२८
११३. तदेव १९।५,२७।१८
११४. तदेव ४०।२८
११५. तदेव २६।८५
११६. तदेव ४०।२८
११७. तदेव ५।३
११८. तदेव २६।८४
११९. तदेव २६।८६
१२०. तदेव २६।८६
१२१. तदेव १६।८७
१२२. तदेव ३।७८, ३२।१२
१२३. तदेव ५।७९
१२४. तदेव १।३३
१२५. तदेव २६।९०
१२६. तदेव ३२।५
१२७. तदेव ५।५९

हणं करोति, कदाचिच्च ततोऽवरोही=अवरोहणं करोति ।

अत्र श्लिष्टोपमाबलेन गीते वर्णालंकाराणां स्थितिरपि स्पष्टा भवति। एतेषां स्वरूपं यथा :

आरोही चावरोही च स्थायीसंचारिणौ तथा ।
वर्णाश्चत्वार एवैते ह्यलंकारास्तदाश्रयाः ।।
आरुहन्ति स्वरा यत्र आरोही स तु संज्ञितः ।
यत्र चैवावरोही च सोऽवरोहीति भण्यते ।।
स्थिराः स्वराः समा यत्र स्थायी वर्णः स उच्यते ।
संचरन्ति स्वरा यत्र स संचारीति कीर्तितः ।।[१२८]

सप्तदशे सर्गे कुसुमावचय-प्रसंगे युवतीनां समूहस्य तुलनां स गान्धर्वस्थित्या करोति :

आक्षिप्तप्रियतमचेतसा तदानीं, पुष्पेषु स्फुटमवतावधानयोगम् ।
पर्याप्तस्वरपदतालसच्छ्रियोच्चै गान्धर्वस्थितिरथ यौवतेन तेने ।।[१२९]

आक्षिप्तप्रियतमचेतसा=आक्षिप्तं प्रियतमानां चित्तं येन तेन, यौवतेन= युवतीनां समूहेन, पुष्पेषु=कुसुमेषु, अवधानयोगम्=ऐकाग्र्यं, स्फुटम् अवता= गच्छता, पर्याप्तस्वरपदतालसच्छ्रिया=नूपुराणां क्वणितयोगेन पर्याप्ता पदानां तालस्य या सच्छ्रीस्तया गान्धर्वस्येव स्थितिर्विहिता । गान्धर्वमपि प्रियतमानां चित्तमाक्षिपति, पुष्पेषौ=कामदेवे उद्दीपकत्वात् स्फुटं भवति, अवधानस्य योग-मपेक्षते, पर्याप्तैः षड्जादिभिः स्वरैः स्वराणामाधारभूतैः सुप्तिङन्तैः पदैस्ता- लैश्च शोभनं भवति । तद्यथा :

पदस्थः स्वरसंघातस्तालेन सुमितस्तथा ।
प्रयोज्यश्चावधानेन गान्धर्वमभिधीयते ।।

अत्र गान्धर्वस्य पारिभाषिकशब्दानां प्रयोगः कवेः संगीतस्य मार्मिकं ज्ञानमभि- व्यनक्ति ।

अन्यत्र मत्तांगनानां वनविहारवर्णनप्रसंगे 'मायूरी' नाम्नी मार्जना=स्व- राश्रयः स्ववैभवं वितनोति :

बिभ्राणा श्रुतिसुखतां मनोरमश्री -
र्यान्तीनां वनभुवि मत्तकाशिनीनाम् ।

---

१२८. भरतनाट्य० २९।१७-१९
१२९. हर० १७।२४

मायूरी कलविरुतिः स्वराश्रयत्वं ।
सम्प्राप्ता व्यतनुत मार्जनेव शोभाम् ।।[१३०]

वनभूमौ यान्तीनां मत्तांगनामाभूषणानां स्वरैः श्रुतिसुखतां=श्रुतिमधुरतां प्राप्नुवाना मायूरी कलविरुतिः=मयूरस्य केका, स्वराश्रयत्वम्='षड्जं वदति मयूरः' इत्युक्तेः स्वरस्य षड्जस्याश्रयतां प्राप्ता मार्जनेव शोभां व्यतनुत। मार्जना स्वराश्रयविशेषः। सा च मायूरी, अर्धमायूरी तथा कर्मारवीभेदेन त्रिधा भवति।[१३१] आसु मायूर्यां स्वराणामवस्थानप्रकार एवं निरूपितः :

गान्धारो वामके कार्यः, षड्जो दक्षिणपुष्करे।
ऊर्ध्वके पंचमश्चैव, मायूर्यां तु स्वराः स्मृता।।[१३२]

कस्य स्वरस्य कदा प्रयोगः करणीयः इत्यपि कविः साधु जानाति। 'भगवत्प्रबोधन'—नाम्नि सर्गे सौखशायिकाः भगवन्तं शंकरं प्रति कथयन्ति यदिमाः किन्नर्यो 'भिन्नषड्जं' नाम रागं गायन्ति। रागोऽयं प्रभात एव गीयते : इति संगीतशास्त्रिणां मतम्।[१३३]

पञ्चमेऽङ्के 'शुद्धशाडव'[१३४] नाम्नो गीतस्य वैशिष्ट्यं वर्णतया कविनोक्तं यद्गीतमिदं गायन् पुमान् कदाचिदपि क्लान्तिं न भजति।[१३५]

संगीतस्य प्रभावो न केवलं सचेतनेष्वेवापि तु जडेष्वप्यभिन्नतया पतति। अतएव तु 'क्वणदलिसंहतिवल्लकीनिनादैः जनितसुखमिव, निशावसाने कुमुदवनं

---

१३०. हर० १७।८१

१३१. मायूरी ह्यर्धमायूरी तथा कर्मारवी पुनः ।
तिस्रस्तु मार्जना ज्ञेया पुष्करेषु स्वराश्रयाः ।। (नाट्यशास्त्रम् ३४।१०४)

१३२ नाट्यशास्त्रम् ३४।४६

१३३. हर० २९।६१

१३४. मध्यमविकारजातिसम्भूतः शुद्धशाडवः ।
न्यासोऽस्य मध्यमोंऽशश्च गान्धारेण तु दुर्लभः ।।
यस्मिन् भवति रागश्च यस्माच्चैव प्रवर्तते ।
मन्द्रश्च तारमन्द्रश्च योऽत्यर्थं नोपलभ्यते ।।
ग्रहोपन्यासविन्यासन्याससंन्यासगोचरः ।
अनुवृत्तस्तु यच्चेह सोंऽशः स्याद्दशलक्षणः ।।
न्यासश्चातुरमार्गंश्च जातीनां व्यक्तिकारकः ।
सर्वस्वराणां नाशश्च विहितस्त्वथ जातिषु ।।
न मध्यमस्य नाशस्तु कर्तव्यो हि कदाचन ।। (भरतनाट्यशास्त्रम्)

१३५. हर० ५।९३

प्राप्तनिद्रं बभूव ।'[१३६]

भावानुबन्धो भावावेशश्च गीतस्योपनिषत् । तस्यां साक्षात्कृतायामेव कृतकृत्यतामेति जीवः ।[१३७]

एवं संगीतं स्ववैभवेन साकमस्मिन् काव्ये राराजते ।

**नृत्यकला**

नृत्यकलाया ज्ञानं सर्वस्मादपि द्वितीयसर्गाद् यत्र नृत्यसम्बधिनां विविधानां पारिभाषिकशब्दानां प्रयोगोऽस्ति, प्राप्यते । केषांचिन्नृत्यानां नामान्यपि समुपलभ्यन्ते 'पिण्डीबन्ध' (१८।९१) 'रासकनृत्त' (१८।१०८), 'चारीनृत्त' (३२।११), प्रभृतीनां नृत–नृत्यभेदानां संकेता उपलभ्यन्ते । त्रिविधमुद्राणां, विविधदृष्टीनां चोल्लेखोऽपि प्राप्यते । 'मुकुलादृष्टिः' (२६।२५), मदिरादृष्टिः' (२६।४४), 'अद्भुतादृष्टिः' (२१।५८), प्रभृतयो दृष्ट्यो साधु निरूपिताः ।

**कामशास्त्रम्**

रत्नाकरेण स्व काव्ये कामशास्त्रस्य प्रावीण्यमसकृदाविष्कृतम् । नागरोपयोगि कामक्रीडाः समुपनिबध्यमानास्तात्कालिकीं सुसमृद्धि द्योतयन्ति । कुसुमावचथ - जल - क्रीडा - प्रसाधन - पानगोष्ठी–नामकाः सर्गाः कामसिद्धान्तानां भाष्यरूपा एव सन्ति । 'सम्भोग' नामकः सर्गस्तु सिद्धान्तभूमिरिव प्रतीयते । प्राक्केलिमारभ्य निधुवनविलसितं यावत् क्रमशः कामकलाया विवेचनं कविना कृतम् । वृक्षाधिरूढक[१३८] -करजक्षत[१३९]

---

१३६. विशदमधुरणानुबन्धक्वणदलिसंहृतिवल्लकीनिनादैः ।
छनितसुखमिव क्षपाक्षाने कुमुदवनं प्रतिपन्ननिद्रमासीत् ॥ (हर० २८।६०)

१३७. भावावेशनिमीलितेक्षणयुगं सम्पूरितैर्वेणुभिः
मूर्च्छद्भिः कृतसौष्ठवं रसभरादाकर्ण्य गीतं पुनः ।
प्रेमस्निग्धमपाययन्त रतये तास्त्वर्यमाणा इव,
स्रस्तांगश्लथसन्धिरत्नरशनादामस्वनैः कामिनः ॥ (हर० २६।९०)

१३८. तदेव ५।३३,
वृक्षाधिरूढकं यथा :
चरणकमलमेकेनांघ्रिमाक्रम्य भर्तुरपरपदसरोजेनाश्रयन्ती तदूरूम् ।
तरुमिव भुजवल्लयापीड्य चुम्बन्नतांगी कथितमिह मुनीन्द्रैस्तैद्धि वृक्षाधिरूढम् ॥
(हंसविलासः, पृ० २९३)

१३९. हर० २७।४४, ४६, ५४, ६२ तल्लक्षणम् :
रागवृद्धौ संघर्षात्मकं नखविलेखनम् ।
(काम०, अधि० २, अध्यायः ४, सू० १)

यथावा :
ग्रीवाकरोरुजघनस्तमपृष्ठकक्षाहृत्पार्श्वगण्डविषये नखराः खराः स्युः ।
माने, नवीनसुरते, विरहप्रवासे, द्रव्यक्षयेऽथ विरतौ च मदे प्रयोज्याः ॥

दन्तक्षत[१४०]-कचग्रहण[१४१]-शशप्लुत[१४२] -अर्धचन्द्र-[१४३]विद्युन्माला[१४४] -उपसृप्तक[१४५]-स्तनालिंगन[१४६]—सीत्कृति[१४७]—विपरीतरतादीनां[१४८] सांगोपांगं स्वरूपं प्राप्यते।

लीलाविलासकिलकिंचितहावहेलादीनां चमत्कृतिर्यूनां हृदयमहार्षीत् :

लीलाविलासकिलकिंचितहावहारि -
हेलाभिरामसुकुमारमदप्रगल्भाः ।

---

१४०. हर० २७।५१, तल्लक्षम् :
तया दशनच्छेदस्य सात्म्यवशाद्वा। (काम०, अधि०२, अ० ४, सू० २)

१४१. २७।७१
स्निग्धा घनाः कुंचितनीलवर्णाः केशाः प्रशस्तास्तरुणीजनानाम्।
प्रेमप्रवृध्यै विधिनैव मन्दं ग्राह्याः करैश्चुम्बनदानकाले ॥
(हंस०, पृ० २६७)

१४२. हर २७।७०, तल्लक्षणं यथा :
तत्प्रयोगश्लाघायाः स्तनचूचुके संनिकृष्टानि पंचनखपदानि शशप्लुतम्।
(काम०, २।४।२०)

१४३. हर० ४१।२६, ४३।१७७,४४।२३, तल्लक्षणम् :
ग्रीवायां स्तनपृष्ठे च वक्रो नखपदनिवेशोऽर्धचन्द्रकः। (काम०, २।४।१४)

१४४. हर० २७।७०, ३०।७२, तल्लक्षणम् :
अल्पदेशायाश्च त्वचो दशनद्वयसन्दंशजा विन्दुसिद्धिः।
सर्वैविन्दुमालायाश्च ललाटे चोर्वोर्विन्दुमाला।
(काम०, २।५।१२, १३।१५)

१४५. हर० ४२।७, तल्लक्षणम् :
न्याय्यमृजुसम्मिश्रणमुपसृप्तकम्। (काम०, २।८।२१ तथा सर्वोऽप्यष्टमोऽध्यायः)

४४६. हर० २७।७, तल्लक्षणम् :
स्तनाभ्यामुरः प्रविश्य तत्रैव भारमारोपयेदिति स्तनालिंगनम्।
(काम०, २।२।२५)

१४७. हर० ४३।२७१, तल्लक्षणम् :
सुरते दशनच्छदो यदा प्रमदायाः परिखण्ड्यते भृशम्।
दयितेन तदार्तिरागकृत् क्रियते सीत्कृतमंजसा तया ॥
(हंसविलासः, पृ० ३०५)

१४८. हर० ४।५, २७।८८, ६२, ६३, ६४, ६५। तल्लक्षणं यथा :
जातश्रमं वीक्ष्य पतिं पुरन्ध्री स्वेच्छात एवाथ रतेष्वतृप्ता।
कन्दर्पवेगाकुलिता नितान्तं कुर्वीत तुष्ट्यै पुरुषायितं सा ॥
(हंस०, पृ० ३०३)

रागादपर्यवसितेच्छमिति प्रियांस्ताँ ।
श्च्छन्दानुवृत्तिनिपुणं रमयाम्बभूवु: ।।[१४९]

निम्मलिखितयोः श्लोकयो: :

(क) अशिक्षितं प्रातिभतामवाप सुशीलितं विस्मृतरूपमासीत् ।
रतेऽधिरोहत्यमरांगनानां किं नाम कामानुगुणं न जज्ञे ।।[१५०]

(ख) स्पष्टोत्तरं रसमनोज्ञविशेषवृत्ति, शिक्षाप्रपंचरहितं किमपि स्ववेद्यम् ।
चारुभ्रुवः प्रतिबभौ सुरते तदाशु, पुष्पायुधस्य हृदयं यदखण्डमासीत् ।।[१५१]

अत्रकामसूत्रस्यास्य श्लोकस्य प्रभाव: सुस्पष्ट: :

स्वप्नेष्वपि न दृश्यन्ते ये भावास्ते च विभ्रमा: ।
सुरतव्यवहारेषु ये स्युस्तत्क्षणकल्पिता: ।।[१५२]

सम्भोगाख्या रतिरेवं समाप्तिं गता :

निबिडजघनरोहकाण्डयुग्मा तरलविवर्तिततारकेक्षणश्री: ।
दृढतरपरिरम्भविभ्रमासीत् कमलदृशां सुरतावसानलीला ।।[१५३]

शास्त्रान्तरवत्कामशास्त्रीयपाण्डित्यमपि रत्नाकरस्याद्वयीं स्थितिं भजन् वाभासते ।

## राजनीतिः

कवे राजनीतिविषयकं ज्ञानं ८–१६ तथा ३२–३८ सर्गेभ्यः प्राप्यते । भारविणा माघेन च यदेकैकेन सर्गेणोपनिबद्धं तदिहैतावत्सु सर्गेषु सविस्तरं निबद्धं दृश्यते । राज्ञां सम्पर्के निवासहेतुना राजनीतेः सूक्ष्मं ज्ञानं स्वाभाविकमेवासीत्तस्य । महाभारत-अर्थशास्त्र-कामन्दकीयनीति-शुक्रनीति-ग्रन्थानामनुसारं तस्य राजनीतिचर्चा प्रसृता भवति ।

भगवान् शंकरोऽस्मिन् काव्ये राजेव चित्रितोऽस्ति । तथैवान्धकोऽपि । अत उभयोरपि कार्यपद्धतिरेकेन निश्चितकार्यक्रमानुसारेण चलति ।

'सप्तांगस्य'[१५४] राज्यस्यादर्शं पुरो निधाय रत्नाकरः स्वराजनीतिं प्रपंचयति ।

---

१४९. हर० २७ ११३
१५०. तदेव २७।३६
१५१. हर० २७।६५
१५२. काम० २।७।३२
१५३. तदेव २७।११०
१५४. स्वाम्यमात्याश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् ।
परस्परोपकारीदं सप्तांगं राज्यमुच्यते ।। (कामन्दकीयनीतिसारः, ४।१)
यद्वा : स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
सप्तांगमुच्यते राज्यं तत्र मूर्धा नृपः स्मृतः ।।

स्वामी भगवान् शंकरोऽन्धकश्च। तयोरमात्याः कालमुसलभार्गवादयः, राष्ट्रं, दुर्गं, कोशो, बलं सुहृद्–इमे सर्वेऽपि यथायथं प्रयुक्ताः सिद्ध्यसिद्धयोर्हेतुत्त्वेनोपन्यस्तौ।

गम्भीरप्रश्नेषूपस्थितेषु मन्त्रिपरिषदि विचारो भवति। तत्र विविधदृष्टिकोणैस्तथ्यानां मीमांसा क्रियते। साम-दाम-दण्ड-भेदादीनां पुंखानुपुंखं विवेचनं भवति। तदनन्तरं दूतनियुक्तिः क्रियते।[१५५] दूतोऽवध्यो भवति।[१५६] दूतस्य यानि लक्षणानि निर्दिष्टानि तानि सर्वाण्यपि कालमुसले प्राप्यन्ते।[१५७] तस्य वाग्मिता राजादिगतव्यवहारश्च मनो मोहयत्येव।[१५८]

राज्ञ उत्पत्तिविषये स दैवं सिद्धान्तमुररीकरोति। राजा प्रजानां प्रालनाय वेधसा समुत्पादितोऽस्ति। यदि राजा नाभविष्यत्तर्हि मात्स्यन्यायः प्रचलितोऽभविष्यत्।[१५९] राज्ञोऽभावे प्रजाः कर्णधाररहिता नौरिव विप्लवेत।[१६०] राजैवास्य जगतो वृद्धेर्हेतुः।[१६१]

तस्य सर्वोपरि कार्यमस्ति प्रजा-संरक्षणम्। शासनसंचालनार्थं स राज्यांगानां संवर्धनं परिरक्षणं, अमात्यानां राजदूतानां च नियुक्ति, सुहृदां संग्रहं, कोशस्योपचयं बलस्य-चतुरंगसैन्यस्यार्जनं, दुर्गस्य राष्ट्रस्य च निरन्तरमुपार्जनं

---

दृगमात्यः, सुहृच्छ्रोत्रं, मुखं कोशो, बलं मनः।
हस्तौ पादौ दुर्गराष्ट्रे राज्यांगानि स्मृतानि हि॥
(शुक्रनीतिः, १।६१, ६२)

१५५. हर० १६।७९, मनु० ७।६६

१५६. तदेव ३५।६

१५७. अनुरक्तः शुचिर्दक्षः स्मृतिमान् देशकालवित्।
वपुष्मान् वीतभीर्वाग्मी दूतो राज्ञः प्रशस्यते॥
यथावा –
यथोक्तवादी दूतः स्याद्देशभाषाविशारदः।
शक्तः क्लेशसहो वाग्मी देशकालविभागवित्॥
विज्ञातदेशकालश्च दूतः स्यात् स महीक्षितः।
वक्ता नयस्य यः काले स दूतो नृपते भवेत्॥ (मत्स्यपुराणम्)

१५८. द्रष्ट० ३२।६९–११७, सम्पूर्णोऽप्यष्टत्रिंशः सर्गश्च।

१५९. महाभारतम्, शान्तिपर्व। अष्टषष्टितमोऽध्यायः।

१६०. शुक्रनीतिः १।६५ एवमन्येऽपि श्लोकाः।

१६१. कामन्दकः १।९, १४।३.

करोति । मन्त्रिपरिषत्सभासंसदादीनां संगठनं च स्वकार्यसंचालनाय करोति ।[१६२] षाड्गुण्यस्योपायानां नीतीनां च पालनं तेनोचितानुचितं विविच्य कार्यम् । यावत्सम्भवं सामाद्युपायत्रयेणैव कार्यं सम्पादनीयम् ।[१६३]

आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीतीनां राज्ञा सूक्ष्मं ज्ञानं करणीयम् । यद्यप्येतासां प्रयोगविषये आचार्याणां मतभेदः । मनुसम्प्रदायानुसारिण आन्वीक्षिक्या अन्तर्भावं पूर्वोक्तासु तिसृष्वेव चिकीर्षन्ति । बार्हस्पत्या वार्ता दण्डनीतिमेवांगीकुर्वन्ति । परं कौटिल्यश्चतस्त्र एवैताः विद्यात्वेन स्वीकरोति । आसां यथोचितं परिपालनेन राजा आरूढप्रतापो भवति ।[१६४]

राज्ञः परमोधर्मः प्रजापालनमेवास्ति । तच्च नीत्यैव सम्भवम् ।[१६५] अतस्तेन नीतिपरायणेन भाव्यम् ।

हरविजये सत्यपि कवित्वे इयं राजनीतिरेतावत्या सूक्ष्मतया विवेचितास्ति यदिदं काव्यं राजनीति-ग्रन्थ इव प्रतीयते ।

प्रज्ञापूर्वकं क्रियमाणं सर्वमपि संविधानकं राजानमुन्नतिं प्रापयति ।[१६६] कर्मणामारम्भोपायः, पुरुषद्रव्यसम्पत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धिश्चेति पंचप्रकारको मन्त्रः साधु प्रयुक्तः संस्तथैव सिद्धिचक्रं चालयति यथा प्राणापानसमानोदानव्यानभेदान्मरुत् शरीरयात्रां निर्वर्तयति :

मन्त्रेण पञ्चविधतामुपजग्मुषा च,
नीतिप्रपञ्चरचना विजिगीषु पुंसाम् ।
आसंसृतिक्रमजुषा भुवनत्रयेऽपि,
निर्वर्त्यते हि मरुतेव शरीरयात्रा ।।[१६७]

इदं पञ्चाङ्गं प्रयुक्तं सद् राजानं तथैव सिद्धिं प्रापयति यथा प्रतिज्ञाहेतु-दृष्टान्तोपनयनिगमेति पंचावयवयुक्तं वाक्यं प्रयुक्तं सद्वादिनं जयं लम्भयति :

---

१६२. अर्थशास्त्रम्, अध्यायः१, प्रकरणम् ९८,९९

१६३. कामन्दकः १७।२, मनुः ७।१९८

१६४. अर्थशास्त्रम् अधि० १। प्रकरणम् १। अध्यायः १
कामन्दकीयनीतिसारः २।१–६.

१६५. नृपस्य परमो धर्मः प्रजानां परिपालनम् ।
दुष्टनिग्रहणं नित्यं, न नीत्यास्तो विना ह्युभ ।। (शुक्र० १।१४)

१६६. हर० ९।७३.

१६७. हर० ९।७४

दर्शितावयकपंचकं क्रमात्तत्कणव्रतविनेयविभ्रमाः ।
दुर्जयोर्जितविपक्षनिर्जये वाक्यमंचितधियः प्रयुंजते ।।[१६८]

एभिः सिद्ध्यङ्गैर्युक्तो मन्त्रो नीतिशास्त्रोपनिषत्सु परमपुरुष इव स्वकीयां स्थितिं न परिहरति । परस्य पुंसः पंचधात्वमन्नमय-प्राणमय-मनोमय-विज्ञानमय-आनन्दमयकोषरूपत्वेन प्रसिद्धमेव :

न नीतिशास्त्रोपनिषत्सु पंचधा स्थितिं जहात्येष परः पुमानिव ।
प्रदीपितोद्दामविपर्ययग्रहैर्निरूपितो मन्त्र इह प्रणेतृभिः ।।[१६९]

अनलसैः कार्यज्ञैर्यथायथं विभज्यमानेयं नीतिर्मृणालवल्लीव गुणान् सन्धि-विग्रहयानासनद्वैधीभावसमाश्रयणात्मकान् सन्धिगुणान्[१७०] (मृणालवल्लीपक्षे तन्तून्) विहायान्यत्किं प्रसूते ?

एतासु नीतिषु पूर्वं सामैव प्रयोक्तव्यम् । शान्तेराशयो नायमस्ति यत्तस्य प्रभावो न भवति । धीरकोपतां बिभ्रतः पुरुषस्याननं प्रथमं स्मितयुक्तं भवति :

साध्यवस्तुषु न सामपूर्वकं साधनं न खलु शस्यते बुधैः ।
बिभ्रतो भवति धीरकोपतामाननं प्रथममुन्मिषत्स्मितम् ।।[१७१]

विप्लवस्य=अनर्थस्याभावं प्रतिपादयन्ती सामनीतिर्यत्सत्यं सामवेदस्वरूप-मिव प्रतिभाति । सामनीतेः गुणसंकीर्तनम्, सम्बन्धोपाख्यानम्, परस्परोपकार-दर्शनम्, आयतिप्रदर्शनम्, आत्मोपवर्तनम्--इति रूपात् पञ्च भेदा भवन्ति ।[१७२] सामवेदस्यापि आहवलक्ष्म, हिंकारः, प्रस्तावः, प्रतिहारकः, उद्गीथः, निधनश्चेति पञ्च भेदा भवन्ति ।[१७३]

कृत्यवस्तु निपुणं प्रसाधयद् विप्लवोदयदशाविनाकृतम् ।
विद्धि भेदगहनैरवस्थितं तच्च संकलितपंचभक्तिकम् ।।[१७४]

---

१६८. तदेव १४।१७

१६९. तदेव १२।३५

१७०. सन्धिविग्रहासनद्वैधीभावाः षाड्गुण्यमित्याचार्याः ।
एवं षड्भिर्गणैरेतैः स्थितः प्रकृतिमण्डले ।
पर्यपेत क्षयात् स्थानं स्थानाद् वृद्धिं च कर्मसु ।। (अर्थशास्त्रम्, ७।६८--६९।१)

१७१. हर० १४।२३

१७२. परस्परोपकाराणां कीर्तनं गुणकर्मसु ।
सम्बन्धस्य समाख्यानमायत्याः सम्प्रकाशकम् ।।
वाचा पेशलया साधु 'तवाहमिति' चार्पणम् ।
इति सामप्रयोगज्ञैः, साम पंचविधं स्मृतम् । (कामन्दकीयनीति० १७।४, ५)

१७३. छान्दोग्योपनिषद् ।

१७४. हर० १४।२४

यथा सेचनादिभिः शून्यास्तरवः फलरहिताः संजायन्ते परं यदि त एव साधुतया पर्यवेक्ष्यन्ते तदा ते सुभृशं फलन्ति एवमेव राज्ञः क्रियाविशेषा नयाश्रिताः सन्तो भूयसे फललाभाय कल्पन्ते ।[१७५] दृढतया प्रतिपादिताः सामादय एव यस्मिन् अराः, विरूढक्रमः=परिपक्व काल एव यत्र नेमिः, द्वादशराजकमण्डलमेव[१७६] यस्य नाभिः, विजिगीषुश्च तस्य नाभेश्चक्रस्य मध्यवर्ती संस्तस्य स्तम्भको भवति एवंविधं कार्यचक्रं क्वचनापि न शीर्यते :

स्थिराभ्युपायप्रकटारसंचयं दधद्विरूढक्रमकालनेमिताम् ।
प्रवर्तितं मण्डलनाभिबन्धनं, न कार्यचक्रं क्वचनात्रशीर्यते ।।[१७७]

यो राजा उपायान् सम्यक्तयावलम्बते स ध्रुवं स्वकीयं पदमभिरक्षति ।[१७८] सुस्थिरमूलस्य, नयानुसारं कार्यं कुर्वतः, कोषदण्डाभ्यामुपचितस्य राज्ञः कृते लक्ष्मीः कमलस्य कर्णिकैव शोभां विभर्ति :

विरूढमूलस्य नयानुसारिणः, सकोषदण्डोपचयस्य भूपतेः ।
कुशेशयस्योपचितेव कर्णिका विभर्ति लक्ष्मीः परिणामपीनताम् ।।[१७९]

एतद् विपरीतं दण्डनीतिरेव नीतिरेतच्छुक्राचार्यादिसम्मतं मतम् । वस्तुतो दण्ड एव राजा । स एव सर्वाः प्रजाः शास्ति ।[१८०] यदि च दण्डो नाभविष्यत्तर्हि

---

१७५ उपायशून्यास्तरवः क्षिताविह क्रियाविशेषा व्यभिचारिणः फले ।
त एव नूनं नियमेन भूभुजां फलन्ति कल्पद्रुमवन्नयाश्रयाः ।। (हर० १२।३६)

१७६. अरिर्मित्रमरेर्मित्रं मित्रमित्रामतः परम् ।
तथारिमित्रमित्रं च विजिगीषोः पुरः स्मृतम् ।।
पार्ष्णिग्राहस्ततः पश्चादाक्रन्दस्तदनन्तरम् ।
आसारावनयोश्चैव विजिगीषोश्च पृष्ठतः ।।
अरेश्च विजीगीषोश्च मध्यमो भूम्यनन्तरः ।
अनुग्रहे संहतयोः समर्थो व्यस्तयोर्वधे ।।
मण्डलाद् वहिरेतेषामुदासीनो बलाधिकः ।
अनुग्रहे संहतानां व्यस्तानां च वधे प्रभुः ।। (शुक्रनीतिः)

१७७. हर० १२।३८

१७८. उपायसोपानपरम्परामिमां यथाक्रमं योऽधिरुरुक्षुराश्रितः ।
स नूनमुच्चैः पद एव नीतिमान् कृतप्रतिष्ठो न चिराद विभाव्यते ।। (हर०१२।४०)

१७९. तदेव १२।४४

१८०. स राजा पुरुषो दण्डः, स नेता, शासिता च सः ।
चतुर्णामाश्रमाणां न धर्मस्य प्रतिभूः स्मृतः ।।
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ।। (मनु० ७।१७-१८)

'शूले मत्स्यानिवापक्ष्यन् दुर्वलान् वलवत्तराः।'[१८१] राजदण्डभयादेव लोकाः स्व-स्व धर्मे रता भवन्ति।[१८२] दण्डस्त्रिवर्गरक्षकः। स एव प्रजाः पापेभ्यो वारयति। मर्यादा- संरक्षणार्थं दण्डस्य प्रयोगोऽनिवार्यः।[१८३] अतस्त्रयोदशे सर्गे दण्डस्य माहात्म्यं सुष्ठु प्रतिपादितमस्ति।

ये सामादिमृदूपायानुपासते ते स्पष्टतया मन्दवीर्यगतय एव, ये च विपक्ष-समूहं कान्दिशीकान् विदधति ते गण्डकाख्यस्य जीवम्य विषाणकल्पा अत्यन्तं दुर्लभाः।[१८४] अयमेक एव गुणः गुणशतादपि श्लाघ्यतरः।[१८५] वीरा अस्य वलेनैव संग्रामभवनेषु प्रतिपक्षलक्ष्मीं चरणयोर्दासीं कुर्वन्ति।[१८६] योद्धारः समरभूमौ धनुषि यं गुणं (ज्यावन्धं) द्रढीकुर्वन्ति तेन ते विद्विषां लक्ष्मीमेव निब–

१८१. मनु: ७।२०
दण्डाभावे परिध्वंसी मात्स्यन्यायः प्रवर्तते।                    (कामन्दक २।४०)
१८२. राजदण्डभयाल्लोकः स्व-स्व धर्मपरो भवेत।।                    (शुक्र० १।२३)
१८३. दण्डः संरक्षते धर्मं तथैवार्थं जनाधिपः।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते।।
दण्डस्यैव भयादेके न खादन्ति परस्परम।
अन्धे तमसिमज्जेयु र्यदि दण्डो न पालयेत्।।
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः।
जले मत्स्यानिवाभक्ष्यन् दुर्वलान् वलवत्तराः।।
अन्धं तम इवेदं स्यान्न प्राज्ञायेत किंचन।
दण्डश्चेन्न भवेल्लोके विभजन् साध्वसाधुनी।।
चतुर्वर्णप्रमोदाय सुनीतिनयनाय च।
दण्डो विधात्रा विहितो धर्मार्थौ भुवि रक्षितुम्।।
यदि दण्डान्न विभ्येयु र्वयांसि श्वापदानि- च।
अद्युः पशून् मनुष्यांश्च यज्ञार्थानि हवींषि च।।
(महाभारते शान्तिपर्वणि पंचदशेऽध्याये)
अप्रणीतो हि मात्स्यन्यायमुद्भावयति।
वलीयानवलं हि ग्रसते दण्डधराभावे।।                    (कौटिल्यः, अर्थशास्त्रम्)
१८४. ते मन्दवीर्यगतयः स्फुटमन्य एव सामादिमन्थरपराक्रममासते ये।
ये तु प्रसह्य दलयन्ति विपक्षचक्रमाक्रम्य ते जगति खड्गविषाणकल्पाः।।
(१३।१९)
१८५. एको गुणो गुणशतादपि तावदेष,
सम्प्रत्यनन्यसदृशः किमिवान्न षड्भिः ?                    (तदेव १३।२०)
१८६. संग्रामवासभवने नियतं निषण्णा निःसंशयं विदधति प्रतिपक्षलक्ष्मीम्!
संवाहिकां चरणयोः करिकुम्भपीठपीनोन्नतस्तनकृतास्पदयोः समर्थाः।।
(तदेव १३।२३)

घ्नन्ति।[१८७] तेजस्वी क्षीणः सन्नपि स्वकार्यं साधयत्येव। किं कलामात्रावशिष्टोऽपि चन्द्रो रात्रिं न विदधाति?[१८८] ये महासत्वा भवन्ति ते हेलयैवान्याशक्यं दुःशक्यं च कार्यं सम्पादयन्ति।[१८९] खड्गधारां विष्णोः सदृशीं मन्यमाना स्वभावचंचलापि लक्ष्मीस्तत्र वल्लभत्वधियाऽचंचला सती वसति।[१९०] इयं हि लक्ष्मीर्भ्रमराणां विरुदावलीमुपेक्ष्य, कमलकोमलशय्यामप्युत्सृज्य वीरानुरागेणासिपत्रवने (१. असीनां धारासु २. 'असिपत्र' नाम्नि नरके च) निश्शंकं वसति।[१९१] 'विषमनीतिपिशाचिकाभि' स्त एव ग्रस्ता भवन्ति ये ससारा न भवन्ति।[१९२] निस्त्रिंशपुष्करजलेन कृताभिषेको भट आत्मानं रणक्षेत्रे सर्वथा पवित्रीकरोति।[१९३]

नीतिमार्गोऽतिगहनो जगदुपकारि चास्ति। शास्त्रान्तराणि कर्तव्यैकदेशबोधकानि भवन्ति, परमसौ मार्गः पुरुषार्थचतुष्टयस्य साधकः।[१९४] विना नीतिं लोके व्यवहारस्य स्थितिस्तथा भवितुं न शक्नोति यथा विना भोजनं देहस्य

१८७. आरोप्यते भटजनेन शरासनाग्रकोटिं समीकभुवि यो गुणवन्धपाशः।
आकृष्य तेन तरसा सरलत्वमाप्ता संयम्यते दृढतरं प्रतिपक्षलक्ष्मीः॥
(तदेव १३।२४)

१८८. क्षीणोऽपि दूरमवलम्बत एव नूनमव्याहतां जगति कार्यधुरां महस्वी।
किं लोचनोत्सवविधायिकलावशेषरूपोऽपि शीतकिरणः कुरुते न रात्रिम्॥
(तदेव १३।२७)

१८९. संपश्यतोऽन्तरमिहासुमतां विसारिसत्वं वलादधिकमित्यपि मे वितर्कः।
सिंहो निपातयति चण्डचपेटयैव पृष्ठेन तूद्वहति कुञ्जरमष्टपादः॥
(तदेव १३।४७)

१९०. संवादिनी नियतमस्य मुरारिदेहच्छायेति चंचलतया रहितान्न लक्ष्मीः।
शंके शरद्गगननीलरुचौ कृपाणपट्टेऽनुरक्तहृदयारचयत्प्रतिष्ठाम्॥
(हर० १३।५५)

१९१. उत्सृज्य पट्चरणवारणचक्रवालगीतस्तुतां नवकुशेशयकोषशय्याम्।
वीरानुरागरभसेन वसत्यमीक्ष्णं शंके सलीलमसिपत्रवनेऽपि लक्ष्मीः॥
(तदेव १३।५६)

१९२. व्याघातविप्लुतमहो विधुरं वर्ततदस्यानसम्भ्रमतिरस्कृतधैर्यवन्धाः।
यूयं यदेवमधुना भुजशालिनोऽपि ग्रासीकृता विषमनीतिपिशाचिकाभिः॥
(तदेव १३।५८)

१९३. आत्मानमाशु सुभटः समरे पुनाति,
निस्त्रिंशपुष्करजलेन कृताभिषेकः॥ (तदेव १३।७२)

१९४. क्रियैकदेशबोधीनि शास्त्राण्यन्यानि यानिहि।
सर्वोपजीवकं लोकस्थितिकृन्नीतिशास्त्रकम्॥
धर्मार्थकाममूलं हि स्मृतं मोक्षप्रदं यतः। (शुक्रनीति० १।४,५)

स्थितिः।[१९५] राजधर्मो नीत्यायत्तः। नीतिराहित्यमेव राज्ञो महद्दूषणम्।[१९६] त्यक्तनीतिः शासको दुःखभाग् भवति, तस्य सेवापि चासिधारालेहनमिव विपत्करी।[१९७] यत्र नीतिर्वलं चेत्युभयं वसति तत्र सर्वतो लक्ष्मीरागच्छति।[१९८] यदि राज्याङ्गेषु भेदः संजायते तदनीतेरेव विजृम्भितम्।[१९९]

रत्नाकरो नीतिमार्गस्य भृशं प्रशंसकः। तेन नीतिमूलका विचारा अनेकशः प्रकाशिताः। नीतिं विना यदि लक्ष्मीः प्राप्तापि स्यात्तर्हि सा चिरस्थायिनी न भवति :

मूढमार्गरभसाहृताः स्फुटं न श्रियोऽपि वहु मन्वते पतीन्।[२००]

किंकर्तव्यविमूढतायाः स्थितौ 'मतिदीपिका' नितान्तं दुर्लभा भवति ''कार्यमोहतिमिराववोधिनी दुर्लभा तु मतिदपिका नृणाम्।''[२०१] वुद्धिशालिनो निसर्गचंचलां श्रियं नीतिवलेन स्थिरां कुर्वन्ति 'स्थेयसीं विदधतीह पण्डिताः स्त्रीनिसर्गतरलां नृपश्रियम्।'[२०२] वलशालिनि शत्रौ मतिमता सहसैव नातिसन्धेयम्, यतोहि यत्र सर्पसद्भावशंकास्ति तादृशे वल्मीके को नु स्वकीयं हस्तं प्रवेशयेत् ?

विद्विषत्यतुलितोरुविक्रमे विक्रमेत सहसा न नीतिमान्।
को नु संशयितपन्नगे करं वामलूरविवरे विनिक्षिपेत्? ॥[२०३]

नीतिशास्त्रज्ञाः समयं वीक्ष्य कार्यं कुर्वन्ति। तीक्ष्णेन तीक्ष्णं, मृदुना मृदुं च संयोजयन्ति :

---

१९५. सर्वलोकव्यवहारस्थितिर्नीत्या विना नहि।
यथाशनैर्विना देहस्थिति र्न स्याद्धि देहिनाम्॥ (सैव १।११)

१९६. अनीतिरेव सच्छिद्रं राज्ञो नित्यं भयावहम्।
शत्रुसंवर्धनं प्रोक्तं वलह्रासकरं महत्॥ (शुक्र०१।१५)

१९७. नीतिं त्यक्त्वा वर्तते यः स्वतन्त्रः स हि दुःखभाक्।
स्वतन्त्रप्रभुसेवा तु ह्यसिधारावलेहनम्॥ (सैव १।१६)

१९८. स्वाराध्यो नीतिमान् राजा दुराराध्यस्त्वनीतिमान्।
यत्र नीतिबले चोभे तत्र श्रीः सर्वतोमुखी॥ (सैव१।१७)

१९९. भिन्नं राष्ट्रं, वलं भिन्नं, भिन्नोऽमात्यादिको गणः।
अकौशल्यं नृपस्यैतदनीते र्यस्य सर्वदा॥ (सैव १।१९)

२००. हर० १४।३६

२०१. तदेव १४।५१

२०२. तदेव १४।५२

२०३. तदेव १४।५५

तीक्ष्णेन तीक्ष्णमनिशं मृदुना मृदु च,
संसाधयन्ति परमौपयिकेन तज्ज्ञाः।
सूर्योपलं दिनपतिर्ज्वलयत्यभीक्ष्ण-
मिन्दुश्च चन्द्रमणिमार्द्रयति स्वधाम्ना ।।[२०४]

इयं विचित्ररूपा 'नीतितूलिकैव' क्षमामृतां मण्डलमशेषरूपेणोपस्थितं करोति :

सभूमिलाभं शुभवर्तिरेखया मनोरमं मण्डलकार्यमस्खलत्।
अशेषमुन्मीलयति क्षमाभृतां विचित्ररूपा ननु नीतितूलिका ।।[२०५]

संक्षेपतो नीति हि राजानं मातेव रक्षति, पितेव हिते नियुङ्क्ते, कान्तेव चाभिरमयति।

रत्नाकरस्य राजनीतिविषयका बहुमूल्या विचाराः संख्यायां वहवस्तस्य शब्देष्विदमेवाभिधाय विरम्यते :

"न नीतितुल्यं क्षममस्ति साधनम्।[२०६]

## आयुर्वेदः

कैश्चिच्छ्लोकैरायुर्वेदपाण्डित्यमपि रत्नाकरस्य परिज्ञायते। एकत्र भ्रमराणां विषये सः कथयति यद् भ्रमरसंहतिरनेकपुष्पाणां रससंग्रहादनुभूतरसायनेव सुखमन्वभूत् :

ध्रुवमनेकरसाभ्यवहारतः कृतरसायनसंग्रहसुस्थिता।
मधुलिहामसुखायत संहतिर्वृतिमतीतिमतीत्य कृतस्थितिः ।।[२०७]

रसायनं हि सेव्यमानं वपुषो महदुपकारकम्। यथा चोक्तं भावप्रकाशे :

यज्जराव्याधिविध्वंसी वयःस्तम्भकरं तथा।
चक्षुष्यं, बृहंणं, वृष्यं, भेषजं तद् रसायनम् ।।[२०८]

तृतीयसर्गस्यैवेकस्मिन् श्लोके रसक्रियायाः=पारदशोधनप्रक्रियाया उल्लेखः कृतोऽस्ति :

स्थितिरवापि रसक्रिययेव च स्फुटतरागमशोधिततारया।
क्षयितकालिकचन्द्ररुचोल्लसत्कमलयामलया शरदः श्रिया ।।[२०९]

२०४. हर० १२।७८
२०५ तदेव १२।३०
२०६. तदेव १२।२६
२०७. तदेव ३।६
२०८. भावप्रकाश', उत्तरखण्डः, रसायनाधिकारः १, पृ० ८२१ (चौखम्बा० सं १९६१).
२०९. हर० ३।७२

आगमसिद्धान्तानुसारम्=आयुर्वेदसिद्धान्तानुसारं, शोधितो रसः[२१०] कालिमानं विहाय यथोज्ज्वलतां धत्ते तथैव शरदपि स्फुटागमनेन=समागमनेन तारकानुज्ज्वलीकृत्य कालिमानं विहाय, चन्द्ररुचा समुज्ज्वला भवति ।

प्राणापानसमानव्यानोदानानां पञ्चवायूनां, येषां सन्तुलनं शरीरस्य संचालकं भवति, उल्लेखः शिवस्तुतेरस्मिन् श्लोके कृतो यत्र ऋतवः कथयन्ति यद् भगवन् ! भवदनुग्रहेणैव शरीरस्थोऽग्निः सन्धुक्षितो भवति, स च पञ्चवायून् प्रेरयति :

भवदीरितेन मनसामिहन्यते, सुरनाथ ! विग्रहशिखी शिखाकुलः ।
स समीरमीरयति पञ्चलक्षणं स्थितिहेतुमीश ! वपुषः शरीरिणाम् ।।[२११]

राजनीतिप्रसंगेऽपि पञ्चवायूनां समुल्लेखः प्राप्यते । यथा शरीरस्य संचालनार्थं वायुपञ्चकस्य संयोजनानिवार्यास्ति तथैव विजिगीषोः कृते कर्मणामारम्भोपायपुरुषद्रव्यसम्पद्देशकालविभागविनिपातप्रतीकारकार्यसिद्ध्याख्यानां पञ्चानां तत्वानां संयोजनानिवार्यास्ति :

मन्त्रेण पंचविधतामुपजग्मुषा च,
नीतिप्रपंचरचना विजिगीषुपुंसाम् !
आसंसृतिक्रमजुषा भुवनत्रयेऽपि,
निर्वर्त्यते हि मरुतेव शरीरयात्रा ।।[२१२]

राजनीतिप्रसंग एवायुर्वेदस्य रस-वीर्य-विपाक-प्रभाव-संयोगानां सन्दर्भोऽपि सुन्दरतया प्रदत्तोऽस्ति । तद्यथा :

यथाखिलद्रव्यमतांश्चिकित्सका विविंचते पञ्चरसादिकान् बुधाः ।
तथैव मन्त्राश्रयतामुपेयुषः सुनीतिभाजोऽवयवाञ्जिगीषवः ।।[२१३]

यथायुर्वेदाचार्या वस्तुषु रस-वीर्य-विपाक-प्रभाव-संयोगानां विषये विचारयन्ति एवमेव राजनीतिज्ञा अप्युपर्युक्तान् कर्मणारम्भोपायांश्चिन्तयन्ति । आयुर्वेदानुसारं द्रव्येषु पञ्च पदार्थास्तिष्ठन्ति :

द्रव्ये रसो गुणो वीर्यं विपाकः शक्तिरेव च ।
पदार्थाः पंच तिष्ठन्ति स्वं-स्वं कुर्वन्ति कर्म च ।।[२१४]
रसाः स्वादुवम्ललवणतिक्तोष्णकषायकाः ।
चरकस्त्वाह वीर्यं तत् क्रियते येन या क्रिया ।।

---

२१०. द्रष्ट०—भावप्रकाशः, पूर्वखण्डम्, पृ० ४१४ (उक्तं संस्करणम्)
१११. हर० ६।६२
११२. तदेव ६।७४
११३, तदेव १२।३१
२१४. भावप्रकाशः, पूर्वखण्डम्, १८१.

नावीर्यं कुरुते किंचित् सर्वा वीर्यवती हि सा ।
जाठरेणाग्निना योगाद् यदुदेति रसान्तरम् ।।
रसानां परिणामान्ते स विपाक इति स्मृतः ।
रसादिसाम्ये यत्कर्म विशिष्टं तत्प्रभावजम् ।।[२१५]

चतुर्दशे सर्गे पुष्पहासः शिवगणानायुर्वेदनिदर्शनं ददानः परिस्थितौ विचार्थमनुरुणद्धि— 'रणरसे भवन्तः सलालसाः, भवतां शक्तिरप्यसन्दिग्धा, अतोऽस्य परिणामेऽपि विचिन्त्यताम् येन स गुणकारी भवेत् :

यूयमाहवरसे व्यवस्थिताः, सप्रभावमपि वीर्यमत्र वः ।
चिन्त्यतां ननु विपाक ईदृशे, कृत्यवतुनि यतो भवेद्गुणः ।।[२१६]

अत्र पूर्वश्लोके वर्णितानां रसवीर्यविपाकगुणानां संयोजना कियता कौशलेन कृतास्ति ।

जठराग्नेः सन्धुक्षणार्थं 'तालीस' चूर्णस्य प्रयोग-विषये समुद्रोल्लासवर्णने समुल्लेखः प्राप्यते । कविः कल्पनां करोति यत्सागरेणातितमां जलं निपीतं येन तस्य जठराग्निर्मन्दतामुपगतः । तमुत्तेजयितुमिव स स्ववीचिहस्तैस्तटस्थितानां 'तालीसा'ख्यानां तरूणां चूर्णमाकर्षतीव :

मन्दीकृतस्य शिखिनो जठरास्पदस्य, तोयातिपानवशतः पृथुवीचिहस्तैः ।
उत्तेजनार्थमिव तीरवनान्तरालतालीसचूर्णनिकरं विचकर्ष सिन्धुः ।।[२१७]

तालीसचूर्णनिर्माणविधिरयं प्रोक्तः शांर्गधरसंहितायाम् :

तालीसं मरिचं शुण्ठी पिप्पली वंशरोचना ।
एकद्वित्रिचतुः पंचकर्षैर्भागान् प्रकल्पयेत् ।।
एलात्वचोस्तु कर्षार्द्धं प्रत्येकं भागमाचरेत् ।
द्वात्रिंशत्कर्षतुलिता प्रदेया शर्करा बुधैः ।।
तालीसाख्यमिदं चूर्णं रोचनं पाचनं स्मृतम् ।
कासश्वासज्वरहरं छर्द्यतीसारनाशनम् ।।[२१८]

एवमायुर्वेदस्य सूक्ष्मं ज्ञानं कवेः प्रकटितं भवति ।

### विविधम्

रत्नाकरस्य पशु-प्रवृत्तिज्ञानमपि सूक्ष्मं प्रशस्यं च । ३०।६०, ४।३२-४१,

---

२१५. अष्टाङ्गहृदयम् सूत्रस्थानम्, १३।१४, द्रव्यादिविज्ञानीयाध्यायः २६.
२१६. हर० १४।३४
२१७. तदेव २२।४३
२१८. शांर्गधरसंहिता, पु० १९५ (चौखम्बा, १९५८).

४१-३९, ४४।२७ श्लोकेभ्योऽश्वज्ञानं, ३१।८-३३,४२-३१,४४।८-१२,४४।३०-३७, श्लोकेभ्यो गजज्ञानं सूक्ष्मतया प्राप्यते। १७।२८, ३२।४८-५६ श्लोकेभ्यो माणिक्यशास्त्रस्य, राजधानीनां वर्णनेन स्थापत्यस्य, सैन्यसंरम्भ-प्रस्थान-युद्धैश्च सैन्यशास्त्रस्य, कालमुसलप्रयाणेन भूगोलस्य, २४।४५ श्लोकेन तन्त्रवर्तिकाप्रक्षेपणेन गुप्तधनपरिज्ञानस्य, १६।९ श्लोकेन विषावतारणविधेः, २७।६२ श्लोकेन च ताम्बूलरञ्जनकलायाः, २९।३६ श्लोकेन द्यूतकलायाः, १८।७० श्लोकेन कन्दुकक्रीडनकलायाश्च परिज्ञानं स्फुटं भवति। तात्कालिकीनां परम्पराणाम्, आचार-विचाराणाम्, समाजव्यवस्थायाश्चापि सुन्दरं ज्ञानमस्मान्महाकाव्याद् भवति।

अनेन संक्षिप्तविवरणेन रत्नाकरः सजीवो वाङ्मयकोष इव प्रतीयते। तस्य वैदुषी अनन्यसाधारणी। वस्तुतो रत्नाकर रत्नाकर एवास्ति।

## चतुर्थोऽध्यायः

# रत्नाकरस्य भक्ति-भावना

शुष्कं ज्ञानं न शान्तिदं भवति । तस्माज्ज्ञानिनो विद्वांसश्च भक्तिमाश्रिताः स्वभावान् अभिव्यञ्जयन्ति । विशेषतः सुरभारती-कवयः । सुरभारत्याः प्रत्येकमपि कविर्भक्ति-रसे निमग्नोऽस्ति । शृंगाररसस्यापि कवयोऽस्याःप्रभावादशून्याः सन्ति। कवीनां हृदयं भक्तिरसे निमग्नं परमानन्दमनुभवन्नन्यानपि परमेश्वरप्रीतिरसच्छटाभिरुपजीवयन्निव प्रतीयते । यत्सत्यं विनेश्वरोपासनं बुद्धौ पवित्रतायाश्चमत्कारस्य चावकाश एव नास्ति । संस्कृत-कवयः केवलं कथामात्रनिर्वाहेणैव कृतकृत्यतां न मन्यन्तेऽपित्वनुभवसिद्धमनिर्वचनीयं तत्त्वं भक्ति-रस-परिवेशे समुपस्थापयन्ति । ज्ञानकर्मकाण्डाभ्यामपि तदेव प्राप्तुं प्रयत्यते परं तौ शुष्कतयाऽऽयासकरावेव ।

रत्नाकरः परमभक्त आसीत् । तत्काव्यानुशीलनेनैतत्स्फुटं ज्ञायते यत् सः परमशैव आसीत् । परं तस्य हृदयेऽसहिष्णुताया लेशमात्रमपि नासीत् । तस्य रचनायां भगवतो विष्णोस्तदवताराणां —वराह-नृसिंह-वामन-प्रभृतीनामनेकशः सादरं स्मरणं कृतमवलोक्यते । तदीयेयमुदारता तस्य वास्तविकं भक्तस्वरूपं सम्मुखे प्रस्तौति ।

सूक्ष्मदृशावलोकनेन तदीया भक्तिभावना (१) वेदपुराणशास्त्रानुसारिणी (२) शैवदर्शनानुसारिणी विशेषतः प्रत्यभिज्ञादर्शनानुसारिणी (३) शैव-शाक्ततन्त्रानुसारिणी चास्ति । शिवस्वरूपवर्णने वेदशास्त्राणां शैवागमानां च सिद्धान्ता अनायासमेवाविर्भवन्तोऽवलोक्यन्ते । चण्डीस्तुतौ च शाक्ततन्त्राणां गभीरः प्रभावः स्फुटो भवति ।

वस्तुतो भारतीया मनीषा शिवरूपं साक्षात्कृत्यात्मानं कृतकृत्यममंसत । 'महेशान्नापरो देव' इत्येवमुद्घोषयद्भिरत्रत्यैः ऋषिभिर्विद्वद्भिर्भक्तैश्च यद्यदुक्तं तत्तद् भारतीय साहित्यस्यानुपमो निधिः । वेदादद्यावधि परम्परेयमविच्छिन्न-

तथैव चलति । वेदेषूपनिषत्सु पुराणेषु काव्येष्वाख्यानेषु सर्वत्र भगवान् भूतनाथोऽलौकिकतयैव वर्णितः ।

ऋग्वेदे तस्य विषये उद्गीर्णमस्ति :

भुवनमस्य पितरं गीर्भिराभी रुद्रं दिवा वर्धया रुद्रभक्तौ ।
वृहत्तमुष्वमजरं सुषुम्नमृधग्धुवेम कविनेषितासः ॥[१]

भुवनस्य पितरं रुद्रं वयं दिने रात्रौ च नमामो यो विशालोऽजरो ज्ञानी (ऋष्वः), प्रेरकश्चास्ति ।

अथर्ववेदे तस्य विषये प्रतिपादितमस्ति यद् यो रुद्रोऽग्नौ, जले, वनस्पतिषु आविवेश यश्चेमानि भुवनानि चकार तस्मा अग्निस्वरूपाय नमोऽस्तु :

यो अग्नौ रुद्रो यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश ।
य इमा विश्वा भूतानि चक्लृपे, तस्मै रुद्राय नमोऽस्त्वग्नये ॥[२]

श्वेताश्वतरोपनिषदि तु तस्य महिमाऽत्यन्तमलौकिकतया वर्णितः :

एको हि रुद्रो न द्वितीयाय तस्थु-
र्य इमांल्लोकानीशत ईशनीभिः ।
प्रत्यङ् जनांस्तिष्ठति संचुकोचान्तकाले,
संसृज्य विश्वा भुवनानि गोपः ॥

स सहस्राक्षः, सहस्रपात् :

विश्वतश्चक्षुरुत विश्वतोमुखो, विश्वतो बाहुरुत विश्वतस्पात् ।
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमीं जनयन् देव एकः ॥

सः काष्ठा, सः परागतिः । नान्यः पन्था विद्यतेऽयनाय :

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय ॥

तस्मापरं किंचिदपि नास्ति । स 'अणोरणीयान्, महतो महीयान्' । तेनेदं सर्वमपि चराचरं व्याप्तमस्ति :

यस्मात्परं नापरमस्ति किंचित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥

स शिवः सर्वगतोऽस्ति :

सर्वाननशिरोग्रीवः, सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान्, तस्मात् सर्वगतः शिवः ॥

---

१. ऋक् ६।४९।१०.
२. अथर्व० ७।९२।१.

सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥

स पाणि-पाद-रहितोऽपि गृहीता जवनश्चास्ति, अचक्षुः सन्नपि पश्यति, अकर्णः सन्नपि शृणोति, स सर्वं वेत्ति परं तस्य वेत्ता कश्चिन्नास्ति । स सर्वतः श्रेष्ठः, सर्वतो महानस्ति :

अपाणिपादो जवनो गृहीता, पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति, वेद्यं, न च तस्यास्ति वेत्ता, तमाहुरग्र्यं पुरुषं महान्तम् ॥

स एव घटनाघटने पटुः, त्रिकालातीतः, विश्वरूपश्चास्ति :

आदिः स संयोगनिमित्तहेतुः, परस्त्रिकालादकलोऽपि दृष्टः ।
तं विश्वरूपं भवभूतमीड्यं, देवं स्वचित्तस्थमुपास्य पूर्वम् ॥

स सर्वेषां कारणमस्ति, परं तस्य कश्चिदपि कारणं नास्ति, तत्समोऽपि कश्चिन्नास्ति, अधिकस्य तु कथैव का ? तस्य शक्तिरनन्यसाधारणी, तस्य कश्चिदप्यध्यक्षो नास्ति, तस्येदमित्थंरूपेण निश्चिता काचिन्मूर्तिर्नास्ति, न च कारणमेवास्ति । स सर्वभूतान्तरात्मा, कर्माध्यक्षः, सर्वभूताधिवासः, साक्षी चास्ति :

न तस्य कार्यं करणं च विद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
न तस्य कश्चित्पतिरस्ति लोके, न चेशिता, नैव च तस्य लिंगम् ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः, साक्षी चेताः, केवलो निर्गुणश्च ॥

स्वयं प्रकाशरूपं तं कश्चिदपि प्रकाशयितुं समर्थो नास्ति :

न तत्र सूर्यो भाति, न चन्द्रतारकम्, नेमा विद्युतो भान्ति, कुतोऽयमग्निः ?
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥

माण्डूक्योपनिषदि तत्स्वरूपविषये एवमेव प्रतिपादितम् — 'अदृष्टमव्यवहार्यमग्राह्यलक्षणमचिन्त्यव्यपदेश्यमेकात्मप्रत्ययसारं, प्रपञ्चोपशमं, शान्तं,शिवमद्वैतं चतुर्थं मन्यन्ते, स आत्मा, स विज्ञेयः ।'

तैत्तिरीयोपनिषत्तस्य वर्णनेऽसामर्थ्यं प्रकाशयति :

यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान् न विभेति कुतश्चन ॥

शिवपुराणेऽपि श्रुत्युक्तानां मन्त्राणामनुवाद एव कृतो वर्तते । तत्रत्यानां केषांचित् श्लोकानामुद्धरणमनुचितं न स्यात् :

एक एव तदा रुद्रो न द्वितीयोऽस्ति कश्चन ।
संसृज्य विश्वाभुवनं, गोप्तान्ते संचुकोच यः ।।
विश्वतश्चक्षुरेवायमुतायं विश्वतोमुखः ।
तथैव विश्वतोबाहुर्विश्वतः पादसंयुतः ।।
द्यावाभूमी च जनयन् देव एको महेश्वरः ।
स एव सर्वदेवानां प्रभवश्चोद्भवस्तथा ।।
हिरण्यगर्भं देवानां प्रथमं जनयेदयम् ।
विश्वस्मादधिको रुद्रो महर्षिरिति हि श्रुतिः ।।
वेदाहमेतं पुरुषं महान्तममृतं ध्रुवम् ।
आदित्यवर्णं तमसः परस्तात् संस्थितं प्रभुम् ।।
अस्मान्नास्ति परं किंचिदपरं परमात्मनः ।
नाणीयोऽस्ति न च ज्यायस्तेन पूर्णमिदं जगत् ।।
सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः ।।
सर्वतः पाणिपादोऽयं सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति ।।
सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ।
सर्वस्य प्रभुरीशानः सर्वस्य शरणं सुहृत् ।।
अचक्षुरपि यः पश्येदकर्णोऽपि शृणोति यः ।
सर्वं वेत्ति न वेत्तास्य तमाहुः पुरुषं परम् ।।
अणोरणीयान् महतो महीयानयमव्ययः ।
गुहायां निहितश्चापि जन्तोरस्य महेश्वरः ।।
तमक्रतुं क्रतुप्रायं महिमातिशयान्वितम् ।
धातुः प्रसादादीशानं वीतशोकः प्रपश्यति ।।
वेदाहमेनमजरं पुराणं सर्वगं विभुम् ।
निरोधं जन्मनो यस्य वदन्ति ब्रह्मवादिनः ।।[३]

एवमेव कोटिरुद्रसंहितायाः ४३ तमे अध्याये भगवतः शिवस्य स्वरूप-निरूपणं कृतमस्ति । अन्यत्रापि बहुषु स्थलेषु शिवस्य महिमाऽनन्ततया निरूपित एव । अत्र तु, प्रसङ्गवशाद् दिङ्मात्रमेवोदाहृतम् ।

महाकविषु कविकुलगुरुणा कालिदासेनापि भगवतश्चन्द्रचूडस्य स्तुतिः कृता-

---

३. शिवपुराणम्, वायु सं० पूर्वखण्डः, ६।१४–२६.

स्ति। कुमारसम्भवस्य षष्ठे सर्गे[४] सप्तर्षिभिः कृता शंकरस्तुतिराडम्बररहितापि हृदयं स्पृशति। कुमारसम्भवस्यैव पंचमे सर्गे बटुवेषधारिणः शिवस्य समक्षं पार्वत्या उक्ति-प्रत्युक्तिषु[५] शंकरस्य विषये कालिदासस्य भावाः सहृदयानाह्ला-दयन्ति। तस्येदं कथनं यत् 'न सन्ति यथार्थ्यविदः पिनाकिनः' संक्षेपतः सर्वं कथयति।

## (क) रत्नाकरोपनिबद्धा शिवस्तुति

रत्नाकरस्य समक्षं भगवतः शंकरस्य महिम्नोऽपारो राशिरासीत्। तेन स्वाप्रतिमपाण्डित्येन मण्डिताः भक्ति-भावाः स्वाराध्यदेवस्य चरणेषु समर्पिताः। वेद-पुराण-शास्त्राणां भावा अहमहमिकया तत्कृतेश्वरस्तुतावागच्छन्ति। भावमग्नः कविरीश्वरं प्रार्थयते — 'भगवन्! 'तस्य वाचकः प्रणवः' इति यदुच्यते योगि-भिस्तत्सर्वथा भवति युज्यते :

श्रुतयः पदं परममामनन्ति यं, वहुवक्त्रपादपि च योऽभिधीयते।
अभिगम्य यं पुनरुदेति नो जनः, प्रणवस्तवैव भगवन्! स वाचकः॥[६]

भवन्तं प्राप्य जीवः कदापि भ्रम-वात्याचक्रे नैव पतति :

अवितर्कमस्थितविचारगोचरं, सुखवेदनोज्झितमनस्मितान्वयम्।
अभिगम्य शंकर! समाधिमिच्छया तव जातु नैव भजते भ्रमं पुमान्॥[७]

'आवहलक्ष्म हिंकारः, प्रस्तावः परिहारकः। उद्गीथो, निधनश्चेति पंचोक्ताः सामभक्तयः' इत्याद्यनुसारं सस्वरं साम गायन् ब्रह्मा तवैव विषये तु गायति।[८]

स्फुर्टहिंक्रियादिनिधनावसानताप्रतिपन्नपञ्चविधभक्तिसौष्ठवम्।
द्रुहिणेन साम वहुवर्त्म गायता जगति त्वमेव गुणगौर! गीयसे॥

वहुविधं प्रयतन्तोऽपि सिद्धा भवद्विषये 'नेति-नेति' इत्येव कथयित्वा विरमन्ति। 'याथार्थ्यं वेद कस्तव?'

प्रथिताः परापरदृशः पुराविदः, कथयन्ति विश्वनुत! नेति-नेति यत्।
सकलैर्विनाकृतमुपाधिसाधनैः परमं तदैव तव तत्त्वमद्भुतम्॥[९]

भगवन्! भवान् 'अपाणिपादो जवनो गृहीताऽस्ति। एवं पश्यतः पुण्य-शालिनः प्रज्ञाविवेक उपावर्तते।[१०]

४. कुमार० ६.१८–२३.
५. कुमार० ५।७५–७८
६. हर० ६।२४
७ तदेव ६।२७
८. तदेव ६।३३
९ तदेव ६।३९
१०. हर० ६।४२

स एव कुशलो योऽव्ययं, सर्वजगतां विलक्षणं, सर्वातिशायिनं भवन्तं पश्यति :

इति नाथ ! सर्वजगतां विलक्षणं, वपुरद्भुतातिशयशालि बिभ्रतम् ।
अभिपश्यतः किल भवन्तमव्ययं, कुशलस्य संविदखिला विवर्तते ।।[११]

कवे र्भक्तहृदयं सर्वत्रैव स्वेष्टदेवस्य प्रतिच्छायां पश्यति । जलतरंगेषु प्रतिबिम्बितश्चन्द्रो यथा नैकरूपतां धारयति, यथावा विविधाश्रयेषु प्रतिबिम्बितः सूर्यातपो बहुरूपतां धत्तेऽथवा घटमठाद्याधारभेदेन यथाकाशमनेकरूपात्मकं भवति तथैव स ईश्वर एकः सन्नपि 'आश्रयसंक्रमाद' अनेकरूपवान् भवति :

शशिमण्डलं जलतरंगसंहृतिप्रतिबिम्बितं हर ! जलाशये यथा ।
द्रुमपल्लवोदवसितान्तराश्रयस्तपनातपो निपतितः क्षितौ यथा ।।
गगनं यथा स्थितमुलूखलादिषु स्फुटमेकमेव सकलाद्भुतस्थिति ।
प्रतिपद्यते बहुविधत्वमाश्रयप्रतिसंक्रमादविकृतस्तथा भवान् ।।[१२]

यदि तस्य कृपा भवति तर्हि किमप्यसम्भवं नास्ति :

अपि नाथ ! विध्यति मणिं निरीक्षणस्तमनङ्गुलिर्वयति बोधितस्त्वया।
प्रतिमुञ्चति स्म तमकन्धरोऽपि सन् परिपूजयत्यरसनस्तदद्भुतम् ।।[१३]

विरोधिगुणगणमण्डितस्य शिवस्य याथार्थ्यविदो जगति केऽपि न सन्ति ।

स एकरूपतां दधदप्यनेकरूपः, स्थिरोऽपि गमनशीलः, आकाशे स्थितोऽपि भूमिस्थः, सविधोऽपि विदूरः । चिदचित्स्वरूपोऽप्यचिदचित्स्वरूपः, सदसत्परो–ऽप्यसदसत्परः, उष्णे शीतः, शीते चोष्णः, एवमुभयात्मकोऽप्यनुभयात्मकः स सर्वथैवाद्भुतः :

बहुरूप एव दधदेकरूपतां स्थिरधर्मतामुपगतोऽपि गत्वरः ।
नभसि स्थितोऽप्यनतिवृत्तभूमिकः, सविधास्पदोऽपि भजसे विदूरताम् ।।
चिदचित्परोऽप्यचिदचित्परो भवन्नतदाभ एवहि तदात्मतां दधत् ।
सदसत्परोऽप्यसदसत्परस्थितिर्बहुवक्त्रपादवयवैर्विनाकृतः ।।
शिशिरः सहस्रकरमण्डलोदरे, शशिनि स्थितोऽपि दधदूष्मसम्पदम् ।
उभयात्मको निरुभयात्मकोऽथवा, गहनस्त्वमित्थमलमद्भुतायसे ।।[१४]

भगवतो विषये क इत्थङ्कारं वक्तुं शक्नोति ? 'नभः पतन्त्यात्मसमं पतत्त्रिणः'[१५] इत्यनुसारं सर्वेऽपि जीवास्तस्य विषये कल्पनां कुर्वन्ति परं स तु

---

११. तदेव ६।४३
१२. तदेव ६।४४, ४५.
१३. तदेव ६।४७
१४. हर० ६।४८–५०
१५. श्रीमद्भागवतम् ।

'तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यत':[१६] इत्यस्याः श्रुतेः साक्षान्निदर्शनम् । कविगद्गदो भूत्वा कथयति :

न गतिस्तवास्ति सुरनाथ ! नागतिर्न बहिर्न चान्तरवभाससे क्वचित् ।
द्वयवभासशून्यतथतावलम्बनः, प्रतिभासि नाननुगृहीतचेतसाम् ।।[१७]

सर्वशास्त्राणां प्रतिपाद्यो भगवान् शंकर एवेति प्रतिपादयन् कविः कथयति— 'भगवन् ! भवानेव सांख्यदर्शनस्य पुरुषः ।[१८] जडा प्रकृतिः स्वयं किमपि कर्तुमक्षमाऽस्मात् पुरुषस्तैः स्वीकृतः ।[१९] भवानद्भुतः कामी अस्ति । निष्क्रियत्वात् किमपि कर्तुमक्षमः, शरीररहितः, इन्द्रियविहीनः, रसभाववर्जितश्च भवान् प्रकृतेर्यत्कामुकत्वमाविष्करोति किं तन्न चित्रम् ?[२०] सांख्याचार्याः प्रकृति-पुरुषसाधकैर्वीतावीताख्यैर्दशहेतुभिर्भवदीयं पदमनिवृत्ति बोधयन्ति । यस्तेषां मोक्षः स त्वत्पदमेव ।[२१] योगाचार्या अपि 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः'[२२] इति कथयन्तो भवन्तमेव सूचयन्ति । 'निरतिशयं सर्वज्ञबीजम्'[२३] इति त्वत्परकमेव ।[२४] सर्वाणि शास्त्राणि भवतामेव रूपम् । वैयाकरणानां शब्दब्रह्म[२५] योगिनां परासम्पत्,[२६] जीवानां प्राणधारकाः पंच वायवो भवानेव ।[२७] नैयायिका वैशिषिकाश्च संसारममुं निरूप्यैतस्य भवत्कारणतां तथैवानुमिन्वन्ति यथा पात्राणि वीक्ष्य तत्कर्तुः कुम्भकारस्यानुमानं क्रियते ।[२८] अन्ये वेदान्तिन ऊर्णनाभस्य दृष्टान्तं ददाना भवन्तमेवाभिलक्ष्य स्व युक्तयः प्रददति ।[२९] कणभक्षजैन-दिगम्बरादय[३०] आस्तिका नास्तिकाश्च सर्वेऽपि यत्परमं पदं प्रतिपादयन्ति, तत्सर्वं भवानेव । शैवागमेषु तु भवदीयो महिमा बहुधा व्याकृत एव ।'

अट्टहासनयोपन्यासनाम्नि द्वादशे सर्गे भगवतः शंकरस्य महत्वं प्रतिपादयन् 'अट्टहासः' कथयति यदयमेव प्रभुस्तत्वचिन्तकै 'दैवम्' इति कथ्यते :

अयं प्रभुः कर्मसु दैवमानुषप्रमेदरूपेष्वविलंघ्यतां दधत् ।
अचिन्तनीयो नयतत्त्वकोविदैर्मनीषिभिर्दैवमिति स्म कथ्यते ।।[३१]

विजिगीषूणां दोर्दण्डविलसितानि, सन्धिविग्रहयानासनादीनां संयोजने पट्व्यो

---

१६. ईशावास्योपनिषद् । ५
१७. हर० ६।५२.
१८. तदेव ६।१८
१९. तदेव ६।८७.
२०. तदेव ६।१९
२१. तदेव ६।२०
२२. पातंजलयोगदर्शनम्, स० पा०, सू० २४.
२३. तदेव सू० २५.
२४. तदेव ६।२१
२५. तदेव ६।५५, ६।९२.
२६. तदेव ६।५९,६०
२७. तदेव ६।६२
२८. तदेव ६।७३,८१
२९. तदेव ६।८८, ८९
३०. तदेव ६।९७
३१. तदेव १२।६१

मतयः, तथा चान्यान्युपायजातानि भगवत्याशुतोषे प्रसन्नतामनुपगते कदाचिदपि साफल्यं न प्राप्नुवन्ति :

जिगीषतां द्रोद्रुमदर्पविभ्रमा धियश्च षाड्गुण्यविचारगोचराः ।
न यान्त्युपायप्रतिपत्तये दृढाः पराङ्मुखेऽस्मिन् फलभागितां क्वचित् ।।[३२]

यदात्वसौ भगवाननुकूलो भवति तदा विपरीतानामपि कार्याणां फलमनुकूलमेव जायते :

यदानुगुण्यं भजते जगत्यसौ, तदा तदात्वायतिषु स्फुटं नृणाम् ।
क्रियाविशेषाः सकलाः प्रवर्तिताः, विपर्ययेणापि हि सिद्धिहेतवः ।।[३३]

विलुप्तमोहानां योगिनां विज्ञानविषया अस्य भगवतश्चेष्टा, याः पृथग्जनानाम् = अज्ञानां बुद्धिविषयिण्यो न भवन्ति, कस्य विस्मयं न तन्वन्ति ?

प्रतीयमानाः प्रकटं पृथग्जनैर्विरुद्धरूपा इव कस्य विस्मयम् ?
अमुष्य चेष्टा जनयन्ति नोच्चकैर्विलुप्तमोहप्रतिपत्तिगोचराः ।।[३४]

समस्तस्यापि जगत उदय-स्थिति-संहृति-क्रमश्चास्यैवेशस्य निःश्वासरूपः सन् प्रतिबद्धवृत्तितां = पराधीनतां व्रजति :

इहैव निःश्वाससमागमक्रियाप्रबन्धभेदेन चराचरात्मनि ।
व्रजत्यभीक्ष्णं प्रतिबद्धवृत्तितामशेषविश्वोदयसंहृतिक्रमः ।।[३५]

स्वाराध्यदेवस्य वारम्वारं वर्णने कविरनुपमानन्दमनुभवति ।[३६] शास्त्रीयाः सन्दर्भाः स्वतएव एकस्यानन्तरमवतरन्तोऽवलोक्यन्ते । शिवस्वरूपवर्णने रत्नाकरस्य वैदिकं शास्त्रान्तरीयं पाण्डित्यं च स्फुटं चकास्ति । शैवागमदर्शनानां, विशेषतः प्रत्यभिज्ञादर्शनस्य भूयान् प्रभावस्तस्य भक्तिपद्धतावव्लोक्यते । इह समासतस्तत्तत्त्वमीमांसा निरूप्यते ।

## (ख) प्रत्यभिज्ञादर्शनम्

ज्ञातवस्तुनो ज्ञानं प्रत्यभिज्ञा । अयमणुर्जीवः स्वरूपं विस्मृत्य जगत्यनवरतं सञ्चरति । यदात्मचैतन्यस्फुरणे सति गुरोः कृपया स शिवरूपमात्मानमभिजानाति तदा तस्य कृतकृत्यता भवति । इयमेव प्रत्यभिज्ञा । यथा काचित् कामिनी समीपस्थमपि कान्तं न परिचिनोति परं सख्या प्रेरिता सा तं विज्ञायानन्दनिर्भरा भवति, एवमेव जीवोऽपि स्वयमात्मन्येवावस्थितं शिवं विज्ञाय कृतार्थो

---

३२. तदेव १२।६२.
३३. तदेव १२।६३
३४. तदेव १२।६४
३५. तदेव १२।६५
३६ द्रष्टव्यम्—द्वितीयसर्गे शिवस्य ताण्डववर्णनम्, एकविंशतितमे सर्गे समाधिवर्णनम्, चत्वारिंशत्तमे च सर्गे भगवतो योद्धृरूपे चित्रणम् ।

भवति ।[३७] 'त्रिकदर्शनं', 'षडर्धदर्शनं', 'स्पन्ददर्शनं' चेत्यनर्थान्तरम् । अद्वैत-प्रतिपादकत्वाच्चास्य संज्ञा 'ईश्वराद्वयवादः' 'अभेदवाद'श्चास्ति । 'त्रिक' दर्शन नाम्नोऽयमाशयो यदेतस्मिन् दर्शने पति-पशु-पाश-एतत्त्रयस्य विवेचनं कृतमस्ति । 'सिद्धा नामक-मालिन्याख्य' खण्डत्रयात्मकत्वादप्यस्य त्रैविध्यम-ङ्गीकुर्वन्ति केचित् । सिद्धातन्त्र-नामकतन्त्र-मालिनीतन्त्राणां प्रमुखतया त्रिकद-र्शनमस्य नामाभूदिति भावः । ईश्वरजीवयोरभेदप्रतिपादनाच्च 'ईश्वराद्वयवाद' इत्यस्य संज्ञा ।

द्वैतभावना न पारमार्थिकी । यथा निर्मले दर्पणे ग्राम-नगर-वृक्षादयः प्रति-विम्बितास्ततोऽभिन्नाः सन्तोऽपि भिन्नाः प्रतीयन्ते तथैव पूर्णसंविदात्मनि परमे-श्वरे प्रतिविम्बितमिदं विश्वमभिन्नमपि घटपटादिरूपेण भिन्नमिवाभाति । अयमत्र विशेषो लोके प्रतिबिम्बितं वस्तु बिम्वमाश्रितं भवति, परं प्रत्यभिज्ञादर्शने परमेश्वरस्य स्वातन्त्र्यशक्तेः विम्वं विनैव जगद्रूपस्य प्रतिविम्ब उदितो भवति । अस्माद् प्रतिविम्बापरपर्यायादाभासादस्य दर्शनस्य संज्ञा 'आभासवाद' इत्यप्य-स्ति ।[३८] 'स्वातन्त्र्यवादो'ऽप्यमेवोच्यते । अयं परिणाम-विवर्तयोः श्रेष्ठतरः ।

विश्वात्मक-विश्वोत्तीर्णरूपाभ्यां परमेश्वरः सर्वत्रानुस्यूतः । सर्वत्र व्यापक-त्वात् स विश्वात्मकः, सर्वतो बाह्यत्वाद् विश्वोत्तीर्णः । स स्वशक्त्या, विनाधारं विना वाह्योपकरणैः, जगच्चित्रमुन्मीलयति । अतएव स विलक्षणश्चित्रकारः ।[३९]

चितिः

तस्य चिच्छक्तिस्ततोऽभिन्ना सती समस्तं चक्रं संचालयति । शैवागमेषु चितिः = आत्मा महत्वपूर्णा शक्तिः । इयं हि चितिः स्वतन्त्रा विश्वसिद्धि-हेतुः ।[४०] इयं च 'स्वभित्तौ विश्वमुन्मीलयति ।[४१] इयं पञ्चकृत्यप्रवणा । पञ्चकृ-

---

३७. तैस्तैरप्युपयाचितैरुपनतस्तन्व्याः स्थितोऽप्यन्तिके,
कान्तो लोकसमान एवमपरिज्ञातो न रन्तुं यथा ।
लोकस्यैव तथानवेक्षितगुणः स्वात्मापि विश्वेश्वरो,
नैवालं निजवैभवाय तदियं तत्प्रत्यभिज्ञोदिता ॥ (ईश्वरप्रत्यभिज्ञा, ४।२।२)

३८. अन्तर्विभाति सकलं जगदात्मनीह, यद्वद् विचित्ररचना मुकुरान्तले ।
बोधः पुनर्निजविमर्शनसारयुक्त्या, विश्वं परामृशति नो मुकुरस्तथा तु ॥
:(अभिनवगुप्तः)

३९. निरुपादानसम्भारमभित्तावेव तन्वते ।
जगच्चित्रं नमस्तस्मै कलानाथाय शूलिने ॥ (आचार्य वसुगुप्तः)

४०. प्रत्यभिज्ञाहृदयम्, सूत्रम् १.

४१. तदेव, सूत्रम् २.

त्यानि च सृष्टि-स्थिति-संहृति-विलय-अनुग्रह-रूपाणि । अयं चिदात्मैव प्रतिपादयिष्यमाणे षट्त्रिंशत् सन्दोहेऽभिन्नतया स्फुरति ।[४३]

जीवः :

विश्वस्योन्मीलने शिव-शक्त्योरभेदः प्रधानं निदानम् । अयं चिदानन्देच्छाज्ञानक्रियारूपाभिः शक्तिभिर्युतोऽप्यनवच्छिन्नः प्रकाशो निजानन्दविश्रान्तः शिवरूपः सः एव स्वातन्त्र्यादात्मानं संकुचितमवभासयन् 'अणु'रित्युच्यते । शब्दान्तरेषु यदायमात्मा 'आणव-कर्म-मायीय' नामभिस्त्रिभिर्मलैराच्छन्नो भवति तदायं 'मलावृतः संसारी[४४] जीव' उच्यते । तस्याप्रतिहता इच्छा शक्तिः संकुचिता सती 'आणवं मलम्', संकुचिता ज्ञानशक्ति'र्मायीयं मलम्', संकुचिता क्रियाशक्तिश्च 'कार्ममलम्' कथ्यते । मलान्येव 'पाशाः' इत्युच्यन्ते पाशैराबद्धत्वज्जीवः'पशु' रित्यभिधीयते । पशवश्च त्रिविधाः—सकल-प्रलयाकल-विज्ञानाकलभेदात् । यत्रोपर्युक्तानां मलानां त्रयं निवसति स 'सकलः' आणव-कर्म-मलद्वययुक्तः 'प्रलयाकलः,' 'आणव' मलविशिष्टश्च 'विज्ञानाकलः' । अस्यां स्थितावागत्य शिवानुग्रहेण स स्वकीयं शुद्धं रूपमधिगच्छति । विज्ञानाकला अपि समाप्तकलुषासमाप्तकलुषभेदेन द्विधा । समाप्तकलुषा 'विद्येश्वर'-पदभाजो भवन्ति, असमाप्तकलुषाश्च 'मन्त्र'-रूपतां गच्छन्ति । 'प्रलयाकला' अपि 'पक्वमलापक्वमल'भेदेन द्विविधा भवन्ति । पक्वमला मोक्षाधिकारिणोऽपक्वमलाश्च 'पुर्यष्टक' (सूक्ष्मशरीर)-रूपेण निवसन्ति । सकला अपि 'पक्वमलापक्वमल'-रूपेण द्विविधाः । पक्वमला 'मन्त्रेश्वर'-पदभाजः, अपक्वमलाश्च भवकूपे पतन्ति ।

यदपि बन्धनकारितत्त्वं तत्'पाश'संज्ञकम् ।[४५] मल-कर्म-माया-रोधशक्तिरूपात्तेषां चतुर्विधत्वम् ।

अयं पशुः षट्कंचुकैरावृतो भवति । कंचुकाश्च षडिमे :

माया, कला, रागविद्ये, कालो नियतिरेव च ।
कंचुकानि षडुक्तानि, संविदस्तत् स्थितौ पशुः ॥[४६]

---

४२. आत्मैव सर्वभावेन स्फुरन् निर्वृतचिद्विभुः ।
अनिरुद्धेच्छाप्रसरः, प्रसरद्दृक्क्रिया शिवः ॥ (शिवदृष्टिः १।२)

४३. तन्त्रसारः, पृ० ६.

४४. चिद्वत्तच्छक्तिसंकोचान्मलावृतः संसारी । (प्रत्यभिज्ञाहृदयम्)

४५. यत्किंचित्परमाद्वैतसंवित्स्वातन्त्र्यसुन्दरात् ।
पराच्छिवादुक्तरूपादन्यत्तत्पाश उच्यते ॥ (तन्त्रा०, भागः ८, पृ०२०२)

४६. तन्त्रा० भागः ६, पृ० १६४.

अस्य जीवस्य मुक्त्यर्थम् आणव-शाक्त-शाम्भवोपाया निर्दिष्टाः । तत्र 'आणवश्चित्तविश्रान्तिरूपः' 'शाक्त'श्चित्तसम्बोधनलक्षणः, 'शाम्भवश्चित्तप्रलयरूपः ।[४७] एष्वपि शाम्भवोपाय एव मुक्तिहेतुः । तथाहि—'इत्येवं सकलपरामर्शविश्रान्तिमात्ररूपं प्रतिबिम्बितसमस्ततत्त्वभूतभुवनभेदम् आत्मानं पश्यतो निर्विकल्पकतया शाम्भवेन समावेशेन जीवन्मुक्तता ।'[४८]

जीवस्य जाग्रत-स्वप्न-सुषुप्त-तुरीय-तुर्यातीता इमाः पंचावस्था भवन्ति ।[४९] प्रमातृप्रमेयप्रमादिसापेक्षावस्था जाग्रदवस्थास्ति ।[५०] 'ज्ञानं जाग्रत्'[५१] इति हि संक्षेपतो जाग्रदवस्था-लक्षणम् । द्वितीया 'स्वप्नावस्थास्ति'। 'स्वप्नो विकल्पाः ।[५२] अस्यां ह्यवस्थायां जीवो विकल्पावस्थायामवस्थितो भवति ।[५३] प्रमाणप्रधाना चेयमवस्था । यत्र च प्रमाण-प्रमेयादिनिरपेक्षो जीवः स्वात्मनि विश्रान्तिं लभते सा हि सुषुप्तावस्था ।[५४] 'अविवेको मायासौषुप्तम् ।[५५] यदा च प्रमाता केवलं प्रमात्मकः परामर्शशक्तिप्रधानश्च सम्पद्यते सा हि तुरीयावस्था । इयं हि संवित् प्रकाशस्यावस्थां ।[५६] इयं ह्यवस्था स्व प्रकाशद्योतमानत्वाद् 'दैवी'त्युच्यते, 'विश्वै-

४७. तन्त्रसारः, पृ० १७.

४८. तदेव, पृ० १९.

४९. जाग्रत्स्वप्नः सुषुप्तं च तुर्यं च तदतीतकम् ।
इति पंच पदान्याहुरेकस्मिन् वेदके सति ॥ (तन्त्रालोकः, भागः ७, पृ० १५७)

५०. प्रमातृमेयतन्मानप्रमारूपं चतुष्टयम् ।
विश्वमेतदधिष्ठेयं यदा जाग्रत्तदा स्मृतम् ॥ (तदेव, भागः ७, पृ० १५९)

५१. शिवसूत्रविमर्शिनी, १।८.

५२. तदेव १।९.

५३. यत्वधिष्ठानकरणभावमध्यास्य वर्तते ।
वेद्ये सत्पूर्वकथितं भूतत्वाभिधायकम् ।
तत्स्वप्नो मुख्यतो ज्ञेयं तं च वैकल्पिके पथि ॥
(तन्त्रा०, भागः ७, पृ०१६७—६८)

५४. मेयमानादिक्षोभमन्तरेण प्रमातापि स्वात्ममात्रविश्रान्तो ,
भवेद्येनेयमवस्था सर्वत्र सुष्ठु सुप्तमित्युद्घोष्यते ।
(तन्त्रा०, भागः ७, पृ० १७६)

५५. शिवसूत्रविमर्शिनी, १।१०.

५६. यत्तु प्रमात्मकं रूपं प्रमातुरुपरि स्थितम् ।
पूर्णतागमनौन्मुख्यमौदासीन्यात्परिच्युतिः ।
तत्तुर्यमुच्यते शक्ति समावेशो ह्यसौ मतः ॥
सा संवित्प्रकाशा तु कैश्चिदुक्ता प्रमेयतः ।
मानान्मातुश्च भिन्नैव तदर्थं त्रितयं यतः ॥
(तन्त्रा० भागः ७, पृ० १७९–८०)

कजीवितं' च ।[५७] प्रमेयं प्रमाणे, प्रमाणं च प्रमातरि, प्रमाता चास्यां प्रमायां विश्राम्यति, अस्माद् विश्रान्तिसतत्त्वेयमुपासनीया । पंचमा हि तुरीयातीतावस्था। सा च पूर्णताया अवस्था । अत्र हि जीवः 'पूर्णानवच्छिन्नवपुरानन्दनिर्भरो' भवति । इयमेव च परमपदम् ।[५८] अनिर्वचनीयरूपत्वात् पूर्णत्वाच्चास्या विशिष्टं नाम न कृतम् ।[५९] नाम्नो निर्बन्धे सन्ति 'महाप्रचय' इति नामैवोचितं स्यात् ।[६०] अस्यामवस्थायां प्रसंख्यानबलाद् विकल्पानां निश्शेषतया समाप्तिर्भवति । इमामवस्थां प्राप्य जीवो निष्प्रपंचो, निराभासो विशुद्धः सर्वातीतगुणविशिष्टः सन् शिवत्वमधिगच्छति ।

**सृष्टिः**

प्रत्यभिज्ञादर्शने सृष्टिश्चितेर्विलासः । वेदान्ते इयं हि ब्रह्मणो विवर्तः, परमार्थतो सत्या, परं प्रत्यभिज्ञादर्शने चितेराभासः सत्यपीयं सत्येव प्रतिपादितास्ति । दर्पणे प्रतिबिम्बवदिदं जगदपि परमशिवादभिन्नमेवास्ति । शिवः समुद्र इव, तस्य तरंगा इव चेदं जगत् । अत्र हि न कार्यकारणावभासोऽप्यपित्वभेद एव । सः शिवः सर्वव्यापकः । तद्रहितं न किंचिदप्यस्ति ।[६१] प्रकाशरूपः शिवः प्रकाशरूपान् सितान् पदार्थानुद्भासयति । अस्मात्सिद्धं यन्न केवलं शिव एवापितु प्रकाश्यं जगदपि प्रकाशरूपमेवास्ति । प्रकाशनेऽसमर्थाः पदार्थाः कथमपि प्रकाशयितुं न शक्यन्ते । अश्वेतः प्रासादः श्वेतरूपे कथं प्रकाशयितुं शक्येत ?[६२] अस्मात्सिद्धं यत्प्रत्यभिज्ञादर्शनं जगतोऽभेदमीश्वरात्स्वीकरोति ।

---

५७. मेयं माने मातरि तत् सोऽपि तस्यां मितौ स्फुटम् ।
विश्राम्यतीति सैवेषा दैवी विश्वैकजीवितम् ॥
(तदेव, भागः ७, पृ० १८१)

५८. यत्तु पूर्णानवच्छिन्नवपुरानन्दनिर्भरम् ।
तुर्यातीतं तु तत्प्र ाहुस्तदेव परमं पदम् ॥
+ + +
नात्र योगस्य सद्भावो भावनादेरभावतः ।
अप्रमेये परिच्छिन्ने स्वतन्त्रे भाव्यता कुतः ?
योगाद्यभावतस्तेन नामास्मिन्नादिशत्प्रभुः । (तदेव)

५९. पूर्णत्वादेव भेदानामस्यां सम्भावना नहि ।
तन्निरासाय नैतस्यां भेद उक्तो विशेषणम् ॥ (तन्त्रा०, भागः ७, पृ० १९०)

६०. महाप्रचयमिच्छन्ति तुर्यातीतं विचक्षणाः । (मालिनी० २।३८)

६१. विषयेषु च सर्वेषु, इन्द्रियार्थेषु च स्थितः ।
यत्र-यत्र निरूप्येत, नाशिवं विद्यते क्वचित् ॥ (तन्त्रा०, भागः १, पृ० १३३)

६२. त्रयस्य हि परं तत्वं यः प्रकाशात्मकःशिवः ।
न ह्यप्रकाशरूपस्य प्राकाश्यं वस्तुतापि वा ॥

वेदान्तदर्शने माया हि 'सदसद्भ्यामनिर्वचनीया' अतएवानिश्चितस्वरूपा, परमत्र तस्या निश्चितं स्वरूपं प्राप्यते—'तदवभासकारिणी च परमेश्वरस्य माया नाम शक्तिः ।' इयं हि परमेश्वरस्य शक्तिस्तत्राभिन्नरूपेण स्थिता सती सत्स्वरूपैव ।

अयं चिद्रूपः शिव आनन्दरूपया शक्त्या मिलितः सन् सृष्टिमुत्पादयति । आनन्दकला च 'कामकला' इत्युच्यते । सैव च 'महात्रिपुरसुन्दरी' कथ्यते । तत्र कामः ईश्वरः, कला च शक्तिः । एवं 'शक्तिशक्तिमतोरभेदः' इति सिद्धान्तात् 'कामकला' ।

विश्वोत्तीर्णः, सर्वस्वतन्त्रः, देशकालाद्यनवच्छिन्नः, परमशिवः सृष्टिं चिकीर्षुर्विश्वरूपं धारयति । सृष्टिनिर्माणस्येच्छां कुर्वाणः सः 'शिव' इति कथ्यते ।

**षट्त्रिंशत्सन्दोहः**

प्रत्यभिज्ञादर्शने षट्त्रिंशत् तत्वान्यभ्युपगतानि सन्ति :

तत्त्वानि शैवान्युच्यन्ते (१) शिवः (२) शक्तिः (३) सदाशिवः ।
(४) ईश्वरो (५) विद्यया सार्धं पंचशुद्धान्यमूनि हि ॥
(६) माया (७) कालश्च (८) नियतिः (९) कला (१०)विद्या पुनः स्मृता ।
(११) रागः (१२) पुरुष एतानि शुद्धाशुद्धानि सप्त च ।
(१३)प्रकृतिः(१४)बुद्धय्(१५)हंकारौ(१६)मनो(१७-२१)ज्ञानेन्द्रियाण्यथ ।
(२२-२६)कर्मेन्द्रियाणि(२७–३१)तन्मात्राः(३२-३६)पंचभूतनिदेशिकाः ॥
एतान्याहुरशुद्धानि चतुर्विंशतिरागमे ।
शैवानामिति तत्त्वानां विभागोऽत्र प्रदर्शितः ॥

एषु तत्वेषु प्रारम्भिकानि पंच शुद्धानि, तदनन्तरं सप्त शुद्धाशुद्धानि तस्मादूर्ध्वं चतुर्विंशतिरशुद्धानि । एतेषां संक्षिप्तः परिचयो दीयते ।

(१)शिवः-सृष्टिकामनया यदा परमशिव इच्छति तदा स 'शिवतत्वम्' इति कथ्यते ।[६३] तनोति व्याप्नोति सर्वमिति व्युत्पत्या 'तत्त्वं' निष्पद्यते । ततश्च तस्य शिवस्य सर्वव्यापित्वं प्रतिपाद्यते । 'पंचत्रिंशत्तत्वी शिवनाथस्यैव शक्तिरुक्तेयम्' । स सर्वसमर्थः स्वतन्त्रश्च । तस्य च स्वातन्त्र्यम् आनन्द शक्तिः, तच्चमत्कार इच्छाशक्तिः, सर्वाकारयोगित्वं क्रियाशक्तिः । इत्येवं मुख्याभिः शक्तिभिर्युक्तोऽपि

---

न ह्यश्वेतः प्रासादः श्वेतते, न चैवं वस्तुत्वमप्यस्य स्यात् ; न हि प्रकाशरूपतामपहायान्यद्वस्तु सम्भवेदिति भावः ।

(तदेव, भागः १, पृ० ८९–९०)

६३. निजेच्छया जगत्स्रष्टुमुद्युक्तस्य महेशितुः,
प्रथमो यः परिस्पन्दः शिवतत्वं तदुच्यते ॥ (शि० पु०, कै० सं०, अध्यायः १६)

वस्तुत इच्छाज्ञानक्रियाशक्तियुक्तोऽनवच्छिन्न: प्रकाशो निजानन्दविश्रान्त: शिव-रूप: स एव स्वातन्त्र्याद् आत्मानं संकुचितमवभासयन् 'अणु' रित्युच्यते। पुनरपि च स्वात्मानं स्वतन्त्रतया प्रकाशयति येनानवच्छिन्नप्रकाशशिवरूपतयैव प्रकाशते।[६४] 'अहम्' पदवाच्योऽयं शिव: 'अस्मि' इति सम्वन्धविशेषस्यापेक्षां न करोति। अत्र इच्छाशक्ते: प्राधान्यम् - 'इच्छाशक्तिमय: शिव:।[६५] चितिरस्मादभिन्ना। एष आत्मा प्रकाशवपु:, स्वतन्त्र: शिव एव सर्वत्र स्वकीयं स्फुरणं करोति।[६६] स्वतन्त्रतया यदेच्छति तदाऽऽत्मानमुपसंहरति :

एष प्रकाशरूप आत्मा स्वच्छन्दो ढौकयति निजं रूपम्।
पुन: प्रकटयति झटिति अथ क्रमवशादेष परमार्थेन शिवरूपम्॥[६७]

(२) शक्ति :—इदं हि द्वितीयं तत्त्वं शिवादभिन्नम्। आनन्दस्यात्र प्राधान्यम्। इमाश्च शक्तय: पूर्वोक्ता: पंच। अस्य तत्त्वस्य ज्ञानम् 'इदम्' इत्याकारकं भवति। 'अहमंश:' शिवरूप:, 'इदमंश:' शक्तिरूप:। शिव: शक्त्यैव स्पन्दनं करोति। शिव-शक्त्योर्भेदस्य तु विचारोऽपि नोचित:। शिवा-शिवयोरभेदो वहुधा प्रतिपादित: सिद्धै: सुधीभिश्च :

(क) शिव: शक्त्या युक्तो यदि भवति शक्त: प्रभवितुम्।
न चेदेवं देवो न खलु कुशल: स्पन्दितुमपि॥[६८]

(ख) न शिवेन विना देवी न देव्या च विना शिव:।
नानयोरन्तरं किञ्चिच्चन्द्रचन्द्रिकयोरिव॥
न शिव: शक्तिरहितो, न शक्तिर्व्यतिरेकिणी।
शिव: शक्तस्तथा भावानिच्छया कर्तुमीहते॥
शक्ति-शक्तिमतोर्भेद: शैवे जातु न वर्ण्यते।[६९]

---

६४. आत्मा प्रकाशवपुरेष शिव: स्वतन्त्र:, स्वातन्त्र्यनर्मरभसेन निजं स्वरूपम्।
संछाद्य यत्पुनरपि प्रथयेत पूर्वम्, तच्च क्रमाकमवशादथवा त्रिभेदात्॥
(तन्त्रसार:, पृ० ६–७)

६५. काश्मीर शैविज्म, पृ० ६५.

६६. श्री मत्परमशिवस्य पुन: विश्वोत्तीर्णविश्वात्मकपरमानन्दमयप्रकाशैकघनस्यैवमेव शिवादिधरण्यन्तमखिलमभेदेनैव स्फुरति। नतु वस्तुतोऽन्यत् किंचिद् ग्राह्यं ग्राहकं वा। अपितु श्रीपरमशिवभट्टारक एवेत्थं नानावैचित्र्यसहस्रै: स्फुरतीत्यभिहितप्रायम्।
(प्रत्यभिज्ञाहृदयम्)

६७. तन्त्रसार:, पृ० ७.

६८. शंकराचार्य:, सौन्दर्यलहरी, श्लोक: १.

६९. सोमानन्द:, 'शिवदृष्टि:' ३।२, ३.

(ग) यः शिवः सैव दुर्गा स्याद् या दुर्गा शिव एव सः ।[७०]

(३) सदाशिवः – शिवशक्त्योरान्तरिक उन्मेषः 'सदाशिवो' भवति । यत्रेच्छाशक्तेः प्राधान्यम् । शिवाद् यः स्फोटरूपो ध्वनिः सर्वत्र प्रसृतो भवति, स एव नादः । नाद एव च सदाशिवः । 'अहमिदम्' इत्यनेन तस्य परामर्शो भवति । सदाशिवादेव संसारस्य सत्तास्ति । अचले परमेश्वरे स्फुरणं सदाशिवः । अस्मादेव देहोत्पत्तिः, जीवबन्धादिकं भवति । सदाशिवोऽणून् परमशिवस्यानुग्रहयोग्यतां प्रापयति । सोऽणून् यथावस्थितान् विदधाति-'यद्यथावस्थितं वस्तु तत्तथैव सदाशिवः ।'

(४) ईश्वरः – शिवशक्त्योर्बाह्य उन्मेष 'ईश्वर' इति कथ्यते । तस्मिन् ज्ञानशक्तेः प्राधान्यम् । अत्र 'इदमहम्' इति विमर्शो भवति । सदाशिवतत्त्वे 'इदम्' इत्यंशस्यानुभवो स्फुटतया भवति, परमीश्वरे इदमः = विश्वस्य ज्ञानं स्फुटतया भवति । शिवे 'अहम्' इत्यस्य विमर्शो भवति, शक्तौ 'अहमस्मि' इत्याकारको विमर्शः, सदाशिवे 'अहमिदम्,' ईश्वरे च 'इदमहम्' इतिप्रकारको विमर्शो भवति । एषु विमर्शेषु सर्वत्र पूर्वपदस्य प्राधान्यम् । अस्माद् 'इदमहम्' इत्युक्ते बाह्यजगतः प्रधानता संजायते ।

(५) सद्विद्या – समस्तानां पदार्थानां ज्ञानानन्तरं यया शक्त्याणुः परमेश्वरस्य ज्ञानं प्राप्नोति सा 'विद्या' कथ्यते । इयं हि क्रियाशक्तिप्रधाना । अत्र 'अहम्' अंशस्य, 'इदम्' अंशस्य च समानरूपेणैव प्राधान्यं भवति । 'अहमिदमस्मि' इत्याकारको विमर्शोऽस्यां भवति । सदाशिवे प्रलयस्य, ईश्वरे चोदयस्य प्राधान्यं भवति । परमस्यां प्रलयोदयौ युगपदेव निवसतः ।

इमानि पंचतत्त्वानि 'शुद्धाध्वन्' इति संज्ञया व्यवह्रियन्ते । अन्यानि शुद्धाशुद्धानि, अशुद्धानि वा इत्युक्तमेव । शिवसम्बन्धः शुद्धत्वस्य, माया-सम्बन्धश्चाशुद्धत्वस्य हेतुः ।

(६) माया – अयं हि भेदः सृष्टेः सूचकः । इयं हि शिवस्य शक्तिस्ततोऽभिन्ना सती भिन्नां सृष्टिं जनयति । 'स्वात्माभिन्नमपि भावमण्डलं शिवो यया मिमीते भिदा व्यवस्थापयतीति च माया'[७१] :

माया च नाम देवस्य शक्तिरव्यतिरेकिणी ।
भेदावभासस्वातन्त्र्यं तथाहि स तया कृतः ।।

यन्नाम निखिलजगदुल्लासनक्रीडाशालिनः परमेश्वरस्य भेदावभासने 'मीनाति

७०. कालीविलासतन्त्रः, पटलम् ६, श्लोक ६.

७१. तन्त्रालोकः ६।पृ०११६.

हिनस्तीति मायाशक्तिरुच्यते। तथाहि तत्रैवायं भेदावभासः समुल्लासितः। अतएव कारणे कार्योपचारात्सैव भेदावभास इत्युच्यते।[७२] भेदावभासादियं 'परानिशा' इत्युच्यते।[७३] इयं हि जडा, व्यापिनी, सूक्ष्मा, नित्या चास्ति।[७४] इयं हि वेदान्तवत् 'सदसद्भ्यामनिर्वचनीया' न, अपितु सदेवास्ति। अधः, ऊर्ध्वं प्रसृता चेयं स्वकीयं कौशलं प्रकटयति। वक्ष्यमाणानां कला-विद्या-राग-काल नियतीनामियमेव जननी। माया हि 'अहम्' 'इदम्' अंशं च पृथक्करोति। 'अह'मंशः पुरुषः, 'इद'मंशः प्रकृतिः। शिवं पुरुषरूपे समानेतुमियं पंचकंचु–कानां रचनां करोति।

(७) कला–सर्वकर्तृत्वसंकोचिकावृत्तिः कला। मायातः समुत्पन्ना 'किंचित्कर्तृत्वलक्षणा' इयं कला जीवे 'अहं किंचिद् वेद्मि' इत्याकारकं ज्ञानं जनयति। दीपशिखेव सा तस्मै किंचित् प्रकाशं ददाति। माया चिन्मात्राच्छिवाज्जीवस्य भेदं जनयन्ती तस्मिन् सुषुप्ततामिवाधत्ते, परं कला तत्र 'किंचित्कर्तृत्वं' जनयति :

मायातत्वात् कला जाता किंचित्कर्तृत्वलक्षणा।[७५]
माया हि चिन्मयाद्भेदं शिवाद्विदधती पशोः।
सुषुप्ततामिवाधत्ते तत एव ह्यदृक्क्रियः॥
कला हि किंचित्कर्तृत्वं सूते स्वालिंगनादणोः।
तस्याश्चाप्यणुनान्योन्यं ह्यंजने सा प्रसूयते॥[७६]

(८) विद्या – सर्वज्ञता - संकोचिका वृत्तिर्विद्या, यया जीवः किंचिज्ज्ञो भवति। इयं कलायाः कार्यं वर्तते। यथोक्तम् - 'विद्या रागोऽथ नियतिः कालश्चैतच्चतुष्टयं कला-कार्यम्'।[७७] इयं हि जीवे ऐश्वर्याभावं प्रकटीकरोति। बुद्धि-दर्पणे सुखदुःखमोहादिनानापदार्थान् प्रतिबिम्बितान् कृत्वा तेभ्यस्तं परिचाययति :

बुद्धिं पश्यति सा विद्या बुद्धिदर्पणचारिणः।
सुखादीन् प्रत्ययान् मोहप्रभृतीन् कार्यकारणे॥

---

७२. तन्त्रा०, भाग ६, पृ० ११६.
७३. गर्भीकृतानन्तमाविर्भासा सा परानिशा। (तदेव, ६।पृ० ११६)
७४. सा जडा भेदरूपत्वात् कार्यं चास्या जडं यतः।
व्यापिनी विश्वहेतुत्वात् सूक्ष्मा कार्यैककल्पनात्॥
शिवशक्त्यविनाभावान्नित्यैका मूलकारणम्॥ (तदेव, ६। पृ०११७)
७५. तन्त्रा० ६। पृ० १३५.
७६. तदेव ६। पृ० १३६.
७७. तदेव ६। पृ० १६१.

कर्मजालं च तत्रस्थं विविनक्ति निजात्मना ।।[७८]

(९) राग: - नित्यतृप्तितागुणस्य संकोचको राग: । अनेन जीवोऽनुरज्यते । कलाविद्ययोर्हि यत्किंचित् कर्तृत्वमुक्तम्, 'प्रतिनियतवस्तुपर्यवसायिता' तु पुना रागेणैव सम्भवति । 'रागोऽनुरंजयत्येनं स्वभोगेष्वशुचिष्वपि ।' चिच्छक्तिपरोऽभिलाषोऽप्यनेन जन्यते । न चायम् 'अवैराग्य'मित्यभिधातुं शक्यं, तत्रापि सूक्ष्मतया रागवासनायाः समुपलब्धेः ।[७९] तद्रागगतस्यैवायं महिमा यद्बुद्धाववैराग्यादीनां सर्वेषामेव धर्माणां बहिष्पर्यन्ततया विशेषेणोल्लास इति । तदुक्तम् —'धर्मादयोऽप्यभिष्वङ्गवासनाया एव पल्लवा इति समस्तोऽयं रागवर्गः । ते तु विशेषोल्लासात्मनो बुद्धिधर्मत्वेन गणिताः ।' एवं द्वेष्योऽप्यस्यैव प्रसरस्तत्राप्यनिष्टप्रहाणादावभिष्वङ्गस्यैव सम्भवात् । तस्माद्यत्र क्वचनोपादेये हेये वा 'किंचिन्मे भूयाद्' इति सामान्येनाभिष्वङ्गमात्रं रागतत्त्वम्, अन्यस्तु पुनस्तस्यैव प्रपंचः ।'[८०]

(१०) काल: – नित्यत्व–संकोचकः कालः । अस्याप्युत्पत्तिः कलातो भवति । इदं हि तत्त्वं जीवात्मनि परिमितप्रमातृभावत्वमापादयति । कार्यावच्छेदकं तत्त्वमिदम् । निमेष-मुहूर्त-घटिकादीनां परिज्ञानमनेनैव सम्भवति ।

कालस्त्रुट्यादिभिश्चैतत् कर्तृत्वं कलयत्यतः ।
कार्यावच्छेदि कर्तृत्वं कालोऽवश्यं कलयिष्यति ।।[८१]

(११) नियति: - कलातः समुत्पन्ना नियतिर्नियमनं करोति । तत्तत्कार्येषु प्रवृत्तो जनस्तत्तदुपयोगि पदार्थमेव गृह्णाति, न चानुपयोगि । 'किं च तं प्रेरयति ? 'कुतः पुनरयं नियमो यत्कार्यार्थी वह्निमेवादित्सति, न लोष्टं, स्वर्गार्थी च ज्योतिष्टोममेव, न श्येनम् ? इति तदवश्यमत्र केनचिन्निमित्तेन भाव्यम्' । तच्च निमितं 'नियति' रेव । नियतिर्विशिष्टेषु कार्येषु योजनां धत्ते—'नियतियोंजनं धत्ते विशिष्टे कार्यमण्डले ।'[८२] सैव योजनां करोति, सैवोपयोगि वस्तु समानीय घटयति । तथा चोक्तम् :

---

७८. तदेव ६। पृ० १५०.

७९. किंचित्तु कुरुते तस्मान्नूनमस्त्यपरं तु तत् ।
रागतत्वमिति प्रोक्तं यत्तत्रैवोपरंजकम् ।।
न चावैराग्यमात्रं तत् तत्राप्यासक्तवृत्तितः ।
विरक्तावपि तृप्तस्य सूक्ष्मरागव्यवस्थितेः ।। (तन्त्रा० ६। पृ० १५७)

८०. तदेव ६। पृ० १५८.

८१. तदेव ६। पृ० १५९.

८२. तदेव ६। पृ० १६०.

नियतिर्योजयत्येनं स्वके कर्मणि पुद्गलम् ।[८३]

माया - कला-राग-विद्या-कला-नियतीनां-षण्णां समवायः 'कंचुकम्' इत्यभिधीयते ।[८४] अनेन कंचुकेनावृतो जीवोऽणुरित्युच्यते ।

(१२) पुरुषः—अयमेव चाणुः 'पुरुष' इत्युच्यते । पुमान्, अणुः, पुद्गलम्, प्रमातेत्यनर्थान्तरम् । स चेशानुग्रहेण गुरुकृपया च स्वरूपस्य प्रत्यभिज्ञानं कर्तुं-शक्तः । अनुपाय-शाम्भवोपाय-शाक्तोपाय-आणवोपायास्तस्य पूर्वसंवित्प्रत्यावर्तनस्य हेतवः । मोक्षो हि पूर्वसंविदतिरिक्तं न किमप्यन्यत् ? यथा चोक्तम् :

मोक्षो हि नाम नैवान्यः स्वरूपप्रथनं हि सः ।
स्वरूपं चात्मनः संवित् नान्यत् –॥[८५]

'स्वशक्त्यभिव्यक्ततैव मोक्षः' :

मोक्षस्य नैव किंचिद् धामास्ति, न चापि गमनमन्यत्र ।
अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः ॥[८६]

सांख्यवत्प्रत्यभिज्ञायामपि पुरुषबहुत्वमुररीकृतम् परं सांख्ये पुरुषस्य स्वातन्त्र्यं वर्तते प्रत्यभिज्ञायां च स चितेरेव स्फुरणम् ।

(१३) प्रकृतिः—सांख्यानुसारं प्रत्यभिज्ञादर्शनेऽपि सत्वरजस्तमसां साम्यावस्था प्रकृतिरित्युक्ता । तस्यां परमेश्वरस्येच्छयैव स्फुरणं भवति । तदनन्तरञ्च तत्त्वान्तराणां प्रादुर्भावो भवति ।

(१४–३६) सांख्यदर्शनानुसारीण्यन्यानि तत्त्वानि । तद्यथा— अन्तःकरणत्रयम्, ज्ञानेन्द्रियपंचकम्, कर्मेन्द्रियपञ्चकम्, पंचतन्मात्राः, पंचमहाभूताश्चेमे मिलित्वा त्रयोविंशतितत्त्वानि भवन्ति । त्रयोदश च प्रकृतिं यावद् विवेचितानि । एवं षट्त्रिंशत् सन्दोहः स्पष्टः ।[८७]

संक्षेपत इमानि षट्त्रिंशत् तत्त्वानि भागत्रये विभाजयितुं शक्यन्ते - (१) शिवतत्वम् (२) विद्यातत्वम् (३) आत्मतत्वं च । शिवतत्वे (१) शिवः शक्तिश्चागच्छतः, विद्यातत्वे—त्रीणि (१) सदाशिवः (२) ईश्वरः(३) सद्विद्या समागच्छन्ति, आत्मत्वेऽन्यान्यवशिष्टान्येकत्रिंशत्तत्वानि समायान्ति । सृष्टिं

८३. मालिनी० १।२९

८४. माया, कला, रागविद्ये, कालो नियतिरेव च ।
कंचुकानि षडुक्तानि, संविदस्ततस्थितौ पशुः ॥ (तन्त्रा० ६। पृ० १६४)

८५. तदेव, भागः १, पृ०१९२.

८६. परमार्थसारः, का० ६.

८७. द्रष्ट०—'कामायनी में काव्य, संस्कृति और दर्शन':
डा० द्वारकाप्रसाद सक्सेना, पृ० ३८३–४०२.

चिकीर्षुः शिवः[८८] शक्त्या[८९] युक्तः सक्रियो भवति। शिव-शक्त्योरान्तर उन्मेषः 'सदाशिवः'[९०] बाह्योन्मेषश्च 'ईश्वरः'[९१] इति कथ्यते। सद्विद्यायां[९२] शिवः सर्वमपि जगत् स्ववैभवं मनुते। अस्मात् स्थानादेव मायायाः[९३] कार्यं प्रारभते। इयम् 'अहमंशं' पुरुषरूपे, 'इदमंशं' च प्रकृतिरूपे परिणमयति। शिवं 'पुरुष'-रूपे समानेतुं माया कला-विद्या राग-काल-नियत्याख्यानां पंचकचुकानां रचनां करोति। 'कला'[९४] जीवस्य सर्वकर्तृत्वशक्तिमपहन्ति, येन सः किंचित्कर्तृत्वयुक्तः संजायते। सर्वज्ञता संकोचिका 'विद्या'[९५] यया जीवः किंचिज्ज्ञो भवति। नित्यतृप्तिसंकोचको 'रागः'[९६], येनाणुरतृप्तः सन् विषयेषु रागं करोति। नित्यत्वसंकोचकः 'कालः'[९७] येन स आत्मानमनित्यं मन्यते। नियमहेतु'नियतिः'[९८], यया स

---

८८. यदयमुत्तरमूर्तिर्निजेच्छयाखिलमिदं जगत् स्रष्टुम्।
पस्पन्दे सस्पन्दः प्रथमः शिवतत्वमुच्यते तज्ज्ञैः॥
(राजानकानन्दाचार्यः, षट्त्रिंशत्सन्दोहः, १)

८९. इच्छा सैव स्वच्छा सन्ततसगवायिनी सती शक्तिः।
स चराचरस्य जगतो वीजं निखिलस्य निलीनस्य॥ (तदेव २)

९०. स्वेच्छाशक्त्युद्गीर्णं जगदात्मतया समाच्छाद्य।
निवसन् स एव निखिलानुग्रहनिरतः सदा शिवोऽभिहितः॥ (तदेव ३)
अहन्ताच्छादितमस्फुटेदन्तामयं यादृशं परावररूपं विश्वं ग्राह्यम्। (प्रत्यभिज्ञाहृदयम्)

९१. शिवं पश्चात् पश्यन् इदन्तया निखिलमीश्वरो जातः। (षट्० ४)
ईश्वरो वहिरुन्मेषो निर्मेषोऽन्तः सदाशिवः। (प्रत्यभिज्ञाहृदयम्)

९२. सा भवति शुद्धविद्या येदन्ताहन्तयोरभेदमतिः। (षट्० ४)
सामानाधिकरण्यं च सद्विद्याऽहमिदंधियोः। (ईश्वरप्रत्यभिज्ञा० ३।१।३)

९३. माया विभेदवुद्धिर्निजांशजातेषु निखिलजीवेषु।
नित्यं तस्य निरंकुशविभवं वेलेव वारिधे रुन्धे॥ (षट्० ५)

९४. तत्सर्वकर्तृता सा संकुचिता कतिपयार्थमात्रपरा।
किंचित् कर्तारममुं कलयन्ती कीर्त्यते कला नाम॥

९५. सर्वज्ञतास्य शक्तिः परिमिततनुरल्पवेद्यमात्रपरा।
ज्ञानमुत्पादयन्ती विद्येति निगद्यते वुधैराद्यैः॥

९६. नित्यपरिपूर्णतृप्तिः शक्ति स्तस्यैव परिमिता तु सती।
भोगेषु रंजयन्ती, सततममुं रागतत्वतां याता॥

९७. या नित्यतास्य शक्तिर्निष्कृष्य निधनोदयप्रदानेन।
नियतपरिच्छेदकरी क्लृप्ता स्यात् कालतत्वरूपेण॥

९८. यास्य स्वतन्त्राख्या शक्तिः संकोचशालिनी सैव।
कृत्याकृत्येष्ववशं नियतं नियमत्यमुं नियतिः॥

नियतः सन् कार्याणि करोति। कंचुकावच्छिन्नो जीवः पुरुषः, स एव 'पशु-'[९९] रित्यभिधीयते, स च प्रकृतिः[१००] –बद्धो भ्रमति। आणवशक्ति-शाम्भवादि-भिरुपायैर्गुरुकृपया 'अहं महेश्वर' इत्याकारिकां प्रत्यभिज्ञां करोति। इयं प्रत्यभिज्ञैव शिवत्वलाभे हेतुः।

सारांशोऽयं वर्तते यत्प्रत्यभिज्ञादर्शनम् आत्मानं विस्मृत्य स्थितस्याणोः स्व-रूपप्रत्यभिज्ञानार्थं भूमिकां प्रस्तौति। शांकरवेदान्ते यदुद्देश्यं वर्तते, 'अहं ब्रह्मा-स्मि', तदेवास्य शिवाद्वयवादस्यास्ति, 'शिवोऽहम्' इति। शांकरवेदान्तादस्मिन् दर्शने भेदोऽयमस्ति यत्तत्रात्मनि कर्तृत्वं नास्ति, अत्र त्वस्ति। माया च तत्र 'सदसद्विलक्षणा' परमत्र निश्चितरूपा। 'ब्रह्म सत्यं जगन्मिथ्या' इति शांकर-वेदान्ते प्रतिपादितमस्ति, परमत्र संसारो नैव मिथ्यास्ति, तस्य शिवरूपत्वात्। शांकरवेदान्तेऽद्वैतस्य चरमावस्थायां भक्तेः स्थानं नास्ति, परमत्र ज्ञानभक्त्योर्-मञ्जुलः समन्वयः। इयं ह्यद्वैतभक्तिर्नित्यसिद्धः पदार्थः। ज्ञानात् पूर्वं, द्वैतं मोहहेतुः, परं ज्ञाने जाते तस्य द्वैतस्य योजना यदि भक्त्यर्थं क्रियते तर्हीदं द्वैतमद्वैतादपि सुन्दरं भवति।[१०१] इदमेव 'सामरस्यं,' यच्च प्राप्तव्यप्राप्तिः :

द्वैतं मोहाय बोधात् प्राक्, प्राप्ते बोधे मनीषया।
भक्त्यर्थं कल्पितं द्वैतमद्वैतादपि सुन्दरम्॥
जाते समरसानन्दे द्वैतमप्यमृतोपमम्।
मित्रयोरिव दम्पत्योर्जीवात्मपरमात्मनोः॥[१०२]

इदमुल्लासमयं दर्शनं 'प्रत्यभिज्ञादर्शनम्' इति कथ्यते।

## (ग) रत्नाकरस्य भक्ति-पद्धतौ प्रत्यभिज्ञा-सिद्धान्ताः

प्रत्यभिज्ञादर्शनस्य सिद्धान्ता हरविजये यत्र-तत्र, विशेषतः षष्ठे सर्गे प्राप्यन्ते। तत्र ऋतवः कथयन्ति — अयमणुर्निरावरणचित्स्वरूपताम्=देशकालादि-भिरविच्छिन्नं संविदात्मकतत्वम्, निश्चिततया धारयन्तं, तर्कातीतम्, अमृत-

---

९९. पश्यनात् पाशनाञ्च पशवः।
पाशा नाम कार्यकारणाख्याः कलाः।
ताभिः पाशिता बद्धाः सन्निरुद्धाः
शब्दादिविषयपरवशा भूत्वावतिष्ठन्ते! (कौण्डिन्यभाष्यम्, पृ० ५)

१००. इच्छादि त्रिसमष्टिः शक्तिः शान्तास्य संकुचद्रूपा।
संकलितेच्छाद्यात्मकसत्वादिकसाम्यरूपिणी तु सती
बुद्ध्यादिसामरस्यस्वरूपचित्तात्मिका मता प्रकृतिः॥ (षट्त्रिंशत्सन्दोहः, ८–१४)

१०१. द्रष्ट०:–'भारतीय दर्शन' : बलदेव उपाध्यायः, पृ० ५९०–९७.

१०२. बोधसारः, श्री नरहरिः, २००–२०१.

स्वरूपं, हृत्कुहरस्थं, गौणगाहनिकगौहमौलताप्रतिपन्नभिन्ननिजशक्तिविग्रहम् ='गौणं गाहनिकं गौहं मौलं वा विग्रहं विना। शक्तिभेदो परस्त्वत्तः स्वाधिकारं करोति कः ?' इति वचनाद्, गुणेषु भवो गौणः = ब्रह्मादीनां विग्रहः, गहनं प्रयोजनं यस्य स गाहनिकः, गौहो मायीयः, मौलश्च मूलकारणात्प्रवृत्तो मेघरुद्रादीनां गणनायकानां तद्रूपतया प्रतिपन्नत्वाद् भिन्नोऽन्य एव शक्तिरूपो विग्रहो यस्य तम्, सकलं सन्तमपि कलाविरहितमिति विरोधः, 'कला' ख्यतत्वरहितमित्यविरोधः। कलाया मायाजन्यत्वात्। प्लवोज्झितं = गतिरहितम्, निरुपप्लवमुपप्लवरहितम्, तथापि बहिरुपप्लवस्थितिम् = उपप्लवाद् बहिर्भूता गतिर्यस्य तम्, षट्परिमाणस्य तत्वादेरुपरि स्थितं, विश्वातीतं, शान्तं, सहजाहार्यभेदेन द्विविधं प्रतिभातत्वमतिक्रम्य स्थितं, मेयत्वादिपरिमाणरहितं, धर्मस्वरूपं, अनिर्वचनीयम्, अणुरूपेण सन्तमप्यणनुम् = स्थूलम् आदिदेवम् 'यो विश्वचक्षुरुतविश्वतोमुखो विश्वतो हस्त उत विश्वतस्पात्' इति श्रुत्युक्तेः सर्वतोमुखमूर्धपाणिचरणेक्षणं, निरुपप्लवस्थितिभिः दृढस्थितिभिर्निजैरंगैर्दीपितपंचमुखमयः शरीरग्रहो यस्य तं सकलप्रमाणातीतं भगवन्तं प्राप्य परमां शान्तिमधिगच्छति। तदास्याष्टौ बन्धा विगलिताः संजायन्ते। अष्टौ बन्धाश्चेमे भवन्ति—(१)प्राकृतः (२)वैकृतः (३)आहंकारिकः (४) सात्त्विकः (५) राजसः (६) तामसः (७) धर्मात्मकः (८) अधर्मात्मकः। तथा चोक्तम्—"प्राकृतो वैकृतश्चापि, आहंकारिक एव च। सात्त्विको राजसश्चैव तामसश्चापरः स्मृतः। धर्माधर्मात्मकश्चेति पशोर्बन्धाष्टकं भवेत्।'

दधतं निरावरणचित्स्वरूपतां ध्रुवमप्रतर्क्यममृतं गुहाशये।
स्थिरगौणगाहनिकगौहमौलताप्रतिपन्नभिन्ननिजशक्तिविग्रहम् ॥
सकलं कलाविरहितं, प्लवोज्झितं निरुपप्लवं, बहिरुपप्लवस्थितिम्।
स्थितमध्वनः षडवधेरुपर्यतो व्यतिवृत्तशान्तमनघं शिवं परम् ॥
प्रतिभाद्वयातिगममेयतादिकस्फुटधर्मयोगमनुपाख्यतां गतम्।
अणुमादिदेवमनणुं च सर्वतोमुखमूर्धपाणिचरणेक्षणं विभुम् ॥
निरुपप्लवस्थितिनिजाङ्गदीपितस्थिरपंचवक्त्रमयविग्रहग्रहम्।
सकलप्रमाणविषयातिगस्थितिप्रतिपत्तिशून्यगहनात्मतां गतम् ॥
प्रतिपद्य शंकर! भवन्तमव्ययं, सुखदुःखमोहपरिहीणचेतनः।
व्यतिवृत्ततन्तुमयबन्धनाष्टको भगवन्! भवानिव भवत्यणुः ॥[१०३]

१०३. हर० ६।१६६-७०

यथा वटपत्रं हरीतिमानमपहाय पीततां बिभर्ति तथैव, भगवन् ! भवच्छासने स्थितः पशुः पशुतामपहाय शिवतामुपैति :

अपहाय यत्तदिह नाथ ! नीलतां वटपादपच्छद उपैति पीतताम् ।
पशुतामपोज्झ्य तव शासने स्थितः, सुरतां सुरेश ! किल तद्वदेत्यणुः ।।[१०४]

उपसंहितात्मविभवः=उपसंहितोऽर्पितस्त्वयात्मानुग्रहो यस्य सः प्राप्तभवदनुग्रह इत्यर्थः, कृतकृत्यतामुपगतः, जन्मबन्धविनिर्मुक्तः, विधिः - क्रिया-कला-योग-शिवेति पंचपदार्थान्निरूपयन् पशुरपि पतितामुपगच्छतीत्यहो आश्चर्यम् !

उपसंहितात्मविभवस्त्वया पुमान्, कृतकृत्यतोज्झितभवाभवक्रमः ।
स्थितिमान्निरूपितपदार्थपंचकः, सदृशत्वमेति तव पत्युरद्भुतम् ।।[१०४*]

भवत एव परापरभेदेन द्विविधा शक्तिरणूनामुज्जिघृक्षयाऽनारतं प्रवर्तते :

अणुमण्डलीमनुजिघृक्षतो विभोस्तरणेरिवाकलुषतां प्रभा गता ।
शिवशक्तिरीश भवतः प्रवर्तते द्विविधा परापरविभेदवर्तिनी ।।[१०५]

प्रतिपन्नपुद्गलविभक्तवैभवात् = प्रतिपन्नेषु कृपापात्रेषु पुद्गलेषु = जीवेषु विभक्तं वैभवं येन तस्माद् भवतः शक्त्युपकृतैकचित्तताम् = ज्ञानादिभिरुपकृतां स्थिरचित्ततामधिगम्य चतुर्थगोचरगतीः = धर्मज्ञानवैराग्यैश्वर्याणि चत्वारि विषयभूतानि गच्छति :

भवतो भवोद्भव ! भवाभवस्थितेः, प्रतिपन्नपुद्गलविभक्तवैभवात् ।
अभिगम्य शक्त्युपकृतैकचित्ततां चतुरर्थगोचरगतिर्भवत्यणुः ।।[१०६]

कलया, विद्यया, रागेण च रंजितमना अयमणुर्भवदिच्छयैव प्रकृतिभोगभाग्भवति । भवानेव च कंचुकत्रितयाविद्धान् पुद्गलान् अवदातताम्=विशुद्धतां नयति । भवानेव 'कंचुकत्रितयाविद्धः, कालेन कलितस्तथा । नियत्यालिंगितश्चेति पंचधर्मा पशुः स्मृतः' इति शास्त्रानुसारं कंचुकत्रितयाविद्धान्, पंचधर्मणः पशून्, ये विषयघासग्रासाभिलाषिणोऽधोमुखाश्च भवन्ति, स्वानुग्रहान्मोचयति :

कलया किलोद्दलितचेतनस्थिति प्रतिपद्यमानविषयश्च विद्यया ।
दृढरागरंजितमना भवत्ययं भवदिच्छया प्रकृतिभोगभागणुः ।।
त्रिविधेन कंचुकमलेन रूषितान् गहनोपभोगकुहरातिपातिनः ।
अपकृष्य पुद्गलगणान् गुहाबिलादवदाततां नयसि दूरमिच्छया ।।

---

१०४. तदेव ६।१६१
१०४*. तदेव ६।१४७
१०५. तदेव ६।१४८.
१०६. हर० ६।१४६

अवशान् मनोविषयशष्पमण्डलीमभिलाषुकांश्चिरमधोमुखस्थितीन् ।
त्वमनुग्रहोन्मथितपाशसंचयान्, न पशून् प्रमोचयसि पंचधर्मणः ।।[१०७]

तावकी शक्तिरेवाणुं नियन्त्रयति, यया च स निर्धारितान्मार्गादन्यद्भोक्तुं क्षमो नैव जाग्रते :

अपि पद्धतेरभिविधौ व्यवस्थितः पुरुषोऽणुरेष दृढपाशरूपया ।
परतो नु भोक्तुमलमात्मगोचरात्तव नाथ ! शक्तिकलया नियोजितः ।।[१०८]

सुखसंवृत्तिमयैरमृतजलैः प्रक्षाल्यमाणस्य पशोर्मायीयादयो मला भवदिच्छयैवापसार्यन्ते :

सुखवेदनामृततरंगिणीजलैरभिषिच्यमानवपुषस्तवेच्छया ।
विनिवृत्तिमश्नुवत एव सर्वतो भव ! केतनत्वसमवायिनो मलाः ।।[१०९]

भवतां कृपया प्राप्तविभवाः पशवः स्वर्गादिष्वप्युपपत्तिधामसु=जन्मस्थानेषु कर्मफलभोक्तारो न भवन्ति । यतो हि ते भवत्कृपयैव मुक्ताः संजायन्ते :

प्रतिपन्नशाक्तविभवाः प्रसादिना भवता चिरादनुगृहीतचिद्दृशः ।
उपपत्तिधामसु न तेषु तेष्वमी भगवन् ! भवन्ति फलभोगिनोऽणवः ।।[११०]

क्षितिजलपवनहुताशनसोमसूर्ययजमानाकाशाख्याभिरष्टाभिमूर्तिभिर्जगदवष्टभ्य स्थितस्याऽस्य भगवतः स्मृतिरेव मायीयम्, आणवं, कार्मणं च बन्धनं प्रागेव विधूनयति ! यदा स्वयंभुवोऽस्य ज्ञानरूपा शक्तिर्मायया कृतमवभासं छिन्दति तदाणवः प्लवानुप्लवयोः=सृष्टिसंहारयोर्बोधेन रहिताः सन्तोऽस्मिन्नेव निविशन्ते :

अमीक्ष्णमष्टाभिरमुष्य मूर्तिभिर्विभोरवष्टभ्य जगन्ति तस्थुषः ।
भिनत्ति मायीयमथाणवं नृणां स्मृतिस्तदा कार्मणपाशबन्धनम् ।।
स्थिरप्लवानुप्लवविप्लवोज्झिता निजेऽत्र तिष्ठन्त्यणवस्तदात्मनि ।
दुरन्तमायीयविवर्तभेदिनी यदास्य शक्तिः स्वभुवो विजृम्भते ।।[१११]

षट्त्रिंशत्तत्वानि निश्चितवती अस्यामलीमसा=निर्मला शेमुषी=बुद्धिरेव समस्तमपि कार्यजातं सम्पादयितुं क्षमास्ति ।

अमुष्य तत्वान्यखिलानि शेमुषी, निशेमुषी प्रस्तुतकार्यनिर्णयन् ।
विधातुमर्हत्यमलीमसाधुना मुधा किमाध्वे गुरुमोहविप्लुताः ।।[११२]

---

१०७. तदेव ६।१२६, २७, २८.

१०८. तदेव ६।१३०

१०९. तदेव ६।१३२

११०. हर० ६।१३३

१११ तदेव १२।६७–६८

११२. तदेव १२।६९

साधनानन्तरं यदा 'धर्ममेघ' – समाधिरूपे भवति हृत्कुहरेऽमृतं वर्षति सति स्वच्छा या ज्ञानात्मिका शक्तिः सैव शुक्तिस्तया कृतसंस्कारोऽणुविन्दुः शुद्धमुक्ताफलत्वमेति । मुक्तिरेव प्रयोजनं यस्य तन्मौक्तिकम् । एवं भवदनुग्रहेण जीवः स्वच्छत्वविशिष्टमौक्तिकं भवति :

त्वयि नाथ ! धर्मजलदत्वमीयुषि स्रवति प्रकाममममृतं गुहाशये ।
स्फुटशक्तिशुक्तिकृतसंस्कृतिः क्रमादणुविन्दुरेति शुचिमौक्तिकात्मताम् । [113]

विषयव्यावृत्तैः शान्तैरिन्द्रियै र्भवन्तं साक्षात्कृत्याखिलवस्तुतत्वद्रष्टा भवतीत्याश्चर्यम् !

उपसंहृतान्यविषयान्युपप्लुतस्तिमितान्तरात्मकरणोदितस्थितिः ।
मतिमान् भवन्तमवलोक्य केवलं सकलार्थदृग् भवति यत्तदद्भुतम् ।। [114]

भव–बन्धन–विनाशिनो भवतः शक्तिरेवाणुसम्बद्धां मलवासनां दूरीकर्तुं क्षमा :

स्मृतिलेशतोऽपि भवबन्धनच्छिदः स्फुटताप्रवृत्तिमिव नाथ ! कालिकाम् ।
व्यपनेतुमात्मपरमाणुसंश्रयां तव शक्तिरेव मलवासनां क्षमा ।। [115]

यथा ताम्रं रासायनिकप्रक्रियया स्वर्णतां प्राप्तं सत्पुनस्ताम्रतां नाधिगच्छति तथैव शिवतां प्राप्तो जीवः पुनः पशुतां न प्राप्नोति । यथा चोक्तम् :

रसघृष्टं यथा ताम्रं न भूयस्ताम्रतां व्रजेत् ।
एवं युक्तः शिवत्वेन न भूयः पशुतां व्रजेत् ।।

परिमृष्टकालिकमवाप्य हेमतां न यथैति ताम्रमिह ताम्रतां पुनः ।
विमलीकृतं सदणुतत्त्वमिच्छया तव नाथ ! नर्च्छति तथा स्ववासनाम् ।। [116]

प्रकृतिः, कूपवत्, पुरुषो घटवत्, प्रणवश्च रज्जुवद् अस्ति । तत्र भवाँस्तमणु विनेन्द्रियव्यापारमुपर्याकर्षयसि । यस्तु कूपाज्जलमुद्धरति स त्विन्द्रियव्यापारैः साकं, परं भवान् करणप्रपंचरहित एवाणुमुद्धरसीत्यहो आश्चर्यम्, कृपालुता भवदीया :

प्रकृतिः, पुमान्, प्रणव इत्यमी त्रयः, सुरनाथ ! कूपघटरज्जुवत् स्थिताः ।
अपकर्षसि त्वमुपरि स्थितो दृढं, करणप्रपञ्चरहितोऽणुमद्भुतम् ।। [117]

---

११३. तदेव ६।१४३.
११४. हर० ६।१३५
११५. तदेव ६।१३६
११६. तदेव ६।१३७
११७. तदेव ६।१३८

एवमेव प्रत्यभिज्ञादर्शनस्य सिद्धान्तानुसारं तात्त्विक प्रतिपादनमनेकस्थलेषु प्राप्यते पशु-पाश-पतीनां सम्यङ् निरूपणं,[११८] भेदाभेदसम्बन्धस्थापनम्,[११९] पञ्च-कृत्यतावर्णनम्,[१२०] चितिशक्तेः कर्तृत्वम्,[१२१] संवित्तत्वमहत्वम्,[१२२] नादस्याभि-व्यक्तिः,[१२३] भगवदाननाच्छास्त्राणां मातृकानां चागमः[१२४] — सर्वमपीदमन्यच्च प्रत्यभिज्ञाविषयकं रहस्यं काव्येऽस्मिन् स्फुटतया चकास्ति। वस्तुत एतादृशं रहस्यं, कवितायाः परिवेशे समाविष्टमन्यत्र दुर्लभमेव प्रतीयते।

## (ख) हरि-हरियोरभेदः

हरि–हरयोः कश्चिद् भेदो नास्ति, रत्नाकरोऽनेन तथ्येन सुपरिचित आसीद् अतएव तेन हरेण साकं हरेरपि सश्रद्धं स्मरणं कृतं वर्तते। वस्तुतो ये तत्त्वविदो भवन्ति ते हरि–हरयोभेदबुद्धिं न निदधति :

हरिहरयोः प्रकृतिरेका प्रत्ययभेदेन रूपभेदोऽयम्।
एकस्यैव नटस्यानेकविधाभूमिकाभेदात्॥

हरि–हरयोः प्रकृतिः 'हृ' धातुस्तु समानैव, केवलं प्रत्यय एव भेदः। परमार्थतोऽभिन्नं हरिहरतत्वं जनोऽन्यथा विशंकते।

११८. अनघस्वशक्तिविभवव्यवस्थितेः पशुपाशमण्डलविलक्षणात्मकः।
भुवनाधिनाथ ! भवतः प्रवर्तते चिदचित्स्वभावमिह, भावमण्डलम्॥
(तदेव ६।७६)

११९. अवरुणगाढतिमिरान्मरीचिभियुंगपद्विचेतनचितः पृथग्विधाः।
ज्वलतः कणा इव विभो ! विभावसोर्भवतः पदार्थनिवहा विनिर्ययुः॥
(तदेव ६।७७)

१२०. त्वमधिष्ठिताविकलशक्तिमण्डलः, सकलं जगत् सृजसि पासि, हंसि च।
स्थिरपंचमन्त्रमयविग्रहस्थितिर्जनमद्वयेन भगवन् विनाकृतः॥ (६।७९)

१२१. निजकार्यचक्रघटने ह्यचेतनं प्रतिपद्यते किमिव वस्तु कर्तृताम् ?
कथयन्त्यतः प्रभवहेतुमीश्वरं भविनां भवन्तमिह चित्क्रियात्मकम्॥ (६।८७)
चितिशक्तितामविकलार्थवित्तया सकलार्थकारकतया च कर्तृताम्।
अणुमण्डलस्य भवतानुगृह्णता क्रियते सुरेश ! सदृशत्वमात्मनः॥ (६।१०९)

१२२. समयान्तरेऽप्यघटमानकल्पनात्त्रयबाह्यवस्तुविषयावमर्दिनः।
अपरे विशारदधियो जगत्स्थितिं सुरनाथ ! संविदमुशन्ति केवलम्॥ (६।९३)

१२३. भवतोऽव्ययात्सदसदात्मनः पुरा निरियाय यत्किल निनादरूपभाक्।
दधदीश ! शास्त्रमनघं सदाशिवो बुबुधेऽर्थतत्वमखिलं तदाश्रयम्॥ (६।११०)

१२४. सदलं विकासि गुणकेसरोत्करं, स्फुटधर्मनालममलात्मतां दधत्।
मधुत्रपि नाथ ! भवदाननादभूत्, स्फुटपट्पदार्थमिह शास्त्रपंकजम्॥ (६।११२)
कृतसाधकाभ्युदयमन्त्रमण्डलप्रकृतिस्फुटाष्टविधवर्गविग्रहा।
त्रिविभेदतत्त्वपरिनिष्ठितस्थितिस्तव शक्तिराननभवा हि मातृका॥ (६।११४)

भगवान् रामः पद्मपुराणे इमामभिन्नतामेवमभिव्यनक्ति :

मगास्ति हृदये शर्वो भवतो हृदये त्वहम् ।
आवयोरन्तरं नास्ति, मूढाः पश्यन्ति दुर्धियः ।।[१२५]

एवमेव शिवपुराणे भगवान् स्वकीयमभेदमेवं वर्णयति :

ममैव हृदये विष्णु र्विष्णोश्च हृदये ह्यहम् ।
उभयोरन्तरं यो वै जानाति न मतो मम ।।[१२६]

हरि-हरयोरेकरूपता शास्त्रेष्वनेकशो वर्णिता विलोक्यते । रत्नाकरस्य भक्तिपद्धतावपीयमेव दृष्टिः प्राधान्यं भजते ।

महाकाव्यस्य प्रारम्भे भगवतं शूलपाणिमन्वेव नृसिंहरूपधरो भगवान् अमुना सादरं स्तुतः :

जृम्भाविकासितमुखं नखकर्षणान्तराविष्कृतप्रतिमुखं गुरुरोषगर्भम् ।
रूपं पुनातु जनितारिचमूविमर्शमुद्वृत्तदैत्यवधनिर्वहणं हरेर्वः ।।[१२७]

विष्णोरवताराणामनेकशः सादरमुल्लेखः कृतोऽस्ति । नृसिंहावतारः (१।२, ५, ११।४६, ३२।६६), मोहनी-अवतारः (१०।२४), वराहावतारः (११।४३) ३०।८३, ३६।१६), कोष्ठकांकितेषु स्थलेषु कदाचिदुपमानरूपेण कदाचिच्च प्रकारान्तरेण निरूपिताः सन्ति । 'प्रभामयनयप्रकाशनाम्नि'नवमे सर्गे हरि-हरयोरभिन्ना मूर्तिरेवं निरूपिताऽस्ति :

विभर्ति नारायणमूर्तिरेष सर्वांगसन्धिप्रसृताः स्रवन्तीः ।
इतीव बद्धभ्रकुटिस्तरंगैश्चकार केशग्रहमस्य गंगा ।।
तनोति भागान्तरकेशलग्नजीमूतनिर्मुक्तजलौघलक्ष्मीम् ।
कपालमाला कुहरोदरेषु सुरापगा नाकतलात्पतन्ती ।।
अम्भोधरश्यामलमर्धभागनिषण्णनारायणवक्त्रबिम्बम् ।
ललाटवेदीशिखिसान्द्रधूमच्छायापरामृष्ट इवैति लक्ष्मीम् ।।
सान्द्रीभवत्युत्कटकालकूटच्छायानुविद्धांजनमेचकश्रीः ।
अव्यञ्जितानुल्वणभागसन्धिः कण्ठान्तरस्य च्छविरुल्लसन्ती ।।
शिरः स्थलभ्रंशिसुरस्रवन्तीनिषेवणाभ्यागत हंसलीलाम् ।
शरीरभागान्तरपाणिपद्मबद्धप्रतिष्ठोऽञ्चति पाञ्चजन्यः ।।
स्थितिं विधत्ते सभया कथंचिद् वक्षःस्थलार्धे विनिमीलिताक्षी ।
विलम्बिहारोरगफूत्कृताग्निज्वालातडिद्विस्फुरणेषु लक्ष्मीः ।।

---

१२५. पद्म० पाताल० ।२१
१२६. शिव० ६।५५
१२७ हर० १।२

सम्प्रेरितार्धस्य च वक्षसोऽन्तः शरीरभागेन जगत् सशम्पम् ।
सम्पादयद्दीधितिचक्रवालं तुच्छत्वमागच्छति कौस्तुभस्य ।।
टंकाहतोष्णद्युतिमण्डलोत्थस्फुल्लिङ्गसन्तान इवाभिरामः ।
हारोरगाणां फणरत्नखण्डस्तस्यैव धत्ते परिवारलीलाम् ।।
प्रक्षाल्यतेऽन्तर्विनिगूढनाभिह्रदप्रतिष्ठाम्बुजबीजकोपः ।
पीठः ससत्कारमिवाब्जयोनेः कुक्षिप्रविष्टोदधिवीचिमंगे ।।
त्रयोऽपि लोकाः प्रतिपत्तुमैक्यमर्हन्ति मूर्त्योरनयोरितीव ।
विवक्षयोदेति निगूढसन्धिभागा वलीनां त्रितयस्य लक्ष्मीः ।।
इत्येष मिश्रीकृतकैटभारिशरीरभागो विभुताविशेषम् ।
व्यनक्ति लोकत्रितयेऽप्यशेषमनन्यसाधारणतामुपेतम् ।।[१२८]

द्वादशे सर्गेऽट्टहासः कथयति यद् विष्णुरूपे स्थितस्य भगवतः शंकरस्य नाभिपङ्कजाद् ब्रह्मापि सृष्ट्यारम्भे प्रादुर्भूतः :

अमुष्य गर्भीकृतसागरोदरप्रतिष्ठशेषोरगभोगशायिनः ।
मुरद्विषो नाभिसरोजकर्णिकाविटंकपीठः समभूच्चतुर्मुखः ।।[१२९]

राक्षसानां वधे भगवान् विष्णुः शंकरस्य सायकत्वेनानेकधा वर्णितोऽस्ति । अनेन तदीया हरिहरयोरभेदबुद्धिर्या शिवभक्तस्य परमं लक्षणं सुचारुतया प्रकटिता भवति ।

## (ङ) शिवशक्तयोरभेदः :

शिव-शक्त्योः सामरस्यं हि शैवदर्शनस्य लक्ष्यम् । शिव-शक्त्योरन्तरं नास्ति । शक्तिर्महादेवो अस्ति, शिवश्च महादेवः । शक्ति-शक्तिमतोरभेदः साहजिकः । विना शक्त्या शिवः शव एव स्यात् । अतएवोक्तम् :

चन्द्रो न खलु भात्येष यथा चन्द्रिकया विना ।
न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः ।।
प्रभया हि विना यद्वद् भानुरेष न विद्यते ।
प्रभा च भानुना तेन सुतरां तदुपाश्रया ।।
एवं परस्परापेक्षा शक्ति-शक्तिमतोः स्थिता ।
न शिवेन विना शक्ति र्न शक्त्या च विना शिवः ।।
सैका परा च विद्रूपा शक्तिः प्रसवधर्विणी ।
विभाज्य बहुधा विश्वं विदधाति शिवेच्छया ।।[१३०]

---

१२८. हर० ६।१७–२७
१२९. तदेव १२।६५
१३०. शिव० वायु० सं० उत्तर० ४.

अनयोः संयोगात् सृष्टिर्भवति । शक्ति-शक्तिमतः सम्पर्कादुत्थितमिदं जगत् शैवं शाक्तं चोच्यते ।[131] यथा जननीजनकौ विना सन्तति र्न भवति तथैवानयो र्विना जगदुत्पत्ति र्न भवितुं शक्नोति । परमात्मा शिवः, शिवा च पराशक्तिः । शिवः सदाशिवः प्रोक्तः, शिवा च मनोन्मनी । शिवो महेश्वरः, शिवा माया । शिवः पुरुषः, शिवा प्रकृतिः । शिवो रुद्रः, शिवा रुद्राणी । शिवो भास्करः, शिवा च तत्प्रभा । शिवोऽग्निः, शिवा स्वाहा । शिवः कालाग्निः, शिवा कालान्तकप्रिया । शिवो रुचिः, शिवा आकूतिः । शिवः ऋतुः, शिवा सन्नतिः । शिवो विषयी, शिवा विषयः । शिवो द्रष्टा, शिवा दृश्या । शिव आस्वादकः, शिवा आस्वाद्या । शिवो मन्ता, शिवा मन्तव्या । शिवः क्षेत्रज्ञः, शिवा क्षेत्रम् । शिवो दिनं, शिवा रात्रिः । शिव आकाशः, शिवा पृथ्वी । शिवः समुद्रः शिवा वेला । शिवो वृक्षः, शिवा वल्लरी । शिवोऽर्थसमूहः, शिवा शब्दजालम् । इदमद्वैतं पवित्रं च महः सदैव जगदालोकयति ।[132]

हरविजयस्य सप्तचत्वारिंशत्तमे सर्गे चण्डीस्तुतौ वयं शक्तेः प्रशस्तां प्रार्थनामवलोकयामः । वस्तुतः शक्तिं विना शिवस्यार्चाऽपूर्णैव भवति ।[133] शैव-शाक्तदर्शनानां तन्त्राणां चायमेव सिद्धान्तः । अस्यां चण्डीस्तुतौ कवेस्तन्त्रशास्त्राभिज्ञत्वं, चतुरस्रं पाण्डित्यं, गलदश्रुभावना, अविचलो भक्तिभावश्च पाठकान् गद्गदहृदयात् विदधाति । भगवत्यास्तादृशं रूपमक्ष्णोः समक्षं चकास्ति यदेकतः पौराणिकीं तान्त्रिकीं च पद्धतिं प्रतिपादयदिवावलोक्यते, परत्र च काव्यस्य गुणान् गृह्णत् कवितामर्थगौरवमण्डितां करोति । देव्यथर्वशीर्षे, दुर्गासप्तशत्यां च यादृङ् निरूपणं शक्तितत्त्वस्य कृतं तादृगेवात्र क्रियमाणं विलोक्यते । सर्वशास्त्रानुसारि शक्तितत्त्वविवेचनमिदं निभालं-निभालं विस्मयविमूढचेता इव पाठको भवति । दिङ्मात्रमत्र केचन श्लोकाः प्रस्तूयन्ते ।

सर्वस्य जननी सा हि देवी तज्ज्योतिरस्ति, शुद्धहृदयानां यन्नेदिष्ठं पापानां च दविष्ठमस्ति । तस्याः किमपि स्पष्टं स्वरूपं नास्ति, परं द्योततेऽनूभूयते च तत् :

घोषाक्षरस्वरनिराकृतमप्यकण्ठ्य-
तालव्यमव्ययमनासिकमप्रतिष्ठम् ।

१३१. शक्तिशक्तिमयुत्थं हि शाक्तं शैवमिदं जगत् ।
स्त्री-पुंस-प्रभवं विश्वं स्त्री-पुंसात्मकमेव च ।। (शिवपुराणम्)

१३२. शि०पु०, वायु सं०, उत्तर० ४.

१३३. द्रष्ट०—कल्याणः, 'शक्त्यंकः' (१९३४)

निःसंचरव्यतिकरप्रतिसंचरात्म-
देहप्रभंजनविशालरथाधिरूढाम् ॥
प्रज्ञाधनं स्थिरचतुश्चरणत्वमाप्त-
मद्वैततासमरसं परिमृष्टकूटम् ।
ज्योतिः परं यदमृतं हृदि चाकशीति-
नेदिष्ठमप्यविगलत्तमसां दविष्ठम् ॥[१३४]

यत्त्वमभिन्नं सदपि भिन्नमिव प्रतिभाति, यच्च निरन्तरं हृदयस्थितं सद् आनन्दरूपतां धत्ते :

स्थित्यर्थमस्य जगतः कथमप्युपाधिभेदादभिन्नमपि यत्प्रतिपन्नभेदम् ।
यच्चापि सत्यमनिशं हृदयप्रतिष्ठमानन्दरूपममृतं मुनयो गृणन्ति ॥[१३५]

यत्तत्त्वं न दिवाकरेण न च पावकेन म्लायते, यस्य भासा चेदं सर्वमिदं विभाति, यत् परा प्रकृतिरित्यभिधीयते, यस्य शक्तिश्च भगवानस्ति, यद् वैयाकरणाः स्फोटं कथयन्ति । यन्नैयायिकाः प्रमाणप्रमेयादिभिः षोडश पदार्थैः प्रतिपादयन्ति यस्मादेतज्जगदुत्पद्यते, यस्मादेव च वागीश्वरी प्रकटिता भवति, यस्य मनसश्च चन्द्रमा जातः, नेत्रेण सूर्यः, कटिप्रदेशादन्तरिक्षं संजातं, तत्त्वमेवासि ।[१३६] लोहितशुक्लकृष्णा सा प्रकृतिस्त्वमेवासि :

ब्रह्मप्रजापतिरवक्षदृगादिवर्त्म,
यद्वह्निवाततरणीः किल यज्ञसिद्ध्यै ।
तस्मिन्नुशन्ति भवतीं भुवनस्य हेतु-
मेकामजां जननि ! लोहितशुक्लकृष्णाम् ॥[१३६*]

त्वमेवाप्रतिहता शक्तिरसि, त्वमेव वागीश्वरी असि, त्वमेव चामृतचक्रस्य नाभिरसि ।[१३७] सकलवाङ्मयपङ्कजस्याभ्युन्नता कर्णिका त्वमेवासि ।[१३८] ये तालुदेश-मध्यस्थितममृतमयं तव लम्बमानं स्तनं पिबन्ति ते सकलभावविकारशून्याः सन्तो विमुक्तिभागं भजन्ते ।[१३९] त्वमेव प्रलयकालीनेषु मेघेषु विद्युदसि, त्वमेव

१३४. हर० ४७।७७-७८.
१३५. तदेव ४७।७९.
१३६. तदेव ४७।८०-९२.
१३६*. हर० ४७।१०३
१३७. तदेव ४७।१०४
१३८. तदेव ४७।१०९
१३९. तदेव ४७।१३५

वडवाग्नेरर्चिरूपा सती सकलान् सिन्धुनाथान् भस्मीकरोषि।[१४०] चन्द्रस्य चन्द्रिका, मुरारेर्वृक्षःस्थलस्य च लक्ष्मीस्त्वमेवासि।[१४१] ब्राह्मी, वैष्णवी, माहेश्वरी, ऐन्द्री, चामुण्डा, वाराही, गायत्री, सावित्री-सर्वास्तवैव मूर्तयः।[१४२] येषामुपरि भवती प्रसन्ना भवति तेषां कृतेऽसम्भवमपि वस्तु सम्भवं भवति — वह्निर्हिमायते, शत्रवो मित्रायन्ते, चौराश्च कौटुम्बिकायन्ते :

त्वत्पादयुग्ममनिशं स्मरतां करालधूमावलीशबलितस्फुरदुद्धतार्चिः।
विष्यन्दिसान्द्रमकरन्दहृतालिवृन्दमन्दारकाननतलत्वमुपैति वह्निः ॥[१४३]

दंष्ट्राकरालवदनाः स्फुरदग्निहेति–
पिंगोर्ध्वकेशरुचयोऽरुणरौद्रनेत्राः ।
अत्यन्तर्हिस्रमनसोऽपि तवानतानां
नक्तंचरा जगति गौरि ! वहन्ति मैत्रीम् ॥
उत्खातशातकरवाललताः कराल-
कोदण्डदण्डविसरा विजिघांसवोऽपि ।
बन्धुत्वमेत्य विनतांँस्तव तारयन्ति,
कान्तारदुर्गपतितान् ध्रुवमम्ब ! चौराः ॥[१४५]

अन्ते च देवा एवं निवेदयन्ति—यद् देवि ! वयं तव स्तुतेः स्वाशक्तेर्विरमामो न तु त्वयि भक्ति-न्यौन्यात्। अमृतमास्वादयन्ती कस्य रसना विरसत्वं गच्छेत् ?

इत्थं स्तुतेस्तव वयं विरताः स्वशक्ति-
शून्यत्वतो न भगवत्यभिलाषभंगात् ।
आस्वादयन्त्यमृतशीकरबिन्दुवर्ष-
मभ्येति कस्य रसना विरसामवस्थाम् ? ॥[१४६]

अनया स्तुत्या यदपि पुण्यजातमस्माभिरर्जितं तस्य फलमिदमेवास्तु यदस्माकं भवतीष्वनुदिनं भक्तिः स्यात् :

इति गुणवादतः किलास्मज्जननि ! यदर्जितमस्ति पुण्यजातम्।
प्रतिसमयमियं तदंघ्रिपूजाभिरतिफलात्वयि तेन नोऽस्तु भक्तिः ॥[१४७]

---

१४०. तदेव ४७।१३६
१४१. तदेव ४७।१३८
१४२ तदेव ४७।१४०–४७
१४३. तदेव ४७।१५९
१४४. तदेव ४७।१६१
१४५. तदेव ४७।१६४.
१४६. हर० ४७।१६६
१४७. तदेव ४७।१६७

किमधिकम् ?

प्रशमय महामोहातंकं, विधत्स्व सुनिर्मलां
दृशमनुदिनं कूटीभूतं तिरस्कुरु किल्विषम् ।
विघटय दृढान् पाशग्रन्थीन्, भववव्यतिषंगिणो
न तव विफला पादाम्भोजस्मृतिः प्रणतात्मनाम् ।।[१४८]

एकविंशतितमे सर्गे गौर्य्या, वियोगभयकातरया भगवानिन्दुशेखरः शरीर-भागस्थितिमयाच्यत । तेन च सानुमोदिता स्व शरीरार्धे समावेष्टुम्, यतोहि 'प्रकर्षतः प्रेमगुणस्य नास्ति तन्न वल्लभस्य क्रियते यदीप्सितम् ।' यद्यप्येवंविधे संकल्पे भगवती पार्वती विकल्पाकुलाऽभूत् यत् 'सन्ध्योपासने मे करो नतिपु मस्तकं कथं स्प्रक्ष्यति यतोहि शिरस्थगंगाजलशीकरच्छटा हिमशीतलापि मां सपत्नी-मात्सर्यात् किं धक्ष्यति न ?' एवं चिन्ता वितानान्दोलितापि पार्वती तस्य शरीरे प्रवेशार्थमेव निश्चिकाय यतो हि—'न गण्यते प्रेमणि दोषदूषणम् ।'

तस्या अर्धशरीरप्रवेशे, वामभागपरित्यागाच्चन्द्रमरीचयोऽपरभागे पुंजी-भूयैव स्थिताः (२१।३८), तस्याश्चक्षू राहुणा ग्रस्तस्य नवार्कबिम्बस्येव पिंगलं सद् भागान्तरेण मिलितं विचकास (३९), स्वचक्षुषः परमेश्वरनयने समावेशा-त्सम्मुखे दर्शनाभावात्तया कल्पनयैव प्रियदर्शनमकारि(४०),भ्रुवि भ्रुवं विनिवे-शयन्त्या तया ललाटलेखावलिभिः स्वमनः स्थिता पत्युरीक्षणक्रियैव मन्ये निवे-दिता (४१), शिवस्यार्धभागे विनिवेशितं पार्वत्याश्चक्षुरभ्यासवशादपांगभागमा-श्रितमप्युत्कण्ठितमेव रराज यतोहि सा प्रियतमाननं सम्मुखतया द्रष्टुं न शशाक (४२), अधरे ताम्बूलरक्ता या मध्यरेखा शुशुभे तया मन्ये मूर्तिद्वयस्य विभाग-रेखैव स्फुटं विरचिता (४३), यदा पार्वत्या रोमांचभरावलम्बि स्तनं शिवस्य शरीरभागे प्रविष्टं तस्य स्पर्शसुखैनैव मन्ये भगवतो विलोचने मीलितपक्ष्मसम्पुटे समभूताम् (४४), भगवत्या मध्यभागस्य कृशत्वं प्रति क्षुब्धेन मध्यभागेन, मन्ये, त्रिवलीव्यपदेशेन धृतकुटिलभ्रूलतेनेव स्थितम् (४५), प्रियतमाया अन्तः प्रवेश-सन्तुष्टो मणिमेखलागुणो, मन्ये, नितम्बभागे पपात (४६), । एवं स्व प्रियतम-शरीरप्रवेशात् पार्वत्या समस्तोऽपि नितम्बिनीजनः सौभाग्यगुणैर्जितः ।

तदाच तयोः शोभाऽनुपमैव बभूव :

एकत्र पन्नगमयी सजलाभ्रनीलच्छाया कटीरकतटे कृतसन्निवेशा ।
व्यावर्तिकण्ठकुहरास्पदकालकूटतोयाशयस्तुतिविलासमधत्त काञ्ची ।।

---

१४८. तदेव ४७।१६८.

शोभां बभार जघने ग्लपितान्धकारमन्यत्र रत्नरशना मधुरं रणन्ती ।
लावण्यकान्तिसरसीपुलिनायमानविस्तारशालिजघनस्थलहंसपंक्तिः ॥
अध्यूरु शीतकिरणाभरणस्य कान्तिं कल्माषमाप मृगचर्म विषज्यमानम्।
विभ्रत्किरीटशशिदर्शनवद्धरागताराधृतागतसितेतरपक्ष्मलक्ष्मीम् ॥
निसर्गसूक्ष्मच्छविशारमम्बरं विचित्रकाञ्चीगुणरत्नरश्मिभिः ।
विलग्नमन्यत्र सपंचरागतामिवोद्वहच्चारु तरङ्गितं वभौ ॥
परस्परप्रेमविजृम्भतोऽनयोश्चिराय योगोऽस्तु शरीरभागयोः ।
दधौ तुलांकोटिकशिञ्जितच्छलादितीव गौरीचरणस्तदाशिषम् ॥[१४९]
अन्योन्यमन्मथसुखानुभवानुवन्धनिःस्पन्दमीलितविलोचनयोस्तदानीम् ।
चेष्टास्तयोरुदभवन्नविभिन्नचित्तसन्तानपर्यवसिता विनिवद्धवाचः ॥[१५०]

इत्थं रत्नाकरस्य काव्यदर्शनेनैतत् स्फुटं संजायते यत्स न केवलं पण्डितः, कविर्वाऽऽसीदपितु परमभक्तोऽप्यासीद् येन तत्काव्यं भक्तिरसामृते निमज्य सरसममरं च संजातम् । सः परमशैव आसीत् । हरि-हरयोः, शिव-शक्त्योर्योऽभेदः परमार्थशैवस्य लक्षणं तत्तस्मिन् सर्वाङ्गीणतया विराजमानमस्ति । वस्तुतः स्वामितवैभवेन विराजमानो भगवान् हरः काव्यमिदं लोकोत्तरचमत्कारकारिवैशिष्ट्यं लम्भयति ।

१४९. हर० २१।४८-५२
१५०. तदेव २१।५६.

## पञ्चमोऽध्यायः

# हरविजयस्य कथानकम्

हरविजयस्य कथानकं पंचाशत्सर्गानभिव्याप्य तिष्ठति। एषु सर्गेषु ४३२१ श्लोकाः सन्ति! येष्वन्धकासुरस्योपरि हरस्य विजयो वर्णितः। तेषां सर्गानां नामानि श्लोक–संख्याश्चाधस्ताद् दीयन्ते :

| सर्गः | नाम | श्लोक-संख्या |
|---|---|---|
| १ | पुरारिपुरीवर्णनम् | ६४ |
| २ | ताण्डववर्णनम् | ६४ |
| ३ | ऋतुवर्णनम् | ९४ |
| ४ | मन्दरवर्णनम् | ४१ |
| ५ | पर्वततुर्वर्णनम् | १५१ |
| ६ | भगवत्स्तुतिवर्णनम् | १९७ |
| ७ | सभाक्षोभवर्णनम् | ६४ |
| ८ | कालमुसलदण्डवर्णनम् | ५२ |
| ९ | प्रभामयनयप्रकाशनम् | ७६ |
| १० | वह्निगर्भनीतिसन्दर्भः | ५२ |
| ११ | अग्निदंष्ट्रारभटीवर्णनम् | ७६ |
| १२ | अट्टहासनयोपन्यासः | ८१ |
| १३ | चण्डेश्वरनयोपन्यासः | ८३ |
| १४ | पुष्पहासनयोपन्यासः | ६० |
| १५ | नन्दिषेणनयाभिषेणनवर्णनम् | ६८ |
| १६ | दूतसम्प्रेषणनिरूपणम् | ८२ |
| १७ | कुसुमावचयवर्णनम् | ११४ |
| १८ | जलक्रीडावर्णनम् | १०१ |

प्रतिसर्गं महाकाव्यस्यास्य कथासारोऽत्र प्रस्तूयते :

## प्रथमः सर्गः (पुरारिपुरीवर्णनम्)

मन्दराचलशृंगे 'ज्योत्स्नावती' नाम्नी नगर्यासीद् या भगवतश्चन्द्रचूडस्य शिरसि शशाङ्कलेखेव प्रतीयते स्म। तत्र नवपद्मराग-स्फटिकमरकतमणि-निर्मितानि मन्दिराणि तस्या वैभवमनारतं प्रथयन्ति स्म। तत्र शिशिररश्मि-कलाकिरीटो भगवान् शंकरो भुवनानुजिघृक्षया सपरिवारो निवसति स्म।

## द्वितीयः सर्गः (ताण्डववर्णनम्)

तस्मिन् पर्वते स भगवान् कदाचिल्लीलागृहीतहिमाद्रिसुताकराग्रः क्रीडा-रसेन लीलागृहं प्रविश्य कालानुकूलरसस्निग्धाः कथा यदा करोति स्म तदा सुरगणास्तमधिजग्मुः। तैश्च भगवान् ताण्डवायोद्यतो वीक्षितः। नन्दिना तेषाम् आगमनं भगवते निवेदितम्। यथायोग्यमुपविष्टेषु तेषु स्व परां काष्ठां स्पृशत् ताण्डवं सगणेन शिवेनाक्रियत। ततश्च विस्पष्टभावरसवृत्ति नृत्तं निषेव्य निवृत्तो भगवान् सुरपतिभिः सेव्यमानस्तत्र समयमनैषीत्।

## तृतीयः सर्गः (ऋतुवर्णनम्)

अथ कदाचिद् गिरिजासहितः स प्रभुस्तस्मिन् मन्दराचले स्ववैभवसना-थितैः समस्तै ऋतुभिः सममसेवत। तत्रत्यं सर्वमपि वातावरणं मधुरिमासम्प-न्नमभवत्। ऋतुभिः परां शोभां वहन्तं तं मन्थाचलं द्रष्टुं स भगवान् लुलितं गिरिसुतालकं स्पृशन् विनिर्ययौ।

## चतुर्थः सर्गः (मन्दरवर्णनम्)

ततो निर्याय स विश्रान्तभास्कररथं तमद्रिमवालुलोके। स मूलेनाम्बुराशिं मथ्नाति स्म शिखरेण च नाकमार्गम्। समुद्रमन्थनकाले वासुकिनिर्मोकव्याजेन गंगैव स्वभर्तुः सागरस्य मन्थन-व्यथां दूरीकर्तुम् प्रार्थनामिव कुर्वन्ती यस्य पादमूले चिरमचेष्टत। यस्य नीलगण्डशैलाः सागर-मथन-समुत्थित-कालकूट-पिण्डा इवाभान्ति। यस्य रत्नानि वीक्ष्य रात्रौ मुग्धो जनः केवलं गत्यनुरोधा-देव निश्चिनोति यदिमानि रत्नान्युत नक्षत्राणि। यः शून्याम्बरभ्रमणखिन्नं सूर्यं तालवृन्तैरिव स्वगुहावातैर्वीजयन्निवाभाति। तस्मिन् पर्वते भ्रमन् धूर्जटिः स्वचूडाचन्द्रकिरणैस्तत्रत्यपङ्कजविमुद्रणमकरोत्।

## पंचमः सर्ग (पर्वतर्तुवर्णनम्)

मन्दरं सादरमीक्षमाणं तं शिवं निरीक्ष्य नन्दी एवं जगाद—एषोऽद्रिः परां

शोभामवाप। असौ कस्य प्रीतिं न कुरुते ? अस्य पृष्ठं सुभटस्य पृष्ठमिव न दृश्यते। प्रलयकालेऽप्ययथमंकम्पितो भवति। अत्र प्रेयांसमर्क समागतं विलोक्य विकसितवदनाः कमलिन्योऽलिविरुतव्याजेन किमपि कोमलमालपन्ति। भवन्त-मिवैनमद्रिं वीक्ष्य को न रमते ?

**षष्ठः सर्गः (भगवत्स्तुतिवर्णनम्)**

अथान्धकासुरकृततिरस्कारखिन्ना ऋतवः कालान्तरे विग्रहवन्तः सन्त इन्द्र-प्रेरणया सेवितपूर्वमाशुतोषं ययुः। उपायनीकृतपुष्पाः प्रणमन्तश्च ते नन्दिना भगवत्सेवायां निवेदिताः।

विज्ञाय चेदं जगत्पतिरतिगभीरया गिरा तानवोचत्—"कथमस्थान एव हतप्रभानि भवतां मुखानि भवद्हृदय-दुःखं सूचयन्ति ? आखण्डले शासितर्यपि को दैत्योऽशुभमाचरति ? इदं भुवनाब्जकोशं भ्रमरा इव यूयमेव रक्षितुमास्वाद-यितुं च प्रभवः। ब्रह्मणः काव्यमिवेदं जगद्रक्षयद्भिर्भवद्भिः पुराणकवेस्तस्य यशः सर्वत्र वितन्यते।

इत्युक्त्वा विरते जगन्नाथे वसन्त एवमुवाच-'सर्वज्ञे भवति किं विज्ञा-पनीयम् ? सर्वं जानन्नपि भवान् यदस्मान् पृच्छति तदस्माकं सर्वमपि कुशलं सूचयति। वयं भवत्सेवायां किं ब्रूमः ? भवानेव प्रकृतितो भिन्नः परम पुरुषः, 'यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह' इत्यस्याः श्रुतेरपि भवानेवाभिधेयः। यथा घटमठादिषु गगनमेकमेव तथैव सर्वत्र भवानेक एव विराजते। भवानेव जगदिदं सृजति, पाति, हन्ति च। यथा सुवर्णरूपे परिणतं ताम्रमुपायशतैरपि ताम्रतामधिगन्तुं न शक्नोति तथैव शिवत्वेन युक्तः पुमान् पुनः पशुतां न व्रजति। किमधिकं कथयामस्तव प्रसादमासाद्यैव जीवलोकः सुखी भवति। वयं च तद-भिलाषुकाः।

कदाचिद् हिमालये स्थितवतो भवतो गिरिजया परिहासे लोचननिमीलनं पृष्ठतः कृतम्। ततश्च त्वत्तो विलोचन-रहितः कश्चिद्भयानकमूर्तिः प्रादुर्बभूव। स चान्धक नाम्ना प्रसिद्धः। कठोरतपः कुर्वाणः स प्रसेदुषः प्रजापतेर्लब्धनयनः 'प्रतिमल्लतारहितदेवदानवं जगतां प्रभुत्वमनपायमासदत्।' सः करदीकृतलोक-पालः सम्प्रति सर्वेषामवध्योऽस्ति संवृत्तः। वैष्णवं चक्रमपि तत्र निष्फलतां गतम्। एतादृश्यां स्थितौ यत्करणीयं तत्करोतु भवान्। हरिरपि सलोकपा-लोऽनुपदमेवात्रायाति। संसारसागरमुत्तर्तुमपि प्लवभूतो भवान् किमुतार्तिदुः-खमुत्तर्तुम् ?

एतन्निवेदनानन्तरं तत्र गणपतीनां सभायां क्षोभो व्यजृम्भत।

**सप्तमः सर्गः (सभाक्षोभवर्णनम्)**

अन्धकस्यात्याचाराणां विषये श्रुत्वा हरस्य सभा क्षुब्धाऽभूत् । कालमुसलः वीरभद्र-मेघनील-वज्रमुष्टि-भृंगिरिटी-नडकूवर–सुमूर्ति-आग्निक-क्रोधेश्वर-चण्डेश्वर-तालकेतु-सुनन्दक-चण्ड-मयूरपतिकेतन-दिण्डी–अग्निधामा-त्रिमूर्धा-अग्निकेतु-आमर्दक-अग्निशिख-ज्योतिष्मान्-तार-त्रिशिख-काल-अन्तक - चण्डानन - नन्दी-जयन्त-चण्डी-वैष्णवी-भद्रकाली-प्रभृतयः दानवदुराचाराकर्णनया क्षुब्धा अभूवन् ।

**अष्टमः सर्गः (कालमुसलदण्डव्याहृतिवर्णनम्)**

ततो मांसांसंलांसशिखरस्खलदुत्तरीयः कालमुसलो मुसलमाकृष्य गभीरया गिराऽवोचत् । सर्वसामर्थ्यवतः प्रभोः शंकरस्य निकारलेशसम्भावनाप्यनुतापं कुरुते । अस्याहवे शूलं कः सहेत ? भगवत्कृपया, दानवभटेषु पश्यत्स्वेवाहं तेषां लक्ष्मीमभिहरामि, स्वकीयनाम्नश्चान्वर्थतां सम्पादयामि । अहं शत्रोर्लक्ष्मीं भुजपंजरसन्निबद्धां करोमि । इत्थंबहुभिः प्रकारैः स्वकीयं सामर्थ्यं प्रकाश्य कालमुसलो व्यरंसीत् ।

**नवमः सर्गः (प्रभामयनयप्रकाशनम्)**

कालमुसले स्वनाम्नोऽवर्थतानुरूपमाभाष्य विरते सति प्रभामयः शान्तमिदं वचो बभाषे-'सर्वसामर्थ्यसम्पन्नस्य भवतश्छत्रछायायां स्वल्पेऽपि कार्ये संरम्भिता नोचिता । किं कलविंक-(चटक-) पक्षरवाभिघातेन कुलाद्रिकम्पः सम्भाव्यते ? सुरासुराणां सर्गस्थितिप्रत्यवहारहेतावस्मिन् शरण्ये जगतो गुर्वी धुरं बिभ्रति वः किमाकुलत्वम् ? मिश्रीकृतकैटभारिशरीरभागः, कालकूटकृतनीलकण्ठप्रभः त्रिपुर-दाहकर्ता, कामविनाशनः प्रभुः सर्वं साधयिष्यति । अयमेव साम्प्रतिकं कर्त्तव्यं निश्चेतुमलम् । संसारे प्रज्ञापूर्वकमालोच्यमानमेव कर्म सिद्ध्यति । यथा चन्दनं बहुशो घृष्यमाणमेव गन्धमुद्गिरति । यथा प्राणापानसमानोदानव्यानभेदेन मरुता शरीरयात्रा सम्पाद्यते तथैव कर्मणामारम्भोपाय -पुरुषद्रव्यसम्पद्–देशकालविभागविनिपातप्रतीकार - कार्यसिद्धिरूपपञ्चकेनान्विता नीतिरचना संसारे विजिगीषूणां शरीरयात्रां सम्पादयति । सम्प्रति भवन्तःसंरम्भमपहाय कार्यं निरूपयन्तु । संसारे एतत्किमपि नास्ति यद्बुद्धिमतां कृतेऽसाध्यं स्यात् ।'

**दशमः सर्गः (वह्निगर्भनीतिसन्दर्शः)**

वीराग्रणी र्वह्निगर्भः प्रभामयवाक्यानन्तरमेवं बभाषे—'प्रभामयस्य वचनं श्रुत्वाऽहमपि किमपि कथयितुमुत्सहे । स तु मुखानिलस्यैव महिमा येन वेणुरपि शब्दं करोति । एनं महापुरुषं विहायान्यः क ईदृशं वाक्यमभिधातुं समर्थः स्यात् ? स स्यमन्तकाख्य एव मणिर्यः शातकुम्भनिष्ठीविता । येषां बुद्धिर्दीपशिखेव नान्
र्थात् प्रकाशयति ते गहने क्रोधान्धकारे प्रविजृंभमाणे सत्स्वपि लोचनेष्वन्धी-भवन्ति । पण्डितः स्वबुध्यैवाज्ञानं व्यपोहति । भानुः स्वप्रभयैव तमो विनिहन्ति ।

बुद्धिमता स्वनीतिकौशले प्रकाशिते सत्यसाध्यं वस्त्वपि साध्यं भवति । तथाहि चन्द्रोदयेऽपि जलधिः शान्तो भवति, चंचलापि स्वकीयं चांचल्यं परित्यजति । सैंहिकेयोऽपि सूर्यम् न ग्रसते । नीतिमार्गानुसारं चलन्तं पुमांसं चंचलापि लक्ष्मीः कदाप्येवं न मुञ्चति यथा दिनपतेर्मण्डलाग्रं कान्तिः । मन्ये महापुरुषाणां हृदय-निर्माणादवशिष्टां गम्भीरतां सागरेषु, स्थिरतां पर्वतेषु, विस्तीर्णतां चाकाशे विधाता न्यधित । बुद्धिमतोऽपि सामाद्युपायरहितान् जनान् सूक्ष्ममतयोऽभि-भवन्ति । नेत्रवतोऽपि चरणेषूपेक्षां धारयतो मनुष्यान् निशिताः कण्टका अवश्यं विध्यन्ति । समुचितकालादिसाधनं विजिगीषुं श्रिया योजयति तद्विमुखस्य तु केवलं पशुबलप्रयोगः पतनस्यैव हेतुः । कदाचिन्मोहनीरूपधारी, कदाचिद्वरा-हरूपः कदाचिद्वामनरूपः, कदाचित्कृष्णरूपोऽपि भगवान् केवलं कालं प्रतिपाल्यै-वासुरान् जघान ।

कालमुसलानुसारं प्रतिपादिते मार्गे चंचलापि श्रीः स्थिरा भवति । विकार-हेतौ सत्यपि श्रेष्ठा व्यक्तयो मर्यादा-भङ्गं न कुर्युरेतदत्यन्तमावश्यकम् । प्रलय-कालेऽपि मर्यादां परित्यजन्तः समुद्राः किं निन्दनीया न भवन्ति ? अतो गणपते ! क्षिप्रता परित्याज्या । सारगुरवो मुधैव न विप्लवन्ते । यद्यपि तवासिर्वैरिकण्ठ-कर्तनेऽव्याहतोऽस्ति तथाप्यहं नयानुसारमेव कार्यं कर्तुमिच्छामि । येन सत्यप्य-साफल्येऽस्माकं निन्दा न स्यात् । यद्यपि भवान् सर्वथा समर्थस्तथापि साक्षाद्दण्ड-प्रयोगं न तेऽभिनन्दामि । अहं तु व्यावहारिकतां वीक्ष्यैतद्ब्रवीमि, अन्ततस्तु भगवान् पशुपतिरेव प्रमाणम् ।'

तस्य मुखान्निर्गच्छन्तीं वाग्धाराभिमां गणपत्ति-संघोऽभ्यनन्दत् ।

## एकादशः सर्गः (अग्निदंष्ट्रारभटीवर्णनम्)

वह्निगर्भस्य वचनं श्रुत्वाग्निदंष्ट्रो विकटमट्टहासं कुर्वन् सिन्धुरिव चुक्षोभ जगाद च—'गणपते ! सत्यं तव वाग्धारया नीतिमार्गः स्वभावतो गहनोऽपि विभूषित एव । सा कापि विलक्षणा चन्द्रलेखा जलनिधेरुदियाय या शिवस्य जटाजूटं समपूजयत् । संसारे कश्चित्सौभाग्यशाली एवैवंविधो भवति यस्य वाचि सर्वजनरमणीयोऽर्थः प्रकाशते । स कल्पपादपः कश्चिदन्य एव चिन्तामणिरपि यस्य स्ववकतामुपगच्छति । नीतिमर्मपरा तव वाणी क्षोभं नैति । या पंकिलतां नाप्नोति सा कुसुमस्य धूलिरन्यैव । भवतां वाक्यस्य समक्षे शाल्मलिपादपस्या-सारं तूलमिव मे वाक्यमुपहासास्पदमेव भविष्यति । तथाप्यहं ब्रुवे । भवतां सेवायां हरिमुसलायुध-क्रोधेश्वर-अप्रकम्पकोप-काली-प्रभृतयो रणोत्सुकाः सन्ति । अनेन नीतिपूर्णेन विवेचनेन तेषामुत्साहो मन्दीक्रियते । रणेऽस्माकं कीर्तिः प्रसृता स्यात् । मदमत्तस्य शत्रोः कीर्तिमहमेवापनेतुं समर्थः । रणभुवि जयश्री नर्तकीव

पदं दधातु। आयोधने खड्गखडत्कृतिः खेचरसंहतीनाम् मुदं करोतु । अहमसुरं तं पिष्टास्थिकूटसदृशं कर्तुमीशः । समस्त-रजनीचरकुल-विनाश-भारोऽपि मे खेदाय तथा न भविष्यति यथा वराहस्य दंष्ट्राग्रे धरणीनिवेशः । पीठमर्द इवाहं जयलक्ष्मीमभिमुखीकरिष्यामि ।

येन दानवानां समक्षं राहोः शिरः कर्तितम् तस्य सम्मुखे वराका दैत्याः के ? बलि-बन्धनानन्तरं हिरण्यकशिपु-हिरण्याक्ष-वधानन्तरं चास्माभिर्दनुजानां दोर्दण्डदर्पो व्यपास्तः ।

और्वाग्निर्वडवाया मुखे कथमधिशयीत ? अनुचितत्वात् । तस्यास्पदं तु कुपितवीरस्याननमेव । तेजस्विसंघाते प्रकृत्या मृदुरपि पुमान्नूनं न गण्यते । यतोहि पंचाग्नितपः कुर्वाणास्तपनमेवेच्छन्ति न तु चन्द्रम् । पौरुषरहितः कदापि श्रियं प्राप्तुं नालम् । तुच्छेन हरिणेन यच्चन्द्रमसो वक्षसि पदं न्यधायि तत्तस्य शान्तवृत्तेरेव फलम् । कस्मान्न स सूर्यस्य क्रोडे पदं निदधाति ? दीपोऽपि भवनान्धकारमपनेतुं स्वकीयां शिखां मुंचति वीरस्य तु कथैव का ?

यद्यपि संसारेऽगणिताः सन्ति जनास्तथापि महापुरुषाणां धुरं तु केचिदेव वहन्ति । समुद्रात्स कश्चिद् विलक्षण एव शंखः समुत्पन्नो यः कैटभारेर्मुखमरुता परिपूर्यते । हरेः हृदि तु केवलं त्रय एव लोका वसन्ति परं धीराणां हृदये तु सप्तापि लोकाः समायान्ति । प्राणिना कथमपि उपयोगिना भाव्यम् । वृथाविस्तारशीलैः शरीरैः किम् ? पर्वतोपकण्ठमुपयोगि तृणादिकं वरं न वृथाभोगायासितचक्षुष्का गण्डशैलनिकराः । दलितान्धकार एकोऽपि मणिः श्रेष्ठो न तेजोरहिता गण्डशैलाः । लूताकृतस्तन्तुर्वरं यमवलम्ब्य कीटोऽप्युच्चैर्गच्छति । तस्योच्छ्रितस्योदयाचलशृंगस्य को लाभो यः पततोऽपि सूर्यस्यावलम्बो न भवति । स्मातत्स्वकीयं तेजः स्मरणीयम् । युद्धरतैरस्माभिर्भाव्यम् । वृथाजल्पनया किम् ? स्मरारेः सभायां केवलं वाग्विलासो न शोभते । भवतामत्र का सम्मतिः ? अहं तु सर्वथा शत्रोर्विनाशमिन्द्रस्य चोत्कर्षं कामये ।

## द्वादशः सर्गः (अट्टहासनयोपन्यासः)

वीराग्रणीरट्टहासोऽग्निदंष्ट्रं बहुशः प्रशंसन् नीतिपूर्णं वचनं व्याजहार— 'यत्सम्प्रत्येवाग्निदंष्ट्रेन कथितं तत्सर्वथा श्रद्धेयमेव वर्तते' 'यतो भवत्येव विवेकशालिनां विपश्चितां प्रातिजनीनवाक्यता' ।

यो देशबलादि साधनं विचिन्त्य कर्तव्यस्य वस्तुनः प्रतीक्षां करोति तस्य क्रियाः परिणामदुर्भंगा न भवन्ति । 'न नीतितुल्यं क्षममस्ति साधनम्' । अवसरस्य प्रतीक्षा करणीया । नीतितूलिका विचित्ररूपा भवति । यत्कार्यमपार्थम्, ससंशयं, सन्धिविहीनं, देशकालादिविरोधि च भवति तत्पण्डितैरसाधुकाव्य-

वन्न प्रशस्यते। जलधितरंगैरुत्थितत्वाच्चंचलापि लक्ष्मीः केवलं नीतिमार्गादेव राजनि स्थिरा भवति। यथा सेचनाद्युपायविरहिता वृक्षा जगति फलरहिताः, उपायसहितास्तु सफला एवमुपायरहिताः क्रियाविशेषा येऽन्येषां कृते निष्फला भवन्ति त एव राज्ञां कृते कल्पद्रुमायन्ते। उपायचक्रवत्–क्रम–काल–नेमिवत्, मण्डलनाभिवच्च कार्य–चक्रं क्वचिदपि न विशीर्णं भवति। य इमामुपाय-परम्परामुपासते सोऽचिरमेवोत्कर्षं लभते। मतिमन्दः पुमानुलूक इवोदर्कं (परिणामम्, उदितमर्कम् च) वीक्षितुं न समर्थो भवति। समये निर्गते कार्यं न सिध्यति। फाल्गुनमासे करिणोऽपि दुर्जयः कोलो निदाघकाले, मेदस्वितया, शुनामपि पराजेयो भवति।

षाड्गुण्यचिन्ता नितान्तमौपयिकी। यद्यपि केवलं दण्ड एव न नीतिवृद्धैः साफल्यार्थमभिनन्दितस्तथापि कार्यगौरदृशा भवतामुपक्रमः समुपेक्ष्यो न। भवन्तः शत्रून् धूलिसात्कर्तुं सन्ति समर्थाः परमहं प्रत्येमि यत्प्रभोः शंकरस्या-नुमतिं विना रिपोर्निग्रहे न क्षमाः। अस्यैवाज्ञां शिरसि निधाय स्वनिश्चयं कुरुत। संरम्भेण कार्यं कृत्वा कथं स्वकीयं यशो मलिनं कुरुध्वे। प्रमादोऽपि न करणीयः। अट्टहासस्य सारगर्भितं नयप्रपञ्चमाकर्ण्य सा सभा सकलकला, ससाधुवचना, संहृष्टा चाभूत्।

## त्रयोदशः सर्गः (चण्डेश्वरदण्डोपन्यासः)

पूर्वं तिर्यग्विवर्तनवलद्विकटांसकूटेन चण्डेश्वरेण भारती निर्ध्याताऽनन्तर-मट्टहासः प्रशंसितः, पुनश्चेत्थमभाणि— 'यद्यपि श्रुतं वहुनीतिगर्भं वचो मया तथापि किमप्यभिधास्यते। यतोहि जगत्येतादृशं किमपि नास्ति यन्नूतनं न स्यात् अहं तु दण्डस्येव पक्षेऽस्मि। मम सम्मतौ ते तु मन्दगतय एव ये सामा-दीन् सेवन्ते। ये च प्रसभमरिकण्ठकर्तनं कुर्वन्ति त एव वस्तुतो धन्याः। अय-मेक एव गुणो गुणशतादपि श्लाघ्यतरो राजनीतौ वर्णितानां षण्णां गुणानां तु कथैव का? गुहहस्तगता एकैव सा शक्तिः प्रशस्या प्रभुमन्त्रोत्साहवतीभिस्ति-सृभिः शक्तिभिः किम्? संग्रामांगणे योद्धारः शरासनकोटौ यं ज्यावन्धपाशं कुर्वन्ति तेन प्रतिपक्षाणां श्रियमाकृष्यैव दृढतरं बध्नन्ति।

तेजस्वी क्षीणोऽपि कार्यधुरं निर्विघ्नं वहति। किं कलावशेषश्चन्द्रोऽपि रात्रिं न कुरुते? धीरा विपद्यपि हसन्ति कायराश्च मंशकाविषव्यतिकरेण विमू-र्च्छिताः सन्तः सुचिकित्सिता अपि मूर्छन्ति।

धीराः, कृपाणधाराजलं कस्मान्न समभिलष्यथ? संग्रामवर्त्म तु भवतां विहारमार्गोऽस्ति। उन्मूलितस्वर्गैरपि शत्रुभिर्भवतां हृदयानि स्प्रष्टुं न शक्यानि

यतोहि प्रलयकाले पर्वतोत्पाटिनां मरुतां कृते गगनमकम्प्यमेव भवति ।

शत्रोरेवमपमानजनकमाह्वानमाकर्ण्यापि नीतिव्याजेन स्वकीयं भयं निगूहमानाः किमिति न जिह्रीथ ? भवतां भुवनव्यापिनीं कीर्तिमसुरप्रतापाग्निर्मन्दीकरोति भुजंगमदृष्टिपातो विषाग्निना दीपशिखामिव । अस्माकमेष रणाभिलाष केवलं कालमुसलेनैव पूरितः । शारीरिकवलापेक्षयाऽत्मिकवलमेव हि ज्यायः । सिंहः कुंजरं चण्डचपेटाघातेन निपातयति शरभस्तं पृष्ठेनोद्वहति सिंहस्य कर्तव्यं द्विरदगण्डोत्पाटनातिरिक्तं किमस्ति ? संसारे वहवः शव्दाः सन्ति परं यः श्रवणमात्रानन्तरं गजानां मदाम्बु शोषयति स मृगाधिपतेः कोऽप्यन्य एव नादः ।

लक्ष्मीर्हरेर्वक्षःस्थलभ्रान्त्येव नीलरुचौ कृपाणे स्वकीयं वासं विरचयति । सा पद्मं त्यक्त्वा वीरानुरागरभसेनासिपत्रवनेऽपि निवसति ।

भुजबलनिर्जितारेः पुरुषस्य प्राप्तेषु वैभवेषु कदाचिदास्था न भवति । किं नखैर्विदारितस्य द्विरदकुम्भस्य मौक्तिकगणेषु सिंहो रुचिं करोति ? इदं तु बुद्धिविस्खलितं यद् वीर्यवन्तोऽपि भवन्तो 'विषमनीतिपिशाचिकाभिः' कवलीकृताः ।

उत्तिष्ठत, दैत्येन्द्र -सैन्य–सागर–विलोडनाय जयामृतलाभहेतोः कूर्मपृष्ठ इव मयि मन्दरसदृशं सर्वमपि भारं भवन्तो धारयन्तु । अहमद्यैव दानवकुलप्रलयाय धनुषि द्रुतं मौर्वीमारोपयामि । अहं तु धनुष्टंकारं विपक्ष–लक्ष्मी–समाकर्षण–मूलमन्त्रस्योङ्कारमेवावगच्छामि । कीर्तिसलिलैः स्नाताः पराक्रमाढ्या यशःपरिमलेन सुरभीभवन्ति । निस्त्रिंश-पुष्कर-जलेन कृताभिषेकः सुभट आत्मानं शीघ्रं पुनाति ।

## चतुर्दशः सर्गः (पुष्पहासनयोपन्यासः)

पुष्पहासेन कथितं यत्कालमुसलादिप्रतिपादितमर्थजातमाकर्ण्याधिकं वक्तुं क उत्सहेत ? अत्र नीलकण्ठस्योपस्थितौ जीर्णवायस इव किमप्यहमलज्जितो विरौमि ।

अयमवसरः क्रोधस्य नास्ति । क्रोधस्तु मनुष्याणां तमोहीनमन्धत्वम् । सम्प्रति त्वन्ययैव दृशास्माभिर्विलोकनीयम् । यस्य नाम्नि सहसाऽभ्युदीरिते सुराणामोष्ठतालुपुटाः शुष्यन्ति, यः सुरराजमण्डलमोजसा विहीनं चकार, लोकपालांश्च लालाटिकान् व्यधत्त, एतादृशस्याप्यन्धकस्य किमुपेक्षा सम्भवा ? साध्यवस्तुषु सामनीतेरसम्मतत्वं विदुषां नास्ति । दण्डस्त्वन्तिम एव ।

यो मृतानपि शत्रून् संजीवन्या समुज्जीवयति स शुक्रः किं भवता सर्वथोपेक्षितः ? सङ्कटातिशयेष्वेव बुद्धिमतां मन्त्रशक्तयः स्फुरन्ति । गहनेऽन्धकारे सहस्रदीधितिकिरणा इव । मूढमार्गेण सरभसमाहृताः श्रियः स्वप्रभूनेवाद्रियन्ते ।

भवतां सम्प्रहाररभसो मनोरथो नीतिमार्गमुच्चावचं करोति । सर्वेऽपि भवन्तो वीराः किन्तु युद्धे स्वजनानां या प्राणहानिर्भविष्यति किं ततोऽप्यपरिचिताः ? पशुबलं सरलम् 'कार्यमोहतिमिरावबोधिनी दुर्लभा तु मतिदीपिका नृणाम् ।' निसर्गचञ्चलामपि राज्यलक्ष्मीं विद्वांसः स्थिरां कुर्वन्ति । यथा विवेकभाग् जनः सांख्ययोगशास्त्रयोर्दृढमतिः सन् विवेकख्यातिं भजमानः प्राकृतिकविकारेभ्यो विचलितो न भवति तथैव यः सांख्यस्य (संग्रामस्य) योगं (युक्तिं) जानाति स भ्रुकुट्यादि युद्धविकारैः सम्पृक्तो न भवति । यो नीतिप्रकाशं करे धारयन्नपि परैर्मोह्यते सोऽन्धकूपे स्फुटं पतति । अतुलितबलशालिनि प्रतिपक्षे सहसैव नीतिमान् न प्रसरेत् । क एवंविधो मूढो भवेद्यः सन्दिग्धसर्पेऽपि वल्मीके स्वहस्तं विनिवेशयेत् ? मन्त्रयुक्तिगहनं नीतिशास्त्रं कोऽतिवर्तितुमुत्सहेत् ? अतो भवतां संरम्भेणालम् । त्रैलोक्यं सुरासुरविमर्दनाकाण्डमेव रक्ताक्तं मा भूत् । सर्वत्रापि शान्तिः प्रसरतु ।

## पञ्चदशः सर्गः (नन्दिषेणनयाभिषेणनवर्णनम्)

पुष्पहासे एवमभिधाय विरते सति नन्दिषेणो वीरतापूर्णां वाचमुत्ससर्ज– 'भवादृशां पुरस्ताद्यदहं ब्रवीमि तस्मिन् कार्यगौरवमेव हेतुः । ये बुद्धिजीविनो भवन्ति ते स्वरक्षार्थं नानाविधान् वाग्विकल्पानुद्भावयन्ति । नीतिरपि भीतिरेव । कार्यसिध्यै पराक्रमावलम्बनमन्यदेव वस्तु ।

सम्प्रति शत्रुणा पदे-पदेऽपमानिता अपि यदि भवन्तो नोत्सहन्ते तर्हि अतः परं किं विधुरं स्यात् ? 'ननु ताम्यति मानसं भटानां किमुपायान्तरचिन्तनान्तरायैः ?' कालक्षेपमकुर्वाणानामेव भटानामंसदेशेषु विजयश्रियो निवसन्ति । युधि दैत्याधिपतौ निरन्तरं जृम्भाणेऽपि क्थं यद् हस्ते हस्तं निधाय तिष्ठामः–'प्रभुशासनलाभशून्यतायाः परिणामः कटुकः सुदारुणोऽयम् ।' तेन सह सन्धिः सूर्यान्धकारयोः सन्धिरिवासम्भवः । केवलं दण्ड एव तस्य कृतेऽवशिष्टः । नाथ ! बहुना जल्पितेन किं भवतामुपेक्षयाऽसुरौघः सर्वानपि सुरसंधान् स्मृतिशेषान् विधास्यति । सम्प्रत्यादिश्यतां प्रयाणाय । सर्वेऽपि भवदादेशं प्रतीक्षन्ते । भटा रिपुलक्ष्मीहरणे क्रमन्ताम् । रथ–गज–तुरग–पत्ति–सैन्यं दिक्षु रसातलोदरे च प्रथताम् । यदैव महादेवः स्वसैन्येन साकं चलिष्यति तदैव शत्रोरन्धकस्य पुरो मृत्युर्विवृतमुखो धाविष्यति ।'

## षोडशः सर्गः (दूतसम्प्रेषणनिरूपणम्)

नन्दिषेणे एवमभिधाय विरते शिखण्डिनामा शिवगण एवमूचे-"मम पूर्ववक्ता यदूर्जितं वचनं व्याजहार तत्स्वाभाविकमेव । यदि प्रलयाग्निश्चण्डिमानं प्रदर्श-

यति तर्हि किमाश्चर्यम् ? तथापि मदीयवचनमपि श्रोतुमर्हन्ति भवन्तः। किमाधूसरादपि कमलाद् भ्रमरा मकरन्दं नाददते ? मम मनः सहसैव युद्धप्रवृत्ति-पक्षे नास्ति। नीतिपथमवलम्ब्य सरलतयैव कठिनान्यपि कार्याणि सिध्यन्ति। मन्त्रेण संस्कृतो वीणारवोऽपि विषमस्य विषस्य नाशं कुरुते। अपरिपक्वे एवास्मिन् कार्ये मदीयं मनो युद्धोद्यतं नास्ति। अपक्वे रसाले गाढो रसः कथ-मिव भवेत् ? किं भवन्तो न जानन्ति यदसाधारणो वीरोऽन्धको भवतां शत्रु-पक्षेऽस्ति ? पूर्वं विष्णुना ये दैत्या मारिताः स तेभ्यो नितरां भिन्नः। साधा-रणोऽग्निस्तु जलेन निर्वापमुपैति परं वडवाग्निवस्तु जलं भस्मीकरोति।

यस्य चरणयोरागत्य रिपूणां सेना खण्डितेव नायिका किंकर्तव्यविमूढा सती केवलमश्रूण्येव विमुञ्चति न तु प्रतीकारं करोति। तं कालकेतुं युष्मासु कः सहेत ?

एवमेव हिरण्यकशिपुतनयम् (प्रह्लादं), अप्रतिरथम्, शतदुन्दुभिम्, काल-दमनम्, गवाक्षम्, विलंघितजगत्त्रितयं प्रजंघम्, द्रुमम्, धूम्रकेतुम्, युष्मासु कः सोढुमलम् ? अन्येषामपि बहूनां साम्मुख्यं कः कुर्याद्येषां भयात् भगवान् विष्णु-रपि कोल-सिंहादिरूपं धारयामास।

अधिकजल्पनेन किम् ? तामेव नीतिं, नीतिं कथयन्ति बुधा यस्यां स्वपक्ष-परपक्ष-बलाबलमालोच्यते।

अतस्तस्यान्धकस्य पार्श्वे प्रथमं कश्चित्सन्देशदानचतुरो दूतः प्रेष्यताम्। यद्येतेन स स्वकीयं व्यामोहं न परित्यजति तर्हि चरमं शस्त्रं दण्डस्तु भवतां हस्त एवास्ति। मया यदप्युक्तं तन्नीत्यनुरोधान्नतु दानवभयात्। अयं चन्द्र-मौलिः सम्प्रति किं विचारयतीति न विद्मः।

एवमुक्त्वा यदा स विरराम तदा 'साधु' इति कथयन् कालमुसलं च दूत-कर्मणि नियोज्य त्रिशूलपाणि र्बन्दिनां जय-जयकारेण सहितः सभामत्यजत्।

## सप्तदशः सर्गः (कुसुमावचयवर्णनम्)

एवं भगवत्युत्थिते तस्य गणा मनोरमाभी रामाभिः सह मन्दराद्रेस्तरुकुसु-मान्युच्चेतुं, निष्चक्रमुः। नानाफलानामास्वादनाय चटुलितैः प्लवंगमैः, रत्न-गण्डशैलैः, गजमृगेन्द्रध्वनिविद्रावितमृगैश्च युक्तं तं वीक्ष्य ते रेमिरे। नायका-नुयाताः कामिन्यः कुसुमायुधस्य सेना इव चेलुः। तत्र काश्चन प्रियतमकण्ठ-दत्तबाहुकन्दिलीकाः, अन्या दयितपदचिह्नेषु दत्तनिजपदाः, अपरा प्रियसमव-लम्बितकराः, इतराः परिहृतमानाः सविलासं प्रकटितमन्मथविभ्रमास्तत्र विचेरुः। तासु काचिद् गान्धर्वस्थितितिरिव अपरा नाटिकेव, एका जलनि-निधिवेलेव, द्वितीया कैशिकी वृत्तिरिव, शोभां बभार। कान्ताया विलोचन-

पतितं यत्कुसुमरजः प्रेयान् मुखफूत्कारेण दूरीचकार तदेव सपत्न्या नेत्रयोः पीडामजनयत्। क्वचित्कृतागाः प्रियतमस्तदानीं तयैव कुसुमस्रजा प्रियतमया बद्धः। काचिन्मत्तकाशिनी निधुवनलालसां व्यांजीत्। अपरेंगितज्ञाऽभिकुञ्जं प्रियमनुससार। इतरा कोविदा कोविदारलीनां मधुकरपटलीं वीक्ष्य रलीनां (गोष्ठीनां) प्रस्तावं व्यतनुत।

एवं 'कुसुमविहारनाटकान्ते कमलदृशः काननांकाद्विष्कम्भस्थितिविशद-प्रवेशमार्गान्निर्जग्मुः।'

इत्थमुपवनविहारं कृत्वा 'प्रेयोभिः सममुच्छ्वसत्कुचभरक्लाम्यन्नितम्ब-स्थलीलीलामन्थरचारचारुचरणा नतांग्यः सुरस्यन्दिनीं मङ्क्तुं ययुः।' (११४)

## अष्टादशः सर्गः (जलक्रीडावर्णनम्)

स्व प्रियतमैः साकं सुन्दर्यो जलविहारं कर्तुं सुरनदीतीरे समायाताः। तासां स्वागतार्थमेव मन्दाकिन्या जलकणमुक्ता पूरितमम्भोजिनीपत्रपात्रं सन्दधे। काचिन्मिमंक्षुरत्यौत्सुक्य-प्रेरितेन जलेनोत्थायैव मन्ये सत्कृताऽऽलिंगिता च। काचिच्छृंगकैः प्रियतमशरीरे परकीयांगसंसर्गाल्लग्नमंगरागमसूययैव दूरीचकार। काचिज्जले स्थितापि सपत्नीनामश्रवणाद्दाहं प्राप। अन्या च शुष्कस्थाने (तीरे) स्थिताप्यानन्दोक्षितशरीरा बभूव। कांचित् प्रेयानम्भसोऽन्तर्गतः सन्नी-यिवान्, सा चेमं परमं प्रसादं ज्ञातवती। वीचिव्रातोऽपि नितरां प्रसन्न आसी-दत्त एव तु स्फीतफेनस्मितश्रीः स सौख्यमिदमनुभवति स्म। कापि जलविहारे भग्नत्वाद्विकीर्णैर्मुक्ताफलैः पद्मनालसूत्रमादाय हारं ग्रथितुमैहिष्ट। सत्यमस्ति मौग्ध्यभाजः कस्य विवेको भवति? युवति-स्तन-जर्जरितास्तरंगास्तीर-स्थितेभ्यो हंसेभ्य आश्रयदानाय गताः। युक्तमिदं यज्जडानां शक्तता निस्साम-र्थ्या एव भवति। तरंगैः कज्जले धौतेऽपि सुन्दर्या नयनयोः सौन्दर्ये काचिद् हानिर्नासीद्। वस्तुतो यत्कृत्रिमं वस्तु भवति तस्य विनिवर्तनान् मूलवस्तुनि किमप्यन्तरं नायाति। काचिज्जले प्रतिबिम्बिता स्फाटिकस्तम्भभित्तौ स्पष्टा-कारा पुत्रिकेव स्फुरन्ती अकाशिष्ट। काचित्सुभ्रूः कामकेदारभूमिरिव प्रियतम-पाणिक्षिप्तैरम्भः शीकरैराप्यायिष्ट।

एवं बहुशो विहारं कृतांगनाः प्रेयोभिः साकं बहिराजग्मुः सितानि वस्त्राणि च धारयामासुः।

| | |
|---|---|
| **एकोनविंशः सर्गः (दिवसावसानवर्णनम्)**<br>**विंशः सर्गः (चन्द्रोदयवर्णनम्)** | शीर्षकेणैव प्रतिपाद्यं स्पष्टम्। अग्रिमेऽध्याये विस्तरशश्चर्चा कृता स्यात्। |

## एकविंशः सर्गः (गौरीश्वरदेहार्धवर्णनम्)

एवं रजनीनाथस्य मनोहारिणीं श्रियं वीक्ष्य सौधोन्नतचन्द्रशालिकायामुपविष्टो भगवान् अंकगतां प्रियामभाषत—"यतो ह्ययं चन्द्रोऽत्रेर्नयनादुत्थितोऽतएव तस्य कृष्णवर्णकनीनिका-संस्पर्शादस्य मध्ये कार्ष्ण्यं समागतम्। सर्वथा निर्मलस्य जनस्य विभूतिं तामसा अवलोकयितुं न शक्नुवन्ति, अतएव चन्द्रमसं दृष्ट्वाऽन्धकारः क्वापि पलायितः। स्वनाथेन चन्द्रेन प्रदत्तं पाटलं प्रभासवम् उत्तानितकैरवानना कुमुद्वती सस्पृहं पिबतीव। 'अनेन चन्द्रेण कमलिनी कथं म्लानतां प्रापिते'तीव गुंजन् मधुपस्तं निन्दति। सत्यमस्ति 'सदानुकूले हि जनोऽनुरज्यते।' इयं कौमुदी 'नभःसमुद्रोदरफेनसंहति'रिव सर्वत्र प्रसरति।' एवमुक्त्वा स भगवान् सान्ध्यवेलाविधितत्परोऽभवत्।

'स्थिरांसपीठः स समाधिगोचरं चिराय दध्यौ किमपीन्दुशेखरः।' तमेतादृश्यां स्थितौ ध्यायन्तं वीक्ष्य 'कामेष ध्यायति' इति [illegible]चुम्बितचेताः पार्वती कोपकषायितां दृशं बभार।

सन्ध्योपासनानन्तरमीश्वरस्तां कोपान्मुखं परिवृत्य स्थितां वीक्ष्य बहुशः प्रसादयामास।

प्रसन्ना च सा स्वभवनाब्जनीगतां वियुक्तां चक्रवाकीं वीक्ष्य स्वविप्रयोगशंकया तस्य भगवतः शरीरेऽर्धस्थितिमयाचत। सोऽपि च वियोगभीतिमांस्तां स्ववपुषि निवेशयामास।

एवं शशांकशेखरो घटितसन्धिमात्मानं विधाय सभार्यः प्रमोदपरवशोऽभूत्। दृष्ट्वैतत्सर्वेऽपि पार्षदा विस्मयविस्फारितलोचनाः समभूवन्।

## द्वाविंशः सर्गः (समुद्रोल्लासवर्णनम्)

'एवमर्धदेहस्थित्यनन्तरमपीयं पार्वती मम प्रियतमायै गंगायै असूयतीति' कृत्वा सरित्पतिः समुद्रश्चन्द्रदर्शनव्याजेन क्षुब्ध इवाभूत्। मुहूर्तं स शान्त इव स्थितोऽनन्तरं च प्रचण्डवेगेनोत्थितः। स्वजलेऽर्धं चन्द्रस्य बिम्बं पुनरपि तरंगहस्तैराकाशे परिक्षिपन् सागरो गगनतलस्थमर्धचन्द्रं शेषेणार्धेन पूरयितुमेव, शंके, चिक्षेप। और्वानलसन्तापं शमयितुमेव, मन्ये, स तृष्णावशात् चन्द्रिकां पातुं विद्रुम-ताम्र-तालु प्रसारयति। आवर्तानां व्याजेन रत्ननिधानकुम्भोद्धरणात्तत्र गभीरा गर्ताः संजाताः। स नृसिंह इव तटाचल-दैत्य-वक्षस्थलं शुक्तिनखैर्विदारयन्निवासीत्। अभितः सरिदंगनाभिर्वृतः स क्रीडामिव करोति स्म। सरितश्च पश्चादागत्य परिहासविधित्सया कल्लोल-पाणिभिस्तस्य शुक्तिनेत्र-निमीलनमकुर्वन्। अतिजलपानान्मन्दीभूतं जठराग्निमिव समुत्तेजयितुं

तीरस्थ-तालीस-चूर्ण-निकरं तरगंहस्तैराकर्षति स्म ।

दूरारूढाः समुद्र-तरंगा बहुमूल्यान् मणीन् तीरेषु प्रक्षिप्य पादपानामनुकूलं मण्डलं चोन्मूल्य वाडवाग्नौ तथैव निपतिताः, यथोन्नतिं प्राप्यायोग्या जना अस्थान एव धनस्य दुरुपयोगं कुर्वन्ति, अनुकूलं राष्ट्रं (मण्डलं) चोन्मूलयन्ति । अन्ते च पतनोन्मुखाः संजायन्ते । 'के वा न प्राप्नुवन्ति व्यसनमुपगता विक्रियां जाड्यहेतोः' ?

**त्रयोविंशः सर्गः (प्रसाधनवर्णनम्)** )
**चतुर्विंशः सर्गः (विरहवर्णनम्)** )
**पंचविंशः सर्गः (दूतीसंकल्पवर्णनम्)** ) नाम्नैवेतेषां विषयः स्पष्टः ।
**षड्विंशः सर्गः (पानगोष्ठीवर्णनम्)** ) षष्ठेऽध्याये विशिष्य चर्चा
**सप्तविंशः सर्गः (सम्भोगवर्णनम्)** ) कृता स्यात्।
**अष्टाविंशः सर्गः (प्रत्यूषवर्णनम्)** )
**एकोनत्रिंशः सर्गः (भगवत्प्रबोधनम्)** )

संजाते प्रत्यूषे वन्दिनो भगवन्तं सुललितया गिरा समुपतस्थुः देव ! सम्प्रति शयनतलं विमुच्यताम् । एष भगवान् सविता उदयाचलमारूढः । प्रातस्तनेनानिलेन कमलिन्याः कुड्मलनयनं विस्फुरितं सद्दिवाकरेण तस्याः समागमं सूचयतीव । नवातपस्तरुणीनां गण्डमण्डलीषु निपतन् प्रेयोभी रजनीकृतां करजक्षतिमुद्भासयतीव । रात्रौ सुन्दरीणां कपोलेभ्यः पाण्डुरतामादायैवेमे भवनदीपकाः पीता इव संवृताः । कमलधूलिकषायितनेत्रश्चक्रवाकः स्वकीयां प्रियां न पश्यति । अहो ! चिरादुपनतमपि सुखं दुर्दैवविलसिताद् दूरं गच्छति । निशापगमसूचकदुन्दुभिस्वनेन जागृतापि वधूः प्रियतमकण्ठं न मुञ्चति ।

सूर्यस्यारुणाः किरणा दिगंगना नवकलधौतमेखलाः, नभस्तलोदधिवाडवानलत्विषः, निशातमः क्षितिधरवज्रकोटय इवाभान्ति । दिशि-दिशि प्रसरन् रागोऽरुणकरकृतटंकाहृतिभिरस्ताचल—भ्रमियन्त्रारोपितोज्ज्वलवपुषः सूर्यस्य गलितं धामेव प्रतीयते । अम्बुजकोषादुत्पतन्ती भ्रमरावली रविणा मंजूषाया आकृष्यमाणेन्द्रनीलमणिहारावलीव दृश्यते ।

एतस्मिन् काले किन्नर्यस्त्वत्सम्बन्धिनीं प्राभातिकीं गायन्ति कृपया शय्यामुंचनेनानुगृह्यतां लोकः ।

इमां वाचं श्रुत्वा 'प्रेयसीबाहुबन्धव्यतिकरकृतरत्नावापकव्यक्तचिह्नम्' कण्ठपीठं दधानो हरः सौवर्णिम् शय्यामत्याक्षीत् ।

## त्रिंशः सर्गः (मार्गविभागवर्णनम्)

अथ कालमुसलश्चन्द्रचूडस्य चरणौ समभ्यर्च्य नभोमार्गेणान्धकराजधानीं प्रति प्रतस्थे। गंगा-रेवा-यमुना-सौरभेयी-गोदावरी-सरितो ऽवलोकयन् वेणानदी-मासाद्य स सानुचरस्तत्र विश्रामकमकरोत्। ततश्च कावेरीं, चर्मण्वतीं सिप्रां, तमसां, ताम्रपर्णीम् चापि साक्षाच्चकार। मध्य एव हिमालयं, कैलासं, मेकलाद्रिं, सुवेलं, मलयं चापि सोऽवालुलोके। भागीरथ्यनन्तरमच्छोदसरोवरमपि स दृष्टवान्। ताम्रपर्णीमतीत्य कृतसन्निवेशः स जलनिधिं निरवर्णयत्। अनन्तरं क्रमशो गच्छन् स नाकमणिगोपुरतोरणं प्राप्तः।

## एकत्रिंशः सर्गः (स्वर्गाभोगवर्णनम्)

मेरुमुल्लंघ्य कालमुसलस्त्रिदिवोपकण्ठमाससाद। तत्र तेनैरावतः, वरुणस्य हंसाः, यमस्य महिषः, सरसाः, सरस्यः, रत्नवाप्यः, कल्पवल्ल्यः, नन्दनकाननं, कुरंगकुलानि, पारिजातादयश्चावलोकिताः। तदनु मणिहर्म्यपंक्तिस्तस्य दृश–माचकर्ष। विविध-वैभव-विभूषितेन्द्रपुरी चन्द्रिकाधवलैः केतनैः स्वकीयं यशो-ऽविरलं किरन्तीव प्रतीयते स्म।

## द्वात्रिंशः सर्गः (दूतव्याहारः)

अथ स गणाधिपोऽन्धकनगरीं प्राप। सा हि नगरीसकलगुणगणालंकृता दर्शकं चमत्करोति स्म। तस्याः सिंहद्वारं त्रैलोक्य–सन्निवेशस्य प्रत्यादेशमिव स्थित-मासीत्। दैत्येन्द्रविभूतिचमत्कृतस्य तस्यागमनं द्वारपालैरन्धक सेवायां निवे–दितम्। तैश्च दर्शितमार्गो दैत्येन्द्र-सदसि सोऽविशत्। कृतप्रणामश्च स स्वय-मन्धकेन निर्दिष्टासनो हेमपीठमध्यास्त।

लम्भितसत्कारं तं दैत्यराज उवाच-"कच्चिद् भगवान् कुशली? केन हेतुना वयं वृषकेतोः स्मृतिपथमागच्छाम येन स त्वामत्राप्रेषयत्?"

दूतः सादरं प्रत्यवदत्–"परमेश्वरो भवन्तमेवमाह, यदहं जगतः सृष्टिस्थि-त्योर्ब्रह्माणमिन्द्रं च नियुज्यादोसीनोऽस्मि संवृतः। सुरासुराणामन्वयस्थितिं सम्मानयितुं ब्रह्मा कश्यपं मनसा निर्ममे। स प्रजापतेरनुज्ञया विधिवद्दक्षकन्यका उपयेमे। दनुदित्यदितिषु क्रमाद् दानवदैत्य–देवाः संजाताः। तेषां पारस्परिकं विरोधं ज्ञात्वा स्वयमेव ब्रह्मणा दैत्य-दानवानां कृते पाताले, सुराणां च कृते सुमेरौ निवासः परिकल्पितः। एवं विभाजने संवृत्तेऽपि हिरण्याक्षहिरण्य–कशिपुभ्यां सुराणां राज्यमाच्छेतुं यत्नः कृतः परं तौ जनार्दनेन नामशेषौ कृतौ। एवमन्येऽपि विघ्नकारकाः संग्रामभूमावलूलुठन्। सम्प्रत्यपि काचिदव्यवस्थेव दृश्यते। अतोऽसुरैः प्रजापातकृता व्यवस्था स्वीकरणीया। भवतां शासनं

पाताले, सुराणां च स्वर्गे भवतु येनेन्द्रस्य भवतश्च प्रेम निरन्तरं वर्धताम् ।" एवमुदीर्य स दूतो दत्तदैत्येश्वरमुखदृष्टिस्तस्योत्तरं शुश्रूषुस्तस्थौ ।

## त्रयस्त्रिंशः सर्ग (भार्गवनिर्भर्त्सनम्)

दूतस्येदं गदितं निशम्य दैत्याधिराजो भ्रुकुटिनिर्देशेनैव भृगुनन्दनं प्रत्युत्तरयितुमादिदेश । शशिमौलिदूतस्य वाक्यं विचार्योशना एवं बभाषे "प्राग्दर्शितविभीषिकेण पश्चाच्च माधुर्यपूर्णेन ते संदेशेनास्माकं चित्तं विमोहितमेव । यस्मिन् चक्रायुधोऽपि विफलमनोरथः संवृत्तः, येनासकृत् सुरसंघा दयापरवशेन सता रणभूमौ परित्यक्ताः, यस्य प्रतापः सर्वत्र प्रसरति, किं तदनुयायिनः पातालवासमर्हन्ति उतास्मद्दयानिर्भरजीवनाः सुरेन्द्राः ?

शुक्रस्यैतद्दर्पपूर्णं वचो निशम्य दूतः स्वगभीरघोषेण सभागृहं गुंजयन्निदमुवाच "एषा भवितव्यतैव यद्दैत्याधिपतेः सभायां सद्भावनयापि प्रस्तुतं वचोऽन्यथा गृह्यते । मूढाः सर्वतः सरलमपि वस्तु कुटिलमेव पश्यन्ति । पिशाचाः शरच्चन्द्रगौरमपि गंगाजलं शोणितमेव मन्यन्ते । वेणौ सारल्यं भजमानोऽपि श्वासानिलः शंखोदरे कुटिलः संजायते ।

यदि मम वचो मान्यते भवद्भिस्तर्हि स्व नैत्रैरसुराणां विनाशं द्रष्टुमुद्यता भवथ । गरुडकेतनः सर्वान् वो विदलिष्यति । अथवा किं तेनान्यैर्वा गणनाथैरहमेव भवतश्चूर्णयितुमलम् ।" तस्येदं वचनमाकर्ण्य सा सभा क्षुब्धाऽभूत् ।

## चतुस्त्रिंशः सर्गः (अन्धकासुरसभाक्षोभः)

तस्यैतत्समुत्तेजकं वचो निशम्य सा सभा समुद्रवेलेव क्षुब्धा बभूव । अग्निदंष्ट्र-प्रह्लाद-मय-शतदुन्दुभि-विकुम्भ - अनलतारक-कलि-राहु-इन्द्रकेतु -वज्रबाहु-वह्निशिख-सुवाहु-क्षितसुत-सुर -विदर्भ-हिरण्यनेमिः-इल्वल-धूम्रकेतु-शरभ-विन्ध्यासुर-कालचक्र-अतिमाय-अजित-दुर्दर्शन-तारक-धुन्धु - वज्रप्रभ –केतुमान् वज्रानल–जीमूतकेतु–मूक–अमर्षण–व्यंसासुर–सहस्रमाय–अशनिप्रभ–सूचिरोम–विप्रचित्ति–कांचनाक्ष–प्रभृतयोऽसुराः करतलाताडितांसकूटाः, संरम्भस्फुरदरुणेक्षणाः, विकटाट्टहासबधिरीकृतसप्तलोकाः चुक्षुभुः । सब्रह्मधूर्जटिहरींस्त्रिदशान् तृणं मन्यमानास्ते ब्रह्माण्डमुत्पाटयितुमिव सन्नद्धाः समभूवन् ।

एतस्मिन्नवसरे बहूनि दुर्निमित्तानि प्रारब्धानि । परं तानि पुरन्दरश्रीहरणकृतनिर्बन्धा असुरा नाजीगणन् ।

## पंचत्रिंशः सर्गः (अन्धकासुरव्याहारः)

एवं क्षुब्धेषु गणपतिषु दैत्यनाथः परुषाक्षरभित्यवादीत् — 'दैत्याः, भवन्तः कथमस्य वराकस्य वचनं श्रुत्वा समाकुलाः संजाताः ? किं शिखरिणः पतत्रि

पक्षव्याधूता वेपन्ते ? अनेन यज्जल्पितं तत्तु नितान्तमुपेक्षणीयम् । यदा दैत्यैः सुरेन्द्रस्य सर्वमपि वस्तुजातमात्मसादकारि तदा शिवस्तस्य गणा अथवा नन्दी क्व आसन् ? मा पुनरपि शक्रस्य भयात्पकंजकोषे स्थितिर्भूत् । मदीयं धनुष्टंकारं श्रुत्वार्धनारीश्वरस्य धैर्यं विलीनं भविष्यति । विष्णुरपि सर्वां रसिकतां परित्यक्ष्यति । ब्रह्मापि विगलितधैर्यो भविष्यति । अहं तु कालरात्रिमपि धूमवर्तिकामिव पातुं क्षमः । सुरसैन्यमहं मरुमार्गजलायमानमिवावलोकयामि । दण्डनीतौ मदीयो विश्वासः । निसर्गमहतां हृदि पूर्वमिच्छैव जागर्ति उपायघटना च पश्चाद् भवति । वीराः कृपाणपट्टांस्तीक्ष्णीकुर्वन्ति यदा भीरवो नीतिमार्गेष्वेव विचरन्ति । ये त्वभिदधति यत्क्रमशः सामादिप्रयोगः करणीयस्तेऽतत्त्वविदः । प्रथममेव चरम उपायः कथन्नाश्रीयते ? यदि भवतां 'नीतिविषूचिका' पुरुषार्थं विना कार्यं करिष्यति तदा तु वन्ध्यासुतः शशविषाणधनुषाऽवश्यमेव बाणान् मोक्ष्यति । विना पौरुषं नीतिर्विफला । अतः प्रवञ्चनामयी नीतिं परित्यज्य शौर्यं प्रदर्शयन्तु । वीरभोग्या वसुन्धरा ।"

एवमाभाषमाणेऽन्धके कांचनाक्षो विवक्षापरवशश्चुक्षुभे ।

## षट्त्रिंशः सर्गः (कनकाक्षनयोपक्षेपः)

अन्धककथनस्य प्रशंसां कुर्वाणः कनकाक्षो जगाद — "दैत्येन्द्र, भवानेव निखिलमपि सुरसंघं धूलिसात्कर्तुं समर्थः । वडवानलमन्तरा सागरस्य जलं भस्मीकर्तुं कः समर्थः ? यत्सत्यं तव वचः श्रुत्वाऽहं त्वंचितरोमांचकंचुक एव संवृत्तः । एतादृग्वचनं प्रकाशयितुं भवानेव प्रभुः ।

तथापि ममाप्यल्पज्ञस्य वचनं श्रोतव्यम् । येन नृसिंह–वराहादिरूपं धारयित्वा दैत्यानां कदर्थनं कृतं स विष्णुर्भवद्भिः कथं विस्मर्यते ? कथं च न स्मृतिपथमायान्ति तदीयानि कौमोदकी-नन्दन-सुदर्शनादीनि शत्रुभयकारीणि शस्त्राणि? कथं च विस्मृतो वैरिहृदयकम्पयिता स पाञ्चजन्यः ? स तार्क्ष्योऽपि चिन्तनीयः तस्येन्दुमौलेर्भीषणं भ्रूभंगं सोढुं युष्मासु कः सन्नद्धः ? सा रणचण्डी केन रोद्धव्या ? तस्य गांगायनेः (गणेशस्य) भयंकरवज्रपातात् को नामशेषो भवितुमिच्छति ? स्कन्दस्य शक्तेः प्रतिरोधः केन कार्यः ? को वा शिलादतनयस्य शूलं युधि सोढुं क्षमेत ? चण्डेश्वर–क्रोधेश्वर–वीरभद्राणां क्रोधस्य कवलो भवितुं क इच्छति ? अन्येऽपि बहवस्तत्रैवंविधाः सन्ति । तेभ्यो मे भयं नास्ति न च नीतिं वदतो मे तेषु पक्षपातोऽस्ति अहं तु व्यावहारिकतां लक्ष्यीकृत्य वार्तां करोमि । नीतिरहितं पौरुषं श्लाघनीयम् न। अतो मृगांकशकलाभरणस्य वाक्यं सम्मान्यताम् ।'

## सप्तत्रिंशः सर्गः (वज्रबाहुविस्फूर्तिम्)

कनकाक्षस्यैतद्वचोऽसहमानो वज्रबाहुरवोचत् — "यत्संप्रत्येव भवद्भिः श्रुतं तस्मिन् बिभीषिकैवाधिका । यदि विभीतकस्य पुष्पं मधूकपुष्पमनुकरोति किं स तस्य परागसौरभमपि स्वस्मिन्नापादयितुं समर्थः ? अतो देवाः किमस्मत्तुल्याः ? ये तानस्मत्तुल्यान् स्वीकुर्वन्ति स्वपक्षस्य च मनोबलं दूषयन्ति तेऽस्मात्स्थानात् प्रयान्तु । दोर्दण्डार्जितलक्ष्मीका अस्मद्वीरा केन जेतुं शक्याः ? सैंहिकेयस्य सम्मुखे कः प्रमथःस्थातुमीशः ? सुबाहोर्वा साम्मुख्यं कः कुर्यात् ? अथवा ममैवेतेन करवालेन हरो विगलितमदो भवितुं किं न विवशो भविष्यति ? येषामपि—तार्क्ष्य—चण्डी—गणेश—चण्डेश्वर नन्दीवीरभद्रादीनामुल्लेखः कृतस्तानपि सर्वानहं चूर्णपेषं पेष्टुमलम् । मे गर्जनं श्रुत्वा शत्रुलोकोऽभिमानमवश्यं त्यक्षति । सिंहस्य शब्दं श्रुत्वैव दन्तियूथो विगतमदो भवति । 'संख्यं सुरैरसुरराजकुलस्य कीदृगेकीभवन्ति न हि केसरिणः कुरंगैः ।' एवमाभाषमाणो वीरैः प्रशंसितः स तूष्णीमुपविष्टः ।

## अष्टत्रिंशः सर्गः (दूतप्रतिगर्जितम्)

वज्रबाहुविस्फूर्जितमेतच्छ्रुत्वा राजनीतिचतुरो दूतः स्वकीयवाक्कौशलं प्रदर्शयंस्तानुवाच— 'यद्यपि दैत्य, भवता स्वबुद्ध्यनुसारं बहु सुन्दरं भणितं तस्य प्रशंसामपीमे सभासदः कुर्वन्ति परमेतेनैव स्वकीयमभिभाषितमवितथं मा मनिष्ठाः । यतोहि— 'विवेकभाजो विरला हि लोके व्यतीतसंख्या ननु सन्ति मूर्खाः ।' नीचाः स्वकीयां प्रशंसां कुर्वन्त्यन्येषां च गर्हणाम् । ये परगुणान् ख्यापयन्ति तेभ्यः सज्जनशेखरेभ्यो नमः येषां चित्तं सत्पुरुषाणां गुणानभि सासूयं तान् खलान् धिक् ! कालवशाद् ये देवा भवद्भिर्जिताः स एव भगवान् कालः सम्प्रति भवतां प्रतिकूलः संवृत्तः । संसारे नित्यं किमपि नास्ति । अतएव जय—पराजययोर्विषयेऽपीदमित्थंतया किमपि वक्तुं न शक्यते । यतः 'क्रोडीकृतं जगदनित्यतया हि सर्वम् ।' क्व हिरण्याक्षः ? क्व हिरण्यशिपुः ? क्व बलिः ? क्व मधु—कैटभौ ? क्व वेतरे दैत्येन्द्राः ? सर्वेऽपि मृत्युमुखं प्रयाताः । पुनरपीतिहास आत्मानं परावर्तयतीव । अचिरादेव दैत्या भगवतो हरस्य साम्मुख्यमासाद्य तिरोहितगर्वा भविष्यन्ति । सम्प्रत्येव यन्नाहं गेहेनर्दिनां भवतां श्रियमपहरामि तस्य कारणमेतद्यन्मया भगवत आज्ञा न लब्धास्ति ।' इति प्रगल्भमाक्षिप्य स शशिखण्डमौलिदूतः सभामत्याक्षीत् ।

## एकोनचत्वारिंशः सर्गः (सैन्यसम्भारः)

प्रत्यावृत्य कालमुसलेन सर्वमपि वृत्तजातं भगवते निवेदितम् । तस्यानुज्ञया नन्दिना सर्वेऽपि प्रमथाधिनाथाः स्मृताः । आगताश्च ते दिदृक्षवे ईश्वराय

निवेदिताः। कथितं च नाथ, रणोत्सुका इमे भटा अवलोकनीयाः। इमे सर्वेऽपि दैत्यान् दलयितुं सन्त्यातुराः। ब्रह्मा, विष्णुः, इन्द्रः, यमः, वरुणः, रुद्राः, वसवः, विद्याधराधिपतयः, ससिद्धसाध्या विश्वेश्विनौ, चन्द्रः, सूर्यः, सतरंगिणीकाः सप्तसागराः, पर्वताः, संवर्तवारिदघटाः, उरगाः, चण्डी, ब्राह्मी, वैष्णवी, त्रैयम्बकी, चामुण्डा, चान्द्री, कालरात्रिः, काली, चेमे सर्वेऽपि ससम्भारा भवत्सेवायां समायाताः सन्ति।'

एवं नन्दिनो वाक्यं निशम्य प्रभुणा ते सर्वेऽपि स्वावासभूमीर्गन्तुं तन्मुखेनैव विज्ञापिताः।

## चत्वारिंशः सर्गः (सैन्यसंरम्भः)

अथ संवृत्ते प्रभाते विविधमागधसूतवाग्भिः प्रबोधित ईश्वरः समक्षे आस्फालयन्तं सैन्यसिन्धुमवालुलोके। प्रस्थानदुन्दुभिरवस्तत्र व्यजृम्भत। गौरी तस्य देहार्धं विगलितभीरुभावत्वादेव, परित्यज्य बहिर्निर्गता युद्धार्थं च समुद्यता। सर्वेऽपि पूर्वोक्ता देवा युद्धाय सन्नद्धाः। शस्त्राणि स्फुरन्ति स्म। वाहनानि च सज्जान्यासन्। एवं स्थितेऽवलाजनो बलवदाकुलतां जगाम। मंगलभंगभीरुतयावरुद्धा अपि वाष्पलेशा बहिराजग्मुः। ता अतिमात्रं गद्गदहृदयाः समजायन्त। कथमपि ताभिर्मुच्यमाना वीरा समरोत्कण्ठया पुर्या निर्ययुः।

## एकचत्वारिंशः सर्गः (सैन्यप्रस्थानम्)

तस्माद् गिरिकटकान्ताच्छम्भुर्निर्जगाम। वैष्णवी शंखं दध्मौ। सैनिकानां कीर्तितरंगिणीभंगा इव पताका उद्धूयन्त। सैनिकौघाश्च सोत्साहा अप्रातिष्ठन्त। चतुरंगिणी चमूः स्ववैभवचमत्कृतलोकाऽग्रे ससार। शेषनागः कथमपि धरणीं धारयामास।

गव्यूतिमात्रं गत्वा शिविरं परिकल्प्य सा सेना स्थिता। तत्र गजा वृक्षेषु निगडितचरणाः कृताः। ध्वजिन्यः शिखरिकटकभूमीरध्यवात्सुः। केचन युवतिभिरनुयाताः पर्वतप्रान्तान् भेजुः। केचन सैनिका अश्वानारुह्य मृगयायां प्रवृताः तत्र मृग-वराह-गज-गण्डकादीन् बहुशो निहृत्य सादिभिर्मुक्तपर्याणपट्टा अश्वा भूमौ ववलुः। नाकसरिति च मङ्क्तुमवतीर्णाः। गजा अपि जलक्रीडामकुर्वन्।

सर्वासु दिक्षु शंकरस्य सेना प्रासरत्। कृतविश्रमा च साऽग्रे ससार। तत्र रत्नसानोस्तटे व्यूहरचनां कृत्वा, दैत्येन्द्र-सेना-निर्याणस्य प्रतीक्षां कुर्वन्ती, दिशिदिशि प्रसरच्चित्रवादित्रघोषा सा तस्थौ।

## द्विचत्वारिंशः सर्गः (समरोद्घातवर्णनम्)

तत्र शंकरकृताभियानेन ज्वलिता इव दैत्यराजस्य सेनास्तत्सैनिकैः समरलालसया सम्मिलिताः। तयोस्तत्र शस्त्राशस्त्रि, हस्ताहस्ति, केशाकेशि च युद्ध-

मभूत् । गजसेना शुण्डाशुण्डि स्वकीयमनुपमं कौशलं प्रदर्शितवती । रण-राक्षसो बहुभिर्मुखैः सैन्यं ग्रसितुमिव स्थितः । सैनिकैरसिभोगिभी रक्ष्यमाणो निधिरिव श्रीरासादिता । गजस्य दन्तयोरुपरि स्थितो वीरः प्रतिगजस्यांसदेशे स्थितं भटं स्वापेक्षया नीचैर्वर्तनात्स्वतेजसैवाधःकृतमज्ञासीत्तएव च तुतोष । संग्रामभूमिः, सुभटानां पतितैः शिरोभिः, स्वर्गं जिगमिषूणां वीराणां सम्भावनायां समरश्रिया स्थापितैरिव घटैः शुशुभे । परस्परं खड्गानामभिघाताद्यद्रजः समुत्थितं, मन्ये, तदप्सरसां वशीकरणाय चूर्णमेवासीत् । भटानवलोक्य का अप्सराः समर्पित-हृदया न संजाता ? युधि घूर्णितं योद्धारं वीक्ष्य कण्टकितगात्रा सुरांगना निज-विमानभुवो नितान्तं दुर्वहदेहा बभूव ।

इत्थं सुरासुरसेनाः परस्परं, जयकामनया, जघटिरे ।

**त्रयश्चत्वारिंशः सर्गः (चित्रयुद्धवर्णनोद्घातः)**

सुमाली-तारकाक्ष-केतुमाली- वज्रनाभ-वज्रकेतु-धूम्राक्ष- विद्युज्जिह्व-सुन्द-सूचिरोम-रुरु-प्रह्लाद-शरभ-सूचिरोम-केतुबाहु-अशनिप्रभ-सुकेतु—तार-सुतार-ज्वा-लाजिह्व-प्रभृतीनां निशाचराणां, नन्दी-पुष्पदन्त-प्रभंजन- स्कन्द-चण्डी-वैष्णवी—कालरात्रि-माहेश्वरी- ब्राह्मी- ऐन्द्री-शिव-इन्द्र- बलराम-हरि- अनिरुद्ध-गणेश-गरुड प्रभृतिभिः साकं चित्रं तुमुलयुद्धमभूत् ।

**चतुश्चत्वारिंशः सर्गः (गजाश्वसम्मर्दः)**

रणभूमौ गजाश्वसम्मर्दो महानभूत् । एकत्र कश्चिद् वीरः शत्रुं हन्तुं प्रतिपक्षगजस्य दन्तदण्डयोः प्रतिष्ठितचरणोऽप्सरोभिर्देवैश्च श्लाघ्यमानो ऽदृश्यत । अपरत्रान्यत्करिदानमाघ्रातुमूर्ध्वीकृतशुण्डादण्डो हस्ती वीरं ग्रहीतुम-वतरन्त्या नाकनार्याः कृते हस्तावलम्बनमिव कुर्वन्नवलोक्यत । एकत्र रक्तरंजिता विन्ध्यशैलानुकारिणः,अन्यत्र नाराचभिन्ना दरीमुखविनिर्गतदावदहनज्वालाकलाप-विकटाञ्जनशैलशोभां धारयन्तः, परत्र च करवाल-कृत-शुण्डादण्डाः, कर्णैः कालस्य तालवृन्तश्रियमादधाना गजाः समदृश्यन्त । शत्रूणां शिरांसि छिन्दन्तः, शरानविरतं वर्षन्तः, हेताहेति प्रहरन्तः, मृत्युमविगणयन्तो वीरा कायरेष्वप्युत्साहं सञ्चारयामासुः । तुरंग-खुरैरुत्थिता भूराकाशं पर्याकुलमकरोत् । वाजिनां वल्गनैः, रथानां चलनैः, कुंजर-कुलानां धावनैश्च तत्रत्यं वातावरण भयावहतां बिभर्ति ।

**पंचचत्वारिंशः सर्गः (सुभटसन्दीपनम्)**

देवानां प्रहारैः रणविमुखानवलोक्य स्व सेनापतीनन्धकस्तान्निभर्त्सयामास प्रबोधयामास च—"दैत्याः ! परैर्मुषितकीर्तयो क्व गच्छथः ? युष्मान् प्रपलायमानान् सेना सघृणं पश्यति । युष्माकं व्रणशून्या बाहुदण्डाः स्वप्रेयसी-नामुपधानतां कथं यास्यन्ति स्वकीयं व्रणितं पृष्ठं स्ववधूजेनभ्यो दर्शयतां युष्माकं

मनांसि किं लज्जामन्थराणि न भविष्यन्ति ? तेजस्विनस्तु विनापि पर्याप्तोपादानं स्वकीयं पौरुषं प्रदर्शयन्ति । सप्तभिरेव शिखाभिर्दहनः प्रलयकाले लोकान् भस्मसात् करोति । लोका तावदेव जीविताः समादृताश्च मन्यन्ते यावत्तेषां चन्द्रमरीचिगौरं यशोऽवतिष्ठति, अपगते च यशसि तेषां मूल्यं विकसितकुसुमरहितस्य शिखाग्रभागस्येव भवति । यूयं स्वरूपं कथं विस्मरथः ? संसारे किमेतादृशं यद्युष्माकं कृतेऽसम्भवं भवेत् ? पुरुषत्वहानेरपरं किमपि दुःखं नास्ति । किमिति युष्माभिः संग्रामोत्सव उपेक्ष्यते । भयं परित्यज्योत्तिष्ठत । शत्रून्नामशेषान् कुरुत ! युद्धक्षेत्रे मरणं जीवन-शतादपि श्लाघ्यतरम् ।

तस्येदं प्रेरणादायकं वचनं श्रुत्वा निर्दयै राक्षसैः प्राणानविगणय्य तादृक् प्रचण्डं युद्धं कृतम् येन रणभूमिः कबन्धैः, शिरोभी रक्तवसामांसैश्च पूरिताऽऽभवत् ।

## षट्चत्वारिंशः सर्गः (चण्डिकासमराक्षेपः)

दैत्यैः कदर्थ्यमानान् स्वगणान् निरीक्ष्य हरो भृशं चुकोप । तेन सटकांरम् रिपूणां विनाशाय धनुराचकृषे । देवसेना स्व प्रराक्रमं प्रदर्शितवती । दैत्याश्च कान्दिशीकाः संवृत्ताः । अन्धकस्य शरवर्षाः स्वयंप्रभनामकेन गणेन विमुखीक्रियते स्म ।

रुद्रेण संहारिताः शत्रवो जर्जरिताः संजाताः । अन्धकः शिवस्य वक्षस्थलं लक्ष्यीकृत्य बाणमोक्षं चकार । शिवेन च तस्य धनुर्भग्नम् । एतद् दृष्ट्वा सुरसंहतिस्तं तुष्टाव ।

स्कन्द-गणेशाभ्यामपि शत्रुसंहारः कृतः । एतस्मिन्नन्तर एव हरिरपि सिंहनादमकरोत् । तेन च दैत्या दैन्यं प्रापिताः । चामुण्डा दैत्यानदीदलत् । रणोर्वी चण्डिकाया विकट करवालकृत्तैर्भट-शिरः स्कन्ध-कबन्धैर्व्यापृताऽभूत् ।

## सप्तचत्वारिंशः सर्गः (चण्डीस्तोत्रम्)

दलितासुरचक्रवालां चण्डीं विलोक्य देवैर्बहुभिः प्रकारैस्तस्याः स्तुतिः कृता । स्तुता च सा पुनरपि दैत्यानायुधैर्गतासून् कर्तुमारेभे ।

## अष्टचत्वारिंशः सर्गः (चित्रयुद्धवर्णनम्)

देव्या आघातं परिहरन्तः केचन दानवदैत्यनाथा भगवन्तं विष्णुमभ्युपेयुः । तान् दृष्ट्वा स युयुत्सुरभवत् । खड्गपातात्तस्य सौवर्णवर्मणोऽमर्षवह्नेः स्फुल्लिंगा इव स्फुल्लिंगा निरीयुः । कवचमुक्तस्यत स्य संहृतानां देवदानवानां बाणः शरीरं तु विभिदे, धैर्यं तु न । ताक्ष्यें स्थितः स शार्ंगपाणिररीन् ममर्द । मुद्गरपात-भिन्नकरीन्द्र-कुम्भस्थलैर्निर्गच्छद्भिर्मौक्तिकैर्धराच्छन्नऽभूत् । तत्खड्गैः कृत्ता गजानां शुण्डाः समवर्तिराजधान्या भाविनः स्तम्भा इव भूमावपतन् ।

तदा सूर्योऽपि तस्य तेजस्विनः साम्यं कर्तुं प्रभुर्नाभूत् ।

तदा सुराधिपेन ससैन्येन प्रभामयस्य सेनावरुद्धा । इदं दृष्ट्वा हरिणा स्वकीयः करालः करवालस्तेषु निपातितः ।

अप्सरसो वीरान् वरीतुं संग्रामांगणे आकाशादवतीर्य भ्रमन्ति स्म । एका शिवादूत्यपि ताभिः साकं सम्मिलिताभूत् ।

खड्गाघातेन विघूर्णितमूर्धा कश्चित्करीन्द्रः स्वकरमुत्थाप्य, मन्ये, वीराय स्वर्गसोपानपंक्तिमिवादर्शयत् । हरेस्तं पराक्रमं निरीक्ष्य ते दैत्यास्तदा रणे वीततृष्णा बभूवुः ।

तदा काली अपि स्वानुचरीभिः साकं युद्धभूमौ समवातरत् । कात्यायनी स्वद्वादशभिर्भुजैः समरे व्यराजत । प्रभामयेन प्रताडिता राक्षससेना पृष्ठतो गता ।

ततो वज्रबाहु-सेना प्रलयसागरवेलेव तत्रायाता । तुमुलं युद्धमभूत् । गणेशेन स्वपराक्रमः प्रदर्शितः । इतश्च मायासुरः सुरान् बबाधे । तदा पिनाकी शत्रूणां दमने सन्नद्धोऽभूत् । स केवलं कुंजरानेव विहस्ततां न प्रापयामास, अपितु तत्स्वामिनोऽपि । तत्र कृपाणाः कालकूट-लेखा-विभंगैरिव स्फुरिता अभूवन् । जगत्त्रयस्य संहारवेलैवोपस्थिता ।

सूर्य-चन्द्र कुबेरादिभिरन्यैश्च बहुभिर्देवैर्वीरायितम् । कश्चिद् वीरः साधक इव गजस्य कुम्भकूटेषु हुंकारैरभिजप्येव शंकून् निश्चखान ।

ततो धूलि-वितान-स्थगितेऽन्तरिक्षे संजाते पाक-विपाक-संज्ञौ दैत्याधिपौ युद्ध कामनया समागतौ । तावपि विगतमदौ कृतौ ।

इत्थं रत्नसानौ दैत्यैः साकं देवानां 'रम्यसंग्रामलीला' जजृम्भे ।

## एकोनपंचाशः सर्गः (सुरासुरविमर्दनम्)

अथ विष्णुः संग्राममूर्ध्नि अरातीनां विनाशाय पाञ्चजन्यं दध्मौ । अस्य सेनाभिरपि स्वघोषैः दिशो गुंजिताः । ताक्ष्यों मधुसूदनं पृष्ठमारोप्य नभस्युत्पपात । रणकाननोर्व्याम् मण्डलाकृति तस्य धनुस्त्रिदिवैस्तदीय कीर्ति-लताया आलवाल इवावलोकितः । समरांगणेऽयं लीलावराटिकाभिः क्रीडद्भिः प्रतिपक्षिभटैः शर-दार्यमाण-सेना-द्विरद-कुम्भ-स्थली--च्युतैर्मौक्तिकैः दुंरोदरमिव चिक्रीड । युद्धक्षेत्रमन्तकस्यास्थानमण्डपमिव बभूव । तस्य बाणैश्छिन्ना दैत्यसेना युद्धभूमावलूलुठन् । रणं दिदृक्षव आकाशचारिणः प्रतिदिशं तस्तम्भिरे । दैत्यसेना भयार्ता युधि स्थातुं न शेकुः । ततो यातुधानाः समायाताः । तत्र युद्धे काचिद् यातुधानी खड्गछिन्नकरिकर्णतालेन मूर्छितं भटमुपवीजयति स्म । नृत्यन्तः कबन्धा रणे भीतिं जनयन्ति स्म । नाकनार्या कम्पितं हृदयं, शुष्कोऽधरः,

वलितभंगं भयात्सदपि तस्या मन्मथविभ्रमिव द्योतयति स्म ।

कश्चिद् मूर्छितो वीरस्तूर्यशब्देन जागर्ति स्म । युद्धं स्व काष्ठां पस्पर्श । एतस्मिन्नेवावसरे 'वियोगभयविह्वलचक्रवाकसंघातकातरतरेक्षणपातपीत' इव सूर्यः पुण्यक्षयात्स्वाम्बुधौ पपात । भगवान् शंकरोऽपि सन्ध्योपासनादिकं चकार ।

तावत् द्युवल्ल्याः किसलय इव सान्ध्यरागः, पुष्पनिकर इव ग्रहौघः, फलबन्ध इव च सुधादीधितिः शोभामवाप ।

अभ्युदिते शशिनि, निरस्तेऽन्धकारे पुनरपि ते सुरदैत्ययोधा युद्धरता अभूवन् परमस्मिन् वारे देवानां शक्तिर्दुर्बलासीत् ।

## पंचाशः सर्गः (देवदेवप्रतिष्ठापनम्)

लोकपालैः सह देवेषु भग्नेषु मदमत्तोऽन्धको भगवन्तं शंकरं सरोषमाह— "भो ! मया पराजितानिमान् विष्णु-ब्रह्म-इन्द्र-इन्दु-सूर्य-कुबेर-यम-वरुण-अग्न्यादीन् पश्य । मम भयादिमेऽकिंचित्कराः संवृत्ताः ।" तस्यैतद्वचनं निशम्य भगवता सूतस्तीव्रगत्या रथं चालयितुमुक्तः । तेन च रथो द्रुतगत्या मुक्तः । इतो, भवितव्यतावशादन्धकस्य रथो न चचाल, यमराजस्य दूत इव चैको गृद्धस्तत्पताकामध्यास्त, जलभृतश्चास्रं मुमुचुः, पृथ्वी चकम्प, पिशाचाश्च प्रलयसूचकमट्टहासमकुर्वन् । परं धैर्यशालितया सर्वाण्यप्येतान्यवधीर्य दुर्निमित्तानि स रथारूढो विजयाय निश्चितस्य शिवस्य सम्मुखमागतः । तथा विविधवाद्यानि तत्र युद्धस्य गम्भीरतामवर्धयन् । अप्सरसः समुपेत्य संग्राममागलिकं जगुः, शिवस्य शिरसि चाकाशात्पुष्पवृष्टिः पपात । सर्पराजस्तस्य धनुषो मौर्वीत्वमुररीचकार । तेन किरीटरूपे इन्दुर्धारितः । युद्धं च प्रारब्धम् । अन्धको मार्तण्डमण्डल इवाम्बरमार्गे लगति स्म । तेन मृगांकमौलिर्बाणेन वक्षस्यहन्यत । भगवतापि 'तिष्ठ' इति कथयित्वा तस्य जत्रुसीम्नि बाणप्रहारः कृतः । तयोस्तुमुलं युद्धमभूत् । अथ धनुर्विततयान्धकः सोपालम्भं साधिक्षेपं च भगवन्तमुवाच "बटो ! सम्प्रति तिष्ठ ! क्व गन्तासि ? अहं कुसुमशरो नास्मि न च दुर्बलघाती गजासुरोऽस्मि, अहं तु कालोऽस्मि । वेतालताल-सहिता नृत्ययोग्या श्मशानभूमिरन्यास्ति 'भटचण्डचक्रदोर्दण्डदर्पनिकषोपलपट्टिकाश्रीः' संग्रामभूमिश्चान्या । एवमभिधाय स भगवतो वक्षसि ज्वलितान् पञ्च बाणान् निचखान येन भगवान् किंचिद् विचलित इव संजातः । भगवता षण्मुखे दृष्टिः पातिता । अथानेके योद्धारोऽन्धकं प्रति धाविताः परं सर्वान् संस्तभ्य स पुनरपि पंचभिर्बाणैश्चन्द्रचूडं जघान । शिवस्य ज्यामपि चिच्छेद । ततः शिवः महाभयंकरं त्रिशूलं जग्राह । त्रिलोकीमपि कम्पयता

तेनान्धकासुरस्य सर्वेऽपि निशिताः शरा भस्मसात्कृताः प्रतीकारं कुर्वाणोऽन्धकोऽपि त्रिशूलधारिणं गदया जघान। तया गदया शंकरस्य सतुरगध्वजसूतचक्रं स्यन्दनं जज्वाल। रथविहीनं च तं जिघृक्षुः स दैत्यनाथोऽन्तरिक्षमुत्पपात। आकाशाद् गुरुवेगादापतन्तं तं त्रिशूलपाणिर्हेलयैवाशेषदैत्यांगनाजनहृदयैः साकं बिभेद। तदा घोररवेण बधिरितकर्णा त्रिलोकी संवृता। तस्य वक्षसो निर्गतं रक्तं तत्प्रतापाग्निदग्धानां जगतां शान्तिं सम्पादयामास। तद्वक्षपतितं रुधिरं कपाले गृहीत्वा चामुण्डा पपौ येन च तद्बिन्दुभिरुत्पद्यमाना असुरसंहतयो निर्मूला संजाताः। त्रिशिखदहनेन भस्मसात्कृतादथ तस्य शरीरादेकं प्रचण्डं ज्योतिर्निर्गत्य सुरासुरेषु पश्यत्स्वेव भगवतः शरीरमाविशत्। तेनैकवारं पुनरपि जगत् पीडयन् संग्राम-सागर–कालकूटोऽन्धकः स्वयं ग्रासीकृतो राज्य–लक्ष्मीश्च हरये प्रदत्ता। लोकपाला यथायथं प्रजाः पालयितुमादिष्टाः मृतं सैन्यं चोज्जीवितम्।

सिद्धसाध्यास्तमन्धकान्तकं तुष्टुवुः। अमरांगना मंगलं जगुः। सर्वे च मोदमवापुः। प्रणतान् त्रिदशगणपतीन् सोऽभीष्टवरप्रदानैः सम्भाव्य देव्या साकं स्वपुरीं ज्योत्स्नावतीमध्यतिष्ठत्।

(क) कथानकस्य स्रोतः

शिवपुराणस्य द्वाचत्वारिंशाध्यायादारभ्यैकोनपंचाशततमध्यायं यावदन्धकासुरस्य जन्मादिकथा वर्तते। यस्याः सारांशोऽधस्ताद्दीयते :

कथायाः प्रारम्भे महामुनिर्व्यासो भगवन्तं सनत्कुमारं परिपप्रच्छ—"भगवन्, अयमन्धकः कः? कस्यान्वये कस्मादुत्पन्नः?" इति। तदा सनत्कुमार उवाच :

"एकस्मिन् दिने भगवान् शंकरो भगवत्या पार्वत्या सार्धं विहारं कर्तुमिच्छन् स्वावासं कैलासं परित्यज्य काशीपुर्यां समागत्य भैरवसंज्ञकं वीरं नगरीरक्षकत्वेन नियोज्य सुचिरं नानाविधा क्रीडा अकरोत्।

कदाचिद्भगवानाशुतोषो मन्दराचले विहारकामनया शिवासमेतः प्रविश्य कृतकौतुक उपविष्टः, शिवया च नर्मक्रीडया भगवतो नेत्रनिमीलनं सलीलं सम्पादितम् शम्भोर्ललाटतटाच्च प्रस्वेदबिन्दवः प्रादुर्बभूवुः। ततश्च :

गर्भो बभूवाथ करालवक्त्रो भयंकरः क्रोधपरः कृतघ्नः।
अन्धो विरूपी जटिलश्च कृष्णो निरंतरो वैकृतिकः सुरोमाः॥
गायन्, हसन्, प्ररुदन्, नृत्यमानो, विलेलिहानो, घनघोरघोषः।
जातेन तेनाद्भुतदर्शनेन गौरीं भवोऽसौ स्मितपूर्वमाह॥[1]

---

1. शि०पु०, अ० ४३, श्लोकौ १९–२०.

भगवान् शंकरः पार्वतीमेवं पृच्छ्यमानां प्राह—"देवि ! त्वया मम लोचने निमील्य कथमिदमनुचितं कार्यं कृतम् ? इदानीं च किमिति वेपमान-काया तिष्ठसि ? साम्प्रतं मम स्वेद-विन्दु-समुद्भूतो लोचननिमीलनाच्चाय-मन्धकाररूपोऽन्धकसंज्ञया तव पुत्रो वर्तते इति स्वगणेभ्यः सखीसमेतया त्वया-स्य रक्षा कार्या ।"

क्रमशो विवर्धमानोऽन्धकोऽयं प्रतिदिनं बलवान् सञ्जातः । एतस्मिन्नेव व्यतिकरे हिरण्याक्षो बलवतः पुत्रस्य कामनया भगवन्तं महेश्वरं द्रष्टुमरण्यमा-श्रित्य तपश्चचार । परितुष्टश्च भगवान् तस्मै स्व पुत्रमेनमन्धकं तदीयपुत्रत्वेनैव प्रददौ । स चान्धकस्तपःप्रभावात्सर्वाधिकशक्तिशाली बभूव । अनन्तरञ्च पुत्र-मेनं गिरिशप्रसादादवाप्येमां धरित्रीं रसातलं निनाय हिरण्याक्षः । तत्र च वराहरूपधारिणा भगवता विष्णुना सह सुचिरं युद्धं विधाय पञ्चत्वमुपगते पितरि (हिरण्याक्षे) तत्सम्पदमन्धको बुभोज ।

एकदा गोष्ठ्यां प्रह्लादप्रमुखैरन्धकः साधिक्षेपं कथितः — "भो अन्धक ! तव राज्येन किं कार्यम् ? तव पिता तु मूर्ख आसीद् यस्त्वामन्धमेवेशप्रसादा-त्प्राप्यात्मानं कृतकृत्यममन्यत । त्वं राज्यस्य भागी भवितुं न शक्नोसि । किम-न्यजातोऽपि पुमान् राज्यं लब्धुमुपयुक्तो भवति ? वयमेव राज्याधिकारिणो, न तु त्वम् ।"

तेषामिदं वचः श्रुत्वान्धको मनस्यत्यन्तं दीनो बभूव । परं बुद्ध्या विचार्य तान् सर्वान् विविधैर्वचोभिः शान्तयित्वा रात्रौ निभृतमरण्यं तपस्तप्तुं ययौ । कृतवांश्च बलवतीं तपश्चर्याम् । अयं यदा कंकालमात्रं बभूव तदा स्वदेहं हुता-शने प्रक्षेप्तुकामोऽतिष्ठत । एतस्मिन्नन्तराले एव भगवान् पद्मयोनिराविर्बभूव । वरं याचितुं च तमचकथत् ।

स पद्मयोनेर्वचो निशम्य प्रणिपत्येदमुवाच — 'भगवन्, यैर्मया सह वैर-विधानं कृतं ते प्रह्लादमुख्या मम भृत्या भवन्तु ।'

अन्धस्य दिव्यं हि तथास्तु चक्षुरिन्द्रादयो मे करदा भवन्तु ।
मृत्युस्तु माभून्मम देवदैत्यगन्धर्वयक्षोरगमानुषेभ्यः ।।
नारायणाद्वा दितिजेन्द्रशत्रोः सर्वाज्जनात् सर्वमयाच्च शर्वात् ।[2]

वचनमेतन्निशम्य भगवान् ब्रह्मोवाच :

दैत्येन्द्र ! सर्वं भविता तदेतद् विनाशहेतुं च गृहाण किंचित् ।
यस्मान्न जातो, न जनिष्यते वा यो न प्रविष्टो मुखमन्तकस्य ।।

२. शि०पु०, अ० ४४, श्लोकौ १०,१२.

अत्यन्तदीर्घं खलुर्घं जीवितं तु भवादृशाः सत्पुरुषास्त्यजन्तु ।[३]

तदान्धकः प्राह — 'कालत्रये या श्रेष्ठा, मध्या, कनिष्ठाश्च नार्यः स्युस्तासु या काचिन्मम मातृतुल्या वन्दनीया भवेद् यद्यहं तथाविधां तां कामये तदा मम विनाशो भवतु ।'

ब्रह्मणः प्रसादाच्चान्धकः स्नाय्वस्थिशेषं स्वशरीरं तत्कर–संस्पर्शात् सुपुष्टतां प्राप्य बलवान् भूत्वा स्वनगरं प्रविश्य वैदिककर्मजातं विनाशयन् सर्वानपि दनुजमनुजान् स्वपराक्रमेण सुचिरं पीडयन् कदाचिन्मन्दरपर्वतं जगाम ।

तत्र च दुर्योधन–वैधस–हस्तीसंज्ञकैस्तन्मन्त्रिभिरागत्य स्व स्वामिनोऽन्धकस्य सेवायामुक्तम् :

गुहान्तरे ध्याननिमीलिताक्षो दैत्येन्द्र ! कश्चिन्मुनिरत्र दृष्टः ।
रूपान्वितश्चन्द्रकलार्द्धचूडः कटिस्थले बद्धगजेन्द्रकृत्तिः ॥

o o o

तस्योपविष्टस्य तपस्विनोऽपि सुचारुरूपा तरुणी मनोज्ञा ।
नारी शुभा पार्श्वगता हि तस्य दृष्टा च काचिद्भुवि रत्नभूता ॥
प्रवालमुक्तामणिहेमरत्नवस्त्रावृता माल्यशुभोपगूढा ।
सा येन दृष्टा स च दृष्टिमान् स्यात् दृष्टेन चान्येन किमत्र कार्यम् ॥
मान्या महेशस्य च दिव्यनारी भार्या मुनेः पुण्यवतः प्रिया सा ।
योग्या हि द्रष्टुं भवतश्च सम्यगानाय्य दैत्येन्द्र ! सुरत्नभोक्तुः ॥[४]

तेषां वचनानि श्रुत्वा स कामपरवशः संस्तान् मन्त्रिणस्तां प्रति प्रेषयामास । तत्र शिवं ते ऊचुर्यदेषा सुन्दरी भवताऽस्मत्स्वामिनेऽन्धकाय दीयताम् । यदि तस्य शासनं भवान्न स्वीकरोति तदा तु शरीरमिदं विमोक्ष्यते ।'

श्रुत्वैद्भगवता ते उक्ता यन्मद्वचनात्स्वप्रभुर्वक्तव्य :
'शक्तोऽसि चेत्वं प्रयतस्व युद्धं कर्तुं तदा ह्येहि कुरुष्व किंचित् ।'

ततः :

स तत्र तेषां वचनं निशम्य जज्वाल रोषेण तु मन्दबुद्धिः ।
आज्यावसिक्तस्त्विव कृष्णवर्त्मा सत्यं हितं तत्कुटिलं सुतीक्ष्णम् ॥
गृहीतखड्गो वरदानमत्तः प्रञ्चडवातानुकृतिं च कुर्वन् ।
गन्तुं च तत्र समरबाणविद्धः समुद्यतोऽभूद्विपरीतदैवः ॥[५]
अनन्तरं तत्र भयंकरं युद्धमभूत् दैत्याश्च पलायिताः ।

---

३. तदेव, श्लोकौ १३–१४.
४. शि० पु०, अ० ४४, श्लोकाः ३९, ४३–४५.
५. तदेव, श्लोकाः ७०–७१.

अथ भगवान् पिनाकपाणिरुमामुवाच 'यत्तव निरन्तरं संगान्मदीयं पाशुपतव्रतं सविघ्नमिव संवृत्तमस्मादहं किंचित्कालं तस्य साधनार्थं क्वचिदेकान्ते गन्तास्मि ।

गते शिवे कामपरवशेन रक्षसा तेनाक्रमणं कृतम् । देवीभिर्वीरैश्च तस्य प्रतिरोधः कृतः । एतस्मिन्नन्तरे भगवान् त्रिशूलपाणिरपि तत्र समायातः । तुमुलं जन्यमजनि । दानवान् संजीवयन् शुक्रः, शंकरेण निगीर्णः । अनेन देवा सोत्साहाः संवृत्ताः ।

अन्धको यद्यपि शूलेन विद्धः, जर्जरितगात्रोऽतितमां श्रान्तश्चासीत्तथापि तेनैतादृशी माया रचिता यया सहस्रशोऽन्धकाःप्रादुर्भूताः । तेषां रक्तबिन्दुभिरन्ये वीराः समजायन्त । एतद्वीक्ष्य विष्णुना शूलपाणिमाहूयैकमुग्रं विकृतवदनं स्त्रैणं रूपं धारितम् ।

रणस्था सा देवी चरणयुगलालंकृतमही ।
स्तुता दैवैः सर्वैस्तदनु भगवान् प्रेरितगतिः ।।
क्षुधार्ता तत्सैन्यं दितिजनिसृतं तच्च रुधिरं ।
पपौ सात्युष्णं तद्व्रणशिरसि सृक्कर्दममलम् ।।[६]

एवं सति केवलमन्धक एवैतादृश आसीद्यः क्षत्रधर्ममनुस्मरन् युद्धभूमिमेवाध्यतिष्ठत् । अयुध्यच्च स्व शक्त्यनुसारम् ।'शम्भुना शूलेन विद्धोऽपि स प्राणान् न जहौ । तुष्टाव च शम्भुम् । एतद्दृष्ट्वा परमकारुणिकेन शम्भुना तस्मै प्रीत्या स्वगणपतिपदं प्रदत्तम् ।

एतस्याग्रे कथा एवं चलति :

व्यासेन निगीर्णस्य भृगुपतेर्विषये पृष्टो भगवान् ब्रह्मावोचत् यद् भगवत उदरे बम्भ्रम्यमाणो भृगुः शैवयोगमेकमाश्रित्य मेढ्रमार्गाच्छुक्ररूपेण बहिर्निससार तुष्टाव च शम्भुम् । एतद्वीक्ष्य भगवानुवाच :

शुक्रवन्निःसृतो यस्माल्लिंगान्मे भृगुनन्दन !
कर्मणा तेनशुक्रस्त्वं मम पुत्रोऽसि गम्यताम् ।।[७]

गौर्या च स पुत्रवत् स्वीकृतः । यथाभिप्रेतं च गतः ।

त्रिवर्षसहस्रानन्तरं द्वितीय इव शंकरः स महीतले समायातः । ददर्श चाष्टोत्तरशतं परमात्मनः शिवस्य मूर्तीनां जपन्तं, शूले संशुष्कं, परमेश्वरं ध्यायन्तं, महाभयान्निर्मुक्तमन्धकम् । ततश्च सन्तुष्टेन तेन स शूलादवरोपित उक्तश्च वरयाञ्चार्थम् :

६. शि०पु०, रुद्रसंहिता, युद्धखंडः, अ० ४६, श्लोकः ३६.
७. तदेव, अ० ४९, श्लोकः ४३.

भो भो दैत्येन्द्र ! तुष्टोऽस्मि यमेन, नियमेन च ।
शौर्येण तव धैर्येण वरं वरय सुव्रत ॥
आराधितस्त्वया नित्यं सर्वनिर्धूतकल्मषः ।
वरदोऽहं वरार्हस्त्वं महादैत्येन्द्रसत्तम ॥
प्राणसंधारणादस्ति यच्च पुण्यफलं तव ।
त्रिभिर्वर्षसहस्रैस्तु तेनास्तु तव निर्वृतिः ॥

° ° °

एतच्छ्रुत्वान्धकः प्राह वेपमानः कृतांजलिः ।
भूमौ जानुद्वयं कृत्वा भगवन्तमुमापतिम् ॥
भगवन्यन्मयोक्तोऽसि दीनो दीनः परात्परः ।
हर्षगद्गदया वाचा मया पूर्वं रणाजिरे ॥
यद्यत्कृतं विमूढत्वात्कर्म लोकेषु गर्हितम् ।
अजानता त्वां तत्सर्वं प्रभो ! मनसि मा कृथाः ॥
पार्वत्यामपि दुष्टं यत्कामदोषात्कृतं मया ।
क्षम्यतां मे महादेव ! कृपणो दुःखितो भृशम् ॥
दुःखितस्य दया कार्या कृपणस्य विशेषतः ।
दीनस्य भक्तियुक्तस्य भवतो नित्यमेव हि ॥
सोऽहं दीनो भक्तियुक्त आगतः शरणं तव ।
रक्षा मयि विधातव्या रचितोऽयं मयाञ्जलिः ॥
इयं देवी जगन्माता परितुष्टा ममोपरि ।
क्रोधं विहाय सकलं प्रसन्ना मां निरीक्षताम् ॥
क्वास्याः क्रोधः, क्व कृपणो दैत्योऽहं चन्द्रशेखर !
तत्सोढा नाहमर्द्धेन्दुचूड ! शम्भो महेश्वर ॥
क्व भवान् परमोदारः क्व चाहं वित्तशीकृतः ।
कामक्रोधादिभिर्दोषैर्जरसा मृत्युना तथा ॥
अयं ते वीरकः पुत्रो युद्धशौण्डो महाबलः ।
कृपणं मां समालक्ष्य मा मन्युवशमन्वगाः ॥
तुषारहारशीतांशुशंखकुन्देन्दुवर्णभाक् ।
पश्येमां पार्वतीं नित्यं मातरं गुरुगौरवात् ॥
नित्यं भवद्भ्यां भक्तस्तु निर्वैरो देवतैः सह ।
निवसेयं गणैः सार्धं शान्तात्मा योगचिन्तकः ॥

मा स्मरेयं पुनर्जातं विरुद्धं दानवोद्भवम् ।
त्वत्कृपातो महेशान ! देह्येतद्वरमुत्तमम् ॥
एतावदुक्त्वा वचनं दैत्येन्द्रो मौनमास्थितः ।
ध्यायंस्त्रिलोचनं देवं पार्वतीं प्रेक्ष्य मातरम् ॥
ततो दृष्टस्तु रुद्रेण प्रसन्नेनैव चक्षुषा ।
स्मृतवान् पूर्ववृत्तान्तमात्मनो जन्म चाद्भुतम् ॥
तस्मिन् स्मृते च वृत्तान्ते ततः पूर्णमनोरथः ।
प्रणम्य माता-पितरौ कृतकृत्योऽभवत्ततः ॥
पार्वत्या मूर्ध्न्युपघ्रातः शंकरेण च धीमता ।
तथाभिलषितं लेभे तुष्टाब्दालेन्दुशेखरात् ॥[८]

## (ख) कथानके परिवर्तनम्, परिवर्धनं च

शिवपुराणस्य कथावलोकनेनैतत्स्पष्टं भवति यद् रत्नाकरेण तत्र बहु परिवर्तनं कृतम् । मूलकथां सम्मार्ज्य स काव्यमेनं रचयामास । शिवपुराणस्य कथां काव्यानुकूलं कर्तुं तेन कल्पनाया भूयान् प्रयोगः कृतः । अत्रानयोरुपजीव्योपजीवकयोरन्तरं प्रस्तूयते :

(१) हरविजयेऽन्धकस्य जन्मादेः केवलं संकेत एव प्राप्यते । सोऽपि ऋतुभिः कृतायां स्तुतौ । तस्मिन् हिरण्यकशिपु-हिरण्याक्षयोः, प्रह्लादप्रमुखादीनां चोपालम्भस्य कुत्रचिदप्युल्लेखो नास्ति । तत्र तु ऋतव एवं परिचाययन्ति :

श्रृणु यन्निधाय मनसि व्यपाश्रिताः शरणं भवन्तमजमव्ययं वयम् ।
सुखमेकदा स्थितवतो हिमाचले स्मितभिन्नवक्रपरिहासपेशलम् ।
गिरिकन्यया निभृतमेत्य पृष्ठतः करपंकजस्थगितमुक्तचक्षुषः ॥
सहसा विलोचनविनाकृतं पुरा पुरुषं पुराणपुरुषात्त्वदुत्थितम् ।
क्षयकालकालरजनीमुखोच्छ्वसत्तिमिरौघबीजमिव नाथ शुश्रुम ॥
कृतया तदान्धक इति स्फुटार्थया स जगत्त्रयप्रथितयाथ संज्ञया ।
तनयार्थिने दितिसुताय दुश्चरं चरते तपोऽत्र समये ददे त्वया ॥
अभिगम्य वृद्धिमथ तस्य मन्दिरे स मनोरमांकपरिवृत्तिलालितः ।
उपचक्रमेऽन्धतमसच्छिदोन्मुखश्चरितुं सुदुश्चरमनर्गलं तपः ॥
चिरकालसम्भृतिमता प्रसेदुषस्तपसा स लब्धनयनः स्वयम्भुवः ।
प्रतिमल्लतारहितदेवदानवं जगतां प्रभुत्वमनपायमासदत् ॥
दलितान्धकारनिकरं मरीचिभिस्तदुरःस्थले स्थितिमवाप्य वैष्णवम् ।
स्फुरदर्कमण्डलमिवास्तसानुनि व्रजति स्म चक्रमपि निष्प्रतापताम् ॥

८. शि०पु०, रुद्रसंहिता, युद्धखंडः, अ० ४६, श्लोकाः २१–४०.

तेनोर्जितेन विजितस्यहरेरमर्षघर्माम्बुशीकरकणा वलिराहवेषु ।
वक्त्रं ममार्ज विकटभ्रुकुटीविभंगच्छायामलीमसमिवाविरलं गलन्ती ।।
सोऽस्माकमीश ! करदीकृतलोकपाललक्ष्मीसमाकुलितशेखरशासनश्रीः ।
वन्दिगृहं व्यधित केतनकाननाग्रनित्यानुबन्धयुगपत् स्थितिबन्धहेतोः ।।
तत्प्राप्तकालमिह यत्कुरु तत्त्वमन्वगायात एव हरिरेष सलोकपालः ।
संसारसागरमपि स्फुटमुत्तितीर्षोरेकः प्लवस्त्वमनघः किमुतार्तिदुःखम् ।।[९]

(२) हरविजयेऽन्धक-याचितस्यास्य :

कालत्रये याश्च भवन्ति नार्यः श्रेष्ठाश्च मध्याश्च तथा कनिष्ठा ।
तासां च मध्ये खलु रत्नभूता ममापि नित्यं जननीव काचित् ।।
कायेन वाचा मनसाप्यगम्या नारी नृलोकस्य च दुर्लभा या ।
तां कामयानस्य ममास्तु नाशो दैत्येन्द्रभावाद् भगवन्स्वयम्भूः ।।[१०]

वरस्यापि संकेतो नास्ति ।

(३) शिवपुराणेऽन्धको मन्दरं गच्छति तत्र तस्य मंत्रिणः शिव-पार्वत्यो-र्विषये तं सूचयन्ति । मन्त्रिणश्च गत्वा शिवं स्व स्वामिसन्देशेन सूचयन्ति । शिवेन निराकृते प्रस्तावे युद्धं भवति । यदा 'हरविजये' युद्धस्य कारणं स्त्री न, अपितु स्वाधिकारस्य रक्षास्ति सम्मानपूर्णस्य जीवनस्य रक्षास्ति ।

(४) एवं कृतवता रत्नाकरेण नैतिकता भृशं रक्षिता । मातुरपि दूषित-भावेन कामना ! अनौचित्यमेतन्मर्यादाप्रियेण कविना चारुतया निराकृतम् ।

(५) मूलकथायां दूतप्रेषणमन्धकः प्राक् करोति, हरविजये शम्भुः ।

(६) तत्रान्धको योद्धुमायाति —स आक्रान्तास्ति शिवस्य च नीतिस्तत्र प्रतिरक्षात्मिकास्ति, परं हरविजये शिवः स्वयं ससैन्योऽन्धकस्य राजधानीं गच्छति, तत्राक्रमणं च करोति ।

(७) शिवपुराणेऽन्धकस्य प्रथममाक्रमणं मोघीकृत्य, भगवान्स्वपाशुपतव्रतं साधयितुं पार्वत्यनुज्ञया, तामेकाकिनीं परित्यज्य गच्छति । नानादेव्यः पार्वत्या रक्षां कुर्वन्ति । यदा शिवस्यानुपस्थितौ कामासक्तोऽन्धक आक्रमणं करोति तदा गौरी, देव्यो देवताश्च तुमुलं युद्धं कुर्वन्ति । एतस्मिन्नवसर एव भगवान् शूलपाणिः समायाति । तं च शूलेन विध्यति । स आत्मसमर्पणं करोति । गण-पतिभावञ्च प्राप्नोति । परं हरविजये तस्य वधो युद्धभूमावेव भवति ।

(८) शिवद्वारा शुक्र-निगीर्णनस्य, विष्णोर्मायामयान्धकासुररक्तपानाय देवी-रूपधारणस्य च कथा नात्र वर्तते ।

---

९. हर० ६।१८७–१८६.

१० शि०पु०, रुद्रसंहिता, युद्ध०, अ० ४४, श्लोकौ १५–१६.

(९) 'गौरीश्वरदेहार्धघटनस्य', कल्पना कवेर्नितान्तं मौलिकी।[११]

(१०) शिवपुराणस्य कथानकं समाधिस्थस्य शंकरस्य दुर्दान्तस्यान्धकस्य च कथानकमस्ति यत्र न काचिन्नीति र्न च मर्यादा। परं हरविजयस्य कथानकं द्वयो राज्ञोः कथानकमस्ति यत्र नीति-नियमाः पदे-पदे समवलोक्यन्ते।

(११) शिवपुराणस्य कथानकं सुसम्बद्धमपि नास्ति परं हरविजयस्यास्ति। भक्ति-राजनीति-प्रकृति-युद्धादीनामपि विस्तृतानि वर्णनानि काव्यस्यास्यैव सम्पत्तिः।

एवं कविना एतस्मिन्नल्पकाये कथानके सौन्दर्यमापादयितुं महान् प्रयत्नः कृतोऽस्ति।

## (ग) कथानकस्यौचित्यम्

हरविजयस्य कथानके दृष्टिपाते कृते सत्येतत्स्फुटं जायते यत्तस्य रचना महाकाव्यानां लक्षणं पुरस्कृत्य कृतास्ति। कालिदास अश्वघोषप्रभृतीनां समये कथानकं शैल्यां च सन्तुलनं भवति स्म, भावपक्ष-कला-पक्षयोस्तुल्यप्रधानता तदा बभूव, अतएव तात्कालिकानि काव्यानि हृदयस्पर्शीनि सन्ति। काव्यस्य कृते वर्णनैव न पर्याप्ता, अपितु कथाप्रवाहोऽपि परमावश्यकः। परं परवर्तिभिः कविभिरस्यां दिशि ध्यानं न दत्तम्। कीदृशीयं विडम्बना यद् यदा संस्कृत-काव्यशास्त्रमनुदिनमुन्नतिपरमासीत्, संस्कृतकाव्यं ह्रासोन्मुखं भवति स्म।

अस्याः स्थितेः कृते तत्रत्यानां समालोचकपुंगवानां स्थापना अप्युत्तरदा-यिन्यः सन्ति। समीचीनेयं स्थितिर्यल्लक्ष्यग्रन्थानुसारं लक्षणग्रन्था लिख्यन्ते परमत्र विप्रतीपमिव संजातम्। लक्षणग्रन्थानुसारं लक्ष्यग्रन्था अलिख्यन्त। रूढायां एकस्यां परिपाट्यां काव्यनिर्माणमेव कवयितुः साफल्यस्यावबोधकमभवत्। विचित्रमार्गस्य सर्वेषां कवीनामियमेवास्त्यवस्था।[१२]

रत्नाकरोऽपि नास्याः स्थितेरपवादः। 'अन्धकवधस्य' स्वल्पीयसीं कथां गृहीत्वा तस्य विपुलो विस्तारः प्रतिभा-सम्पन्नस्यापि तस्य परिपाटीपञ्जरे निगडतया बन्धनं द्योतयति। तस्य समक्षं महाकाव्यस्यायमादर्श आसीत्:

सर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्।
आशीर्नमस्क्रिया वस्तुनिर्देशो वापि तन्मुखम्॥
इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्॥

---

११. हर० सर्ग २१.

१२. द्रष्ट०—बलदेव उपाध्यायः संस्कृत साहित्य का इतिहास, चतुर्थ परिच्छेदः, १५९–६२.

नगरार्णवशैलर्तु चन्द्रार्कोदयवर्णनैः ।
उद्यानसलिलक्रीडामधुपानरतोत्सवैः ॥
विप्रलम्भैर्विवाहैश्च कुमारोदयवर्णनैः ।
मन्त्रदूतप्रयाणाजिनायकाभ्युदयैरपि ॥
अलंकृतमसंक्षिप्तं रसभावनिरन्तरम् ।
सर्गैरनतिविस्तीर्णैः श्रव्यवृत्तैः सुसन्धिभिः ॥
सर्वत्र भिन्नवृतान्तैरुपेतं लोकरञ्जकम् ।
काव्यं कल्पान्तरस्थायि जायते सदलंकृतिः ॥[13]

एतल्लक्षणानुसारम् अस्य कथानकमैतिहासिकं वर्तते । नायकश्च स्वयं भगवान् शंकरः । वीरो रसोऽङ्गी । उद्देश्यं चाधर्मस्योपरि धर्मस्य विजयः । महत्कथानकं, महदुद्देश्यं महान्नायकः, महती वर्णना–चेतीमा विशेषताः संक्षेपतो महाकाव्यस्य भवन्ति । ताश्च सर्वा अप्यत्र विराजन्ते ।

यावदन्यान्यवर्णनानां सम्बन्ध स्तान्यपि पूर्णरूपेणात्र वर्तन्ते । १,३१, ३२ सर्गेषु नगरीणां, २२, ३० सर्गयोरर्णवस्य, ४, ५ सर्गयोः पर्वतस्य, ३, ५ सर्गयो ऋतूनां, १९ सर्गे सन्ध्यायाः, २०, २९ सर्गयोश्चन्द्रोदयस्य, २८, २९ सर्गयोश्च सूर्योदयस्य वर्णनानि सन्ति । १७, १८, २८, २३, २४,२५, २६,२७ सर्गेषु क्रमशः कुसुमावचय-जलक्रीडा-प्रसाधन-विरह–दूतीप्रेषण-पानगोष्ठी-सुरतस्य च विस्तृतानि वर्णनानि सन्ति । ७-१६ तथा ३२ -३८ एषु १७ सर्गेषु मन्त्रदूतप्रयाणयोश्चर्चास्ति । ३०–५० सर्गेषु सैन्यसभार-सैन्यसंरम्भा-सैन्यप्रस्थान-युद्धानां च सम्पूर्णा वर्णना प्राप्यते । ६, ४७, ५० सर्गेषु नायकाभ्युदयः प्रतिष्ठितोऽस्ति । अलंकाराणां, छन्दसां तु कथैव का ? सन्धयोऽपि सप्रयत्नं साधयितुं शक्यन्ते । अतो महाकाव्यस्य कृते यदावश्यकम्, तदत्र काव्ये सर्वं प्राप्यते ।

सिद्धान्ततः सफले सत्यपि लक्षण-निकषे किमियं कथानकयोजना निर्दुष्टेति विचारः स्वयमायाति । कथायां गतिशीलताऽस्ति न वा ? कथाया मर्मस्पर्शिणां स्थलानां परिचिन्वनं कविः करोति न वा ? तस्य संविधाने औचित्यमस्ति न वेति विचारणीयं वर्तते ।

कथानकस्य गतिशीलतायां कृते विचारे निराशैव हस्ते समापतति । अत्र काचित् प्रासंगिकी कथा नास्ति । सन्धीनामपि संगठनं न तथा येन कार्यव्यापारे गतिरागच्छेत् । स्वल्पं कथानकं तदेव च वर्णनैर्विपुलीकृतम् । तथा च-

१३. काव्यादर्शः, प्रथमः परिच्छेदः, कारिकाः १४–१९.

(१) अन्धकासुरस्य विनाशार्थं शिव-सभायां विचारविमर्शः दशसु सर्गेषु समाप्तो भवति। शिवस्योपस्थितावेव ते गणा गर्जनतर्जनं च कुर्वन्ति। कालमुसलः सभायामेव मुसलमाकृष्य, अंसशिखरस्खलदुत्तरीयः सन् भाषणं करोति, अन्येऽप्याहतांसकूटाः, आवेशभरवेपमानकलेवराः, प्रकटिताकाण्डताण्डवाः सभायां गर्जन्ति। पुनश्चान्धकासुरसभायामपीदमेव दृश्यमायाति। वीराणां विस्फूर्जनं विजृम्भते।

(२) त्रयः सर्गाश्च सैन्यसम्भार--सैन्यसंरम्भ-सैन्यप्रस्थानेष्वेव व्ययिताः।

(३) १० सर्गाश्च शिवगणानां विहार एव संयोजिनाः। शिवगणानां सुरत-वर्णनमपि सीमानमतिक्रम्य कृतं वर्तते।

(४) भगवत्प्रबोधने सौखशायिका यस्या शब्दावल्याः प्रयोगं कुर्वन्ति सा कदाप्युचिता साधयितुं न शक्यते। प्रकृतेरियदुद्दीपकं वर्णनं भगवतः प्रबोध-नार्थं कथमप्युचितं नास्ति।

(५) नन्दिद्वारा पंचमे सर्गे शिवमुद्दिश्य मन्दरस्य परिचयो यादृश्यां मर्या-दाविरहितायां भाषायां दत्तोऽस्ति सोऽप्यौचितीं नार्हति।

(६) युद्धस्य विस्तृतं वर्णनं केवलं विभिन्नासु शैलीषु वर्णन-सामर्थ्यस्य द्योतनार्थमेव कृतं वर्तते। चित्रकाव्यस्य प्रेम्णो वशीभूतः कविः कथाप्रसंगं विचारयत्येव न। त्रिषु सर्गेषु चित्रयुद्ध-वर्णनं समाप्तमस्ति। ४२, ४४ सर्गौ गजाश्वसम्मर्द एव यापितौ।

(७) षष्ठे सर्गे ऋतुभिः कृता शंकरस्य स्तुतिः, सप्तचत्वारिंशेच सर्गे देवैः कृता भगवत्याः स्तुतिः पाण्डित्यपूर्णा सत्यपि कथानकस्य विकासे किमपि साहाय्यं नापादयति। द्वावपि सर्गौ पृथक्-पृथक् स्तोत्रे स्तः। सप्तचत्वारिंशस्य सर्गस्य तु नामैव केवलं 'चण्डीस्तोत्रम्, अस्ति। प्रतीयते यत्कविनानयोः स्तो-त्रयोः कदाचिद् रचना कृताऽऽसीत्, सैव चात्र सन्निवेशिता।

(८) कथाक्रमं योजयितुं कवेः प्रयत्न एव नास्ति। प्रथमे सर्गे ज्योत्स्ना-वत्या वर्णनानन्तरं षष्ठे सर्गे ऋतवः संक्षेपेण कथासूत्रमुपस्थापयन्ति। तथा बहुविचारानन्तरं षोडशे सर्गे दूतोऽन्धकराजधानीं प्रेष्यते। ततः १३ सर्गाः जलक्रीडादिषु संयोज्यन्ते। पाठको व्यतिकरेऽस्मिन् कथामेव विस्मरति। त्रिंशः सर्गो मार्गविभागायोपायनीकृतः ३२ तमे वर्णितस्यापि समुद्रस्य स्ववर्णनशक्तिं प्रदर्शयितुं पुनरपि वर्णनं कृतमस्ति। ३६ तमे सर्गे स्वर्गाभोगवर्णनमस्ति। षोडशसर्गानन्तरं दूतोऽन्धकसभायां गच्छति। षट् सर्गाः पुनर्नीतिविचारे सभाक्षोभे च व्ययीक्रियन्ते। पुनर्द्वादश सर्गानन्तरमुद्देश्यप्राप्तिर्भवति।

(९) वस्तुतः कविना कथानक प्रबन्धकाव्योपयोगि न निर्वाचितम्। पुनश्च तस्त विस्तारे संरम्भहेतोरन्या दुर्दशा सञ्जाता।

(१०) यद्यपि कविना ;

विभावभावानुभावसंचार्यौचित्यचारुणः ।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य वा ।।
इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम्।
उत्प्रेक्ष्याप्यन्तराभीष्टरसोचितकथोन्नयः ।।[१४]

इत्यनुसारं मूलकथानके वहु परिवर्तनं कृतमस्ति, तदभिनवे रूपे प्रस्तोतुं महान् परिश्रमोऽपि कृतः परं कथानक-चयने नैपुण्याभावात्, विस्तारं प्रत्याग्रहवशात्, परिपाटीपरिपालनपरत्वाच्च सत्यप्यद्भुतपाण्डित्ये सत्यामप्यलौकिकवर्णनशक्त्यामद्भुतकल्पनायां च प्रबन्धकाव्यदृशा कथानकमेतच्छिथिलमेव वर्तते।[१५]

१४. ध्वन्यालोकः ३।१०, ११.

१५. द्रष्ट०– 'ए हिस्ट्री आफ् संस्कृत लिटरेचर' –ए.बी. कीथः (हिन्द्यानुवादः डा० मंगलदेव शास्त्रिकृतः), पृ० १६८.

षष्ठोऽध्यायः

# हरविजये वस्तु-वर्णनम्

साहित्य–शास्त्रे वस्त्वलंकाररसादिरूपेण काव्यस्य त्रैविध्यं स्वीकृतम्। यद्यपि ध्वनिप्रस्थापनाचार्यैः श्रीमद्भिरानन्दवर्धनाचार्यैः स्वकीये 'ध्वन्यालोक'-नाम्नि ग्रन्थे प्रतिभावतां कवीनां कृते रसमयकाव्यवर्णनस्यैव नियमः परि–कल्पितस्तथापि वस्तुवर्णनं विनाऽऽत्मभूतस्य रसस्य वर्णने चातुर्यमुत्पादयितुं कवयो नालम्भवन्ति। यदि काव्यात्मा रसरूपेण परिणतः स्वयं भगवानस्ति तर्हि वस्तुवर्णनस्य शरीरस्थानीयत्वात् परमावश्यकता वर्णनार्थं विद्यते। नित्यस्य, विभोः सर्वसामर्थ्यवतोऽप्यात्मनः स्थितिः शरीरमन्तरा नैव सम्भवते।

प्राकृतिकानि मनुष्यकृतानि च सर्वाण्यपि वर्ण्यविषयाणि 'वस्तुवर्णन' क्षेत्रे समायान्ति। इयमेव वस्तुवर्णनरूपा विचित्रता कवीनां, विशेषतः सुरभारती–कलित-गीरवाणां सर्वेषामपि कवीनां ग्रन्थेषु क्वचिद्भगवत्या भागीरथ्या उद्गम-क्षणिकधाराया इव संक्षेपतः, क्वचिच्च नानानदीनां संगमक्षेत्रे प्राप्तविस्ताराया-स्तस्या विस्तृतधारास्वरूपमिव विस्तरशो दृश्यमाना प्रेक्षकाणां सहृदयानां मनो हरति। आनुभविकं चेदं तत्वं 'चक्षुः प्रीतिः प्रथमम्' इत्यादि सिद्धान्ता-नुसारं मूर्तस्यैव पदार्थसार्थस्य विलोकने चक्षुः स्निग्धतरं संजायते।

कुशलश्चित्रकारो यथा साधारणमपि चित्रं स्वतूलिका-कला–कौशलाद–साधारणमिव चित्रयति हरति च तच्चित्रमालोचकानां मनस्तथैव स्वशब्दार्थ–कौशलेन महाकविः साधारणमपि जगज्जातं वस्त्वलंकारैर्विचित्रमिव कुर्वन् पाठकानां हृदये कामपि रसधारां प्रवाहयति।

वर्णने तदैव चातुर्यमापादयितुं शक्यते यदा येन-केनापि रूपेण विद्यमान-मपि वस्तुजातं नानाविधैः कल्पना-प्रचुरैरलंकारैः सम्पादितसमृद्धिकं स्यात्। इदमेव तत्त्वं सहृदयपाठको यत्र-तत्र गवेषयति, निरीक्षते स कवि-चातुर्यं कवीनां कृतिषु। इदं कार्यं कर्तुं क्वचित्सादृश्यमूलकाः कुत्रचिद् आरोपमूलकाः, अन्यत्र च प्रस्तुतेऽप्रस्तुतव्यवहारमूलका अलंकाराः सर्वांगीणसुषमां सम्पादयितु-मलम्भविष्णवो भवन्ति।

यदि च केवलं रसमयस्यैव वाक्यस्य काव्यत्वमंगीकृतं भवेत्तदा तु वस्त्व-लंकारप्रधानानां काव्यानामकाव्यत्वापत्तिः स्यात् "न चेष्टापत्तिः। महाकवि-सम्प्रदायस्याकुलीभावप्रसंगात्। यथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमाणि कविभिर्वर्णितानि कपिबालादिविलसितानि च"।[1]

संस्कृत-साहित्ये वस्तुवर्णनस्य महत्वपूर्णं स्थानं वर्तते। सूर्योदय-चन्द्रोदय-सन्ध्या-नदी-सागर-नग-नगर-काननाद्यसंख्येयानां पदार्थानां कविभिरेतावत्या तल्लीनतया वर्णनं कृतं यत्पाठको दन्तेष्वगुलीं निदधान एव सन्तिष्ठते। महा-महाकाव्यलक्षणेऽप्युक्तानां वर्णनानामनिवार्यत्वं काव्य-लक्षणकारैः प्रतिपादितम्।[2]

अस्मिन्नध्याये वयं रत्नाकरस्य वस्तु वर्णनं विवेचयिष्यामः। तत्रादौ प्रमुखतया, प्रकृति-वर्णनमनन्तरञ्च नगरादिवर्णनं समुपस्थापयिष्यामः।

भारतवर्षः प्रकृतेर्विहारस्थली वर्तते। शैलूषीव प्रकृतिरत्रत्ये रंगमंचे सुखं नृत्यति हरति देवानामपि मनांसि। कस्याप्यन्यस्य देशस्य साहित्ये प्रकृतेरेता-वद्वर्णनं न सरलतया प्राप्तुं शक्यते।

अद्यत्वे केचित्सम्भ्रान्ता 'प्रकृति-रस'-जल्पनया नवीन पद्धतेराविष्कारकत्वं सडिण्डिमघोषं प्रकाशयन्तः स्वात्मानं वञ्चयन्त्येव। काव्ये प्रकृतिवर्णनमनेकेषु रूपेषु प्राप्यते। मानवजीवनस्य भूमिकारूपे, विभिन्नभावानामुद्दीपकरूपे, प्रतीकरूपे, आलंकारिकरूपे, आलम्बनरूपे च। प्रकृति-सौन्दर्यं सामाजिके कमप्यपूर्वमानन्दं जनयति। आस्वाद्यता तत्र स्फुटं चकास्ति। तन्मयी-करणञ्चापि तत्र वर्तते। परमस्यानुभूतेः स्वतन्त्रमस्तित्वमस्ति उत रसान्तरेष्वन्तर्भावः सम्भवति? स्वतन्त्रमस्तित्वं—स्थायिभावत्वं (अङ्गित्वं) तु तत्र नास्त्येव रत्युत्साहादिवत्। अंगत्वं तु केन वार्यते? यत्रापि 'प्रकृतिरस' इति प्रयुज्यते तत्र स औपचारिक एव न तु पारमार्थिकः। "आनन्ददायकत्वं रसत्वमिति" सिद्धान्ते तु महत्यनवस्था स्यात्।[3]

संस्कृतसाहित्ये प्रकृति-र्महनीयं स्थानं धत्ते इत्यावेदितमेव प्राक्। वैदिको मन्त्रद्रष्टा प्रकृतेः सहजरूपस्य दर्शनं करोति। उपनिषत्सु प्रकृतौ रहस्यस्य दर्शनं भवति। "द्वा सुपर्णा सयुजा सखाया" इत्यादि मन्त्रे स प्रकृतिं रह-स्यान्वितामनुभवति। भारतीय चिन्तनधारायां प्रकृतेरेतावत्स्थानं यत्सा नित्या-

---

१. रसगंगाधरः प्रथमाननम्, पृ० ६.

२. काव्यादर्शः १।१५-१६.

३. द्रष्ट०-डा० नगेन्द्रः 'रससिद्धान्तः' पृ० २७१-७२ (प्रथमं संस्करणम्).

नित्यवस्तुविवेचने समानतयैव समवलम्ब्यते तत्त्वविद्भिः। आस्तिक-दर्शनेष्विव नास्तिक-दर्शनेष्वपि प्रकृतिः सुतरां राजते।

रामायण-महाभारतयोः प्रकृतिर्मानवजीवनेन समरसेव संजाता। प्राकृतिकं सौन्दर्यमत्र निर्व्याजमनोहररूपे प्रतिष्ठितमस्ति।

संस्कृत-महाकाव्येषु प्रारम्भिक्यामवस्थायां प्रकृतिः सहजा स्वच्छन्दा चावलोक्यते परं क्रमशस्तस्या रूपं रूढिसु बद्धं—पारम्परिकमभूत्। भासाश्वघोषयोः काव्ये प्रकृति-वर्णने प्रारम्भिकी सरलता दरीदृश्यते।

प्रकृतिं मानवं चैकस्मिन् स्तरे स्थापने कविकुलगुरुं विहाय नान्यः कश्चित्कविः समर्थोऽभूत्। कालिदासस्य पार्वती शकुन्तला च निसर्गकन्ये स्तः। प्रकृत्या सह कालिदासस्य तादात्म्यमिव संवृत्तम्। तस्य काव्येषु प्रकृतेः क्रमिको विकासोऽवलोक्यते। अकृपणा कविकल्पना मुक्तहस्तं स्वकीयं वैभवमनारतं वितरति तस्य काव्ये-संसारे।

सुबन्धोः 'प्रत्यक्षरश्लेषमयी' दण्डिनश्च स्वाभाविकी प्रकृतिः।

बाणेन प्रकृतेर्वर्णनमतिविस्तृततया कृतमस्ति। कादम्बर्याः घटनाचक्रमधिकांशतया प्रकृति-प्रांगणे घटते। समलंकृतापि वाणस्य शैली निसर्गोपासने सुतरां रमते। मानव-जीवनेन साकं प्रकृतेरेतादृक् सामंजस्यं, विलुलितं सौन्दर्यमभिनवा च संघटना कं कं न मोहयति ?

संस्कृत-साहित्ये 'विचित्रमार्गस्य' प्रस्थापको भारविर्न केवलं कथा-शिल्पेऽपितु प्रकृतिवर्णनेऽपि वैचित्र्यं संयोजयामास। प्रकृतावारोप-प्रवृत्तेरुग्रताया अवतारोऽत्रैव प्राप्यते यद्यपि भारवेर्वर्णनमलंकरणप्रवृत्त्युन्मुखं तथापि कथावस्तुनः पृष्ठभूमावेवागतम्।

भट्टेः काव्ये तु प्रकृतिर्व्याकरणभारेणाक्रान्तैव समायाति। तत्र स्वाभाविकता कृत्रिमतयाऽभिभूतैवास्ति।

माघेऽलंकरणप्रवृत्तिः सर्वतोऽधिका वर्तते। तस्य प्रकृतिः कथावस्तुनि कमपि योगं न ददाति। पर्वत-सन्ध्या-अन्धकार-चन्द्रोदय-प्रभात ऋतुवर्णनादिषु कविना यथा स्वकीया शक्तिर्व्ययिता न तथा कथाप्रबन्ध-संयोजने। स्वल्पापि घटनाऽनंगकीर्तनैर्विपुलीकृता।

माघस्य काव्यं भविष्यतां कवीनां कृत आदर्शरूपेणावस्थितम्। परवर्तिभिः कविभिस्तस्य शैली बहुशोऽनुकृता। काव्यरूढयः साहित्य-जगति अनुदिनमवर्धन्त परं साहित्य-सौहित्यमुपेक्षितमभूत्।[४]

---

४. द्रष्ट०—'प्रकृति और काव्य' (संस्कृत—साहित्य) भूमिका डा० रघुवंशः द्वि० सं०.

अयमेव[५] काव्यादर्शो रत्नाकस्य सम्मुखमासीत् । अत्र रत्नाकरस्य प्रकृति-वर्णनविषये संक्षेपतो विचारः करिष्यते ।

## (अ) रत्नाकरस्य प्रकृतिवर्णनम्

रत्नाकरस्य प्रकृतिवर्णनं स्व पूर्ववर्तिनां कवीनां वर्णनशैल्याः प्रभावितमस्ति । तत्र स्पष्टतः :

(१) ऋतुवर्णने कालिदासस्य यमकप्रधाना,[६]

(२) पर्वततुं वर्णने माघस्य श्लेषयमकप्रधाना,[७]

(३) भावानामभिव्यञ्जनायां वर्णनेषु च बाणस्य विशदा, श्लिष्टा, विकट-बन्धमयी,[८]

(४) कश्मीर- कवीनां वैदर्भी-रीतिमयी सरला सरसा च शैली[९]-सुतरां प्रतिबिम्वता राजते ।

यत्र कविरेभ्यः प्रभावेम्यः सर्वथा मुक्तः प्रकृति-वर्णनं करोति तत्र नूनमेव कामप्यलौकिकीं विच्छित्तिं जनयति । तस्य प्रकृतिवर्णनेऽलंकरणस्य प्रवृत्तिर्नितरां वर्तते । आरोपस्य च नितान्तमधिकता । तथापि तस्यानन्यसाधारणी वर्णना-शक्तिस्तु विस्मयकारिण्येव । एकं भावं प्रदर्शयितुमनेकान् प्रकारान् कविर्न जाने कुतो जानाति ! दृष्टपूर्वा अप्यर्थास्तत्प्रतिभायाः सम्पर्कमवाप्य सर्वथा नवीनतां धारयन्ति । न जाने कविः प्रकृतिमाराद्धुं 'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः' ? प्रकृतेर्हृदयं गृहीतुं, तस्यां सजीवतामापादयितुं, तदीयान् हावभावाँश्चित्रयितुं कोविदः कविर्निजां सर्वामपि सहृदयतां मुक्त-हस्ताभ्यां वितरति ।

कदापि सोऽयोनिमेव कल्पनां करोति । यथा :

तेन व्यलोकि दिवमुत्पताग्रवर्ति विस्पष्टलक्ष्म परिणाहि मृगांकबिम्बम् ।
उन्निद्रकुन्ददलपाण्डुरमण्डपिण्डमध्यास्यमानमिव कालियपन्नगेन ।।[१०]

---

५. यद्यपि श्रीहर्षादिभिरन्यैश्च प्रकृतेर्मनोहराणि दृश्यानि प्रस्तुतानि परं तेषां परवर्तित्वादत्र सन्दर्भेऽनुपयोमित्वाच्च चर्चा न कृता ।

६. हर०, समग्रेऽपि तृतीये सर्गे

७. तदेव, समग्रेऽपि पंचमे सर्गे ।

८. मुख्यतः ३० सर्गे, समुद्रवर्ण-प्रसंगे, ३१ सर्गे गंगा- ऐरावतयोर्वर्णन- प्रसंगे, ४० सर्गेऽश्ववर्णनप्रसंगे, कमलिनी-दिवाकरयोः प्रसंगे बहुशः । दिङ्मात्रं यथा - १६।२६, २०।७४, २०।७५, २६।२६

९. हर०, १६, २०, २८, २६, २२ सर्गेषु ।

१०. तदेव, ३०।५

कालमुसलेनाकाशात् स्पष्टलक्ष्मा विशालश्चन्द्रोऽवलोकितः सन्नेवं प्रतीयते स्म यथा कुन्दपुष्पावदातमण्डं कालियनागेनाध्यासितं स्यात्। चन्द्रस्य विम्वमण्डेन कलंकश्च कालियनागेन तुलितौ सर्वथां नूतनां कल्पनां समुपस्थापयतः।

एवमेव :

सम्पश्यति स्म स तडित्स्फुरणानुबन्ध—
मादीर्घमभ्रशकलं स्थितमन्तरिक्षे ।
उच्छ्वासलक्ष्यरुधिरारुणकान्तिकण्ठ—
च्छेदं महाझषमिवाम्भसि पङ्कलीनम् ॥[11]

आकाशे स्थितः स विद्युद्वेल्लनविलुलितं मेघखण्डं ददर्श। तस्य शोभा एवमासीद्यथा पङ्के निमग्नस्य महामत्स्यस्य कण्ठस्य भवति। तस्य महाझषस्य निरन्तरमुच्छ्वासग्रहणात् कण्ठे रक्तवेगः स्पष्टतया प्रेक्षणीयो भवति। मेघस्य पङ्कलीनेन, श्वासमुत्सृजता च मीनेन तुलना सर्वथा नवीना।

साहित्यजगद् अद्यापि 'गृहीतकांस्यतालाया नाकलक्ष्म्याः' सन्ध्याकालिकीं तां शोभां न विस्मरति यया रत्नाकर'स्तालरत्नाकर'– रूपेण प्रसिद्धोऽभूत्[12] :

अस्तावलम्बिरविबिम्बतयोदयाद्रि—
चूडोन्मिषत्सकलचन्द्रतया च सायम्।
सन्ध्याप्रनृत्तहरवाद्यगृहीतकांस्य—
तालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥

सन्ध्यासमयेऽस्ताचलचूडावलम्बी भगवान् भास्करः, उदयोन्मुखश्च चन्द्रः। प्रतीयते यन्नाकलक्ष्मीरभिसायं प्रवृत्तस्य हरेस्ताण्डवस्य संगतिकरणार्थमेव कांस्यतालद्वयं गृहीत्वा समुपस्थितास्ति। मञ्जीरवादनकाले एको नीचैर्भवति अपरश्चोपरि। अत्रास्ताचलोन्मुखः सूर्यो नीचैरुदयाभिमुखश्च चन्द्र उपरि। पक्षीणां कलरव एव मञ्जीरकध्वनिरित्युन्नेयोऽर्थः। कवेरुर्वरमस्तिष्कस्येमामभिनवामुत्प्रेक्षां मनसि निदधानाः साहित्यिकाः कविममुं 'तालरत्नाकर' इत्युपाधिना सुशोभितवन्तः।

निशावतरणसमयेन लौहमणिनेवान्धकारकालायसं झटित्याकृष्टम्। सन्ध्याकाले चुम्बकमणेरारोपः सर्वथा नवीन एव।[13] रथमारूढः सविता प्लवारूढो

---

११. तदेव, ३०।६

१२. हर० १९।५

१३. तदेव १९।३०

वणिगिव नभःसमुद्रे ग्रह–मणि–राशिं ग्रहीतुकाम इवावतरति।[१४] सूर्यचन्द्रावुद-यास्ताचलमधिरूढौ प्रभाते आकाशफलकेऽक्षैरिव नक्षत्रैः द्यूतं कुरुतः।[१५] एक एव भ्रमरप्रसंगो न जाने कतिधा वर्णितः![१६]

आश्चर्यकारिणां रूपकाणामवतारणे कविरतितमां कुशलः। मन्दर–वर्णने तस्यैतत्कथनं यन्मन्दरस्योन्नतगण्डशैलनागः (हस्ती) स्वविशालकर–शुण्डेन सूर्यालवालमध्ये विद्यमानस्य दिन–पादपस्य रक्तातप-पल्लवभंगं करोति, पाठक-माश्चर्यचकितं विदधाति :

यस्मिन् सलीलमसितोन्नतगण्डशैल—
नागः करोति विकरालकरावमर्षात्।
रक्तातपाभिनवपल्लवभंगमर्क—
बिम्बालवालवलयस्य दिनद्रुमस्य॥[१७]

अथवा :

'तस्य मन्दरस्य शिखरं 'गगनोत्पलनालदण्डं' धारयति, यस्मिन् विद्युल्लेखा एव केसराः, नीला घना एव च पत्राणि।।' एतद् विराड् रूपकं दर्शं–दर्शं दर्शको विमूढमना: संजायते :

योऽभ्रंकषं शिखरमुत्कटपद्मरागरत्नप्रभापटलपाटलितं बिभर्ति।
सौदामिनी-कपिलकेसरमालभारि-नीलाभ्रपत्रगगनोत्पलनालदण्डम्॥[१८]

श्लिष्टवर्णनैः कविर्यत्रेच्छति चमत्कारं जनयति। एकं सरलमुदाहरणं दीयते–सूर्यस्तिमिर–तस्करेण लुण्ठित इवास्ताचलकाननेषु गच्छति। सूर्यो मुक्ता-म्बरः (त्यक्ताकाशः) लुण्ठितश्च तस्करैर्विवसनीक्रियते। सूर्यो मलीमसरुचिः, अन्धकारात्, लुण्ठितश्चावसादात्। सूर्यः प्रकटोपघातः शृंगेषु संघट्टनात्, लुण्ठितश्च तस्करैस्ताड्यमानत्वात्। वासरहितः (वासरेभ्यो दिनेभ्यो हितः), लुण्ठितश्च वासेन (गृहेण) रहितः :

मुक्ताम्बरस्तिमिरतस्करलुप्यमान—
लक्ष्मीमलीमसरुचिः, प्रकटोपघातः।

---

१४. तदेव २८।५३
१५. तदेव २९।३६
१६. तदेव १९।४५, २०।७४, २१।१७, २८।४५, ६४, ६६, २९।२७
१७. हर० ४।३६
१८. तदेव ४।३७

अह्नाय वासरहितस्फुटलोहितश्री—
रुष्णांशुरस्तगिरिकाननमभ्यविक्षत् ।।[१६]

श्लिष्टप्रकृतिवर्णनमन्यत्रापि बहुशः प्राप्यते ।[२०]

प्रकृतिवर्णने सोऽनायासमेव पौराणिकान् संकेतान् ददँश्चलति । चन्द्रोदयं वर्णतया कविना क्रौञ्चभेदस्य पौराणिकी कथा कियता मनोहारिणा रूपकेणोप–स्थापिता !

प्रत्यग्रपक्षघटनेन निशावताररामेषुणा सपदि वासरक्रौञ्चकुञ्जे ।
निर्दारिते स्फुटमयुक्छदनच्छदाच्छा निर्गच्छति स्म शशिदीधितिहंसपंक्तिः।।[२१]

प्रत्यग्रपक्षघटनेन (१–कृष्ण-शुक्ल-पक्षवता २- निशितबाणवता च) निशा-वतार-रूपिणा परशुरामेण, दिवसरूपिणः क्रौञ्चगिरेर्भेदनं कृतं यस्मात् चन्द्रमसः किरणानां रूपे हंसपंक्तिरेव निर्गच्छति ।

एवमेव चन्द्रोदय-प्रसंगेऽनेकत्र कविना पौराणिकीनां गाथानां संकेतः कृतः ।[२२]

प्रकृतिरस्मिन् काव्ये सचेतनेव प्रतिभाति । मानव-मनोवृत्तिभिर्विशेषतः प्रेमानुभूत्या सह तस्यास्तादात्म्यमिव संवृत्तम् । आधुनिकभाषायां मानवीकरणं प्रकृतेरिह स्वकीयां छटां विस्तारयति । द्वित्राण्युदाहरणान्यस्मिन् प्रसंगे समुचि-तानि स्युः :

कमलिनी रात्रावन्तर्निरुद्धभ्रमरक्वणनव्याजेन कथमिवोत्स्वप्नायते :

आबद्धपद्ममुकुलांजलि याचितो मा-
मुत्सृज्य सम्प्रति गतः कथमंशुमाली ।
अन्तर्निरुद्धमधुपक्वणितैरितीव,
स्वप्नायते स्म नलिनी निशि लब्धनिद्रा ।।[२३]

इन्दुं विलोक्य संजाता कुमुदिन्या इयमवस्था कं नावर्जयति ? :

पर्याप्तजृम्भणभरस्फुटनानुबन्धि-
पत्रांगुलीनिकरकैरवचारुहस्ता ।

---

१६. तदेव १६।१६

२०, द्रष्ट० – ३।२८, ५१, ७२, ४।५, २३, ३२, ३८, पंचमः सर्गः, १६।६२, ६४, ६७, २०।६, ११, १७, १६, २२, २३, २७, ३६, ४६, २८।५४, ६५, ७०, ८२, ८७, ८६, ६०, ६४, १०३, ३०।७४, ७५, ७६, ७७, ७८, ७६, ८०.

२१ द्रष्ट०–हर० २०।२३.

२२. तदेव २०।६, ११, १७, १६, २२, २७, ३६, ४६.

२३. तदेव १६।४२

उत्क्षिप्तषट्पदघटामुखरोमराजि-
रिन्दुं विलोक्य सहसा कुमुदिन्यथासीत् ।[२४]

सरिदंगनाभिः सह क्रीडतः समुद्रस्येदं वर्णनं कं न मोहयति ? :

व्यातेनुषीभिरभितः स्फुटफेनहास-
लक्ष्मीं रराज जलधिः सरिदंगनाभिः ।
पश्चादुपेत्य परिहासविधित्सयेव,
कल्लोल-पाणि-पिहितातनुशुक्तिनेत्रः ॥

न केवलमालंकारिकाण्येव वर्णनान्यपितु स्वाभाविकानि दृश्यान्यप्यत्र प्राप्यन्ते । प्रातःकालेऽश्वानामियं मुद्रा कवेः साधारणदृश्यानामपि निरीक्षणत्वमभिव्यनक्ति :

नवयवयवसानवाप्तिखेदात्खुरशिखरैः खुरधारणीर्लिखन्तः ।
जहुरथ परिवर्धकोपनीतं विकटकडंगरमाशुघासमश्वाः ॥[२६]

नवीनानामुपमानानामपि कविः प्रयोगं करोति । यथा वन-वराहाणां वर्णनप्रसंगे :

दंष्ट्राकरालपृथुपोत्रतलावलग्न-
कासारपंककलुषाः सलिलादुदस्थुः ।
ग्रस्तार्धचन्द्रशकला बहुलान्धकार-
कूटा इवाथ वनसूकर-यूथनाथाः ॥

ध्वन्यात्मकता - चित्रात्मकता च प्रकृति वर्णनस्यापरे विशेषते ये समग्रेऽपि प्रकृतिवर्णने प्रसृते स्तः । दिङ्मात्रं यथा :

लीलाविलोलकलकण्ठविहंगकेलिकोलाहलाकुलकुलायकुलामलांके ।
कल्लोलकन्दकदलीलवलीलवंगमालाललामजलमंजुलकूलकच्छे ॥[२८]

कदाचिन्नूतनकल्पनानां वात्याचक्रे कविर्बीभत्सानि दृश्यान्यपि समुपस्थापयति । तद्यथा — दिनावसान - वर्णन-प्रसंगे सूर्यविम्बं तस्मै कालखड्गेन कर्तितं रक्तरंजितं दिवसस्य शिर इव प्रतिभाति :

विस्रंसमानकपिलांशुशिखासहस्र-
विष्यन्दिसान्द्ररुधिरस्रुति सूर्यबिम्बम् ।

---

२४. तदेव २६।६५
२५. हर० २२।४२
२६. तदेव २८।४०
२७. तदेव १६।४४
२८. तदेव ४।३५

छिन्नं जवाज्जलनिधौ निपपात काल–
खड्गेन विस्फुरितमह्न इवोत्तमाङ्गम् ॥[२९]

यथावा :

प्रात:काले सूर्यस्य रक्तबिम्बस्य, दिनश्रिय:, प्रसवसमये, विस्तृतेन रक्तरंजितेन च गर्भाशयेन तुलनाप्युद्वेगायैवास्ति :

उदयशिखरिशृंगवेदिकायां नवरुधिरारुणकान्ति भानुबिम्बम् ।
अनुकृतदिवसप्रवेशलक्ष्मीप्रसवविशंकटगर्भशय्यमासीत् ॥[३०]

एवमेव :

इयं कल्पना यत्सूर्यस्य किरण-दण्डैस्ताड्यमानस्याकाशस्योत्पटितायास्त्वच: प्रवहमाणेन रक्तेनैव गगनमण्डलमारक्तमभवद्, हृदयं नावर्जयति :

तरणिकिरणदण्डघट्टनाभिर्विघटितसंतमसत्वचोऽम्बरस्य ।
स्फुरदरुणकरातपच्छलेन क्षतजमिव प्रतिबद्धमाविरासीत् ॥[३१]

दृश्यानीमानि सर्वथैव कथाक्रमनिरपेक्षाणि न सन्ति । प्रकृति: काव्ये कथाया गतिशीलतामपि सूचयितुं कविना प्रयुक्तास्ति ।[३२]

किमधिकं कथयाम: ? काश्मीरकुंकुम-राजितं काव्यमिदं 'प्रकृति-काव्यम्' इवाभाति । प्रकृति-विहार - भूमौ काश्मीरदेशे निवसतानेन निसर्गस्यैतावत्या तन्मयतया समुपासनं कृतं यत्काव्यस्य वातावरणमेव प्रकृतेर्लास्यभूमिरिव वर्तते ।

अत्र क्वचिद् धर्मरश्मे: सूर्यस्य रथधुरेव स्खलत्खलखलामुखरा करालकैला–सकूटविकटोर्मिघटासहस्रा जह्नुकन्या मुदं वितरति,[३३] क्वचिल्लक्ष्म्या धवल–पुण्डरीकमिव कैलासश्चेतो हरति[३४], क्वचिन्मेकलाद्रे: सुरम्याणि शृंगाणि मनो मोहयन्ति,[३५] क्वचित्सरलवंजुलजालजम्बुस्तम्बप्रसारिततटा रेवा मानसमान्दोलयति,[३६] क्वचिद्वरुणालयवल्लभाग्रलीलाभिसारणपरा कलिन्दकन्या ददाति मोदमन्तरात्मने,[३७] एकत्र सौरभेयीव लांगूलिनी सरिदाह्लादयत्यात्मानम्[३८] अन्यत्र सह्याद्रिकाननकुंजा:, विकासिनो लवंगपुष्पा:, सुरगजगण्डस्थलविडम्बिनस्तालखण्डा वितरन्त्यमन्दमानन्दं मनसे[३९], एकतस्तीरतरूनवलम्ब्य स्थिताभि: सखी–

---

२९. तदेव १९।२५
३०. तदेव २८।८०
३१. तदेव २८।२३
३२. तदेव ४९।४७, ५०।६३
३३. तदेव ३०।१२
३४. तदेव ३०।१५
३५. तदेव ३०।२१
३६. हर० ३०।२२
३७. तदेव ३०।२४
३८. तदेव ३०।२६
३९. तदेव ३०।२७

भिरिव लताभिः संग्रथ्यमाननिजपुष्पभरावंतसा भीमरथी[४०] ददाति मोदमन्तः-करणाय, क्वचिदामग्नयुवतिजनककठोरकुचकुम्भहारप्रभाद्विगुणितच्छविफेन-हासा गोदावरी[४१] हृदयं गद्गदयति, अपरत्र कल्लोलनागकुलसंकुलमध्यभागा वेणा[४२] (नदी) उपवीणयति हृदयवीणाम्, परत्र निःशंकरंकुकुलसंकुलकूलकच्छा कावेरी[४३] मन्त्रमुग्धान् करोत्यनारतम्, अपरत्र हारिहारीतकण्ठविरुतपूर्णतटा चर्मण्वती[४४] हृदयमुत्कण्ठयति, अन्यत्रांगनानां सुरतक्लमं हरन्ती सिप्रा[४५] मान-सक्लमं हरति पाठकानाम्, एकतो ऋक्षवान्[४६] पर्वतः, परतः सुवेल शैलः,[४७] क्वचित्पुण्या ताम्रपर्णी[४८] अवलोचकानां मनांसि मोहयन्ति। समुद्रस्य[४९] तु कथैव का ? स तु वर्णितः सन् सर्वथा पाठकानाश्चर्यविमूढान् करोति।

एवं रत्नाकरस्य प्रकृति-वर्णने परीक्षिते एतत् स्फुटं भवति यत्तेन प्रकृते-र्निकटतो दर्शनं कृतमासीद्। राजभवनेष्वपि निवसन् न स स्व व्यक्तित्वं तत्रैव वबन्ध। तस्य भ्रमणं पर्यटनं च विशालमासीदत एव त्रिंशे सर्गे मार्गविभागे तेन स्वकीयं भौगोलिकं ज्ञानं प्रदर्शितमस्ति। तत्र नदीनां नगाना च सटीकं वर्णनमुपनिबद्धम्। प्रतीयते यत्तेन व्योमविहारः कृतो भवेत्। स वस्तुतः प्रकृतेः प्रवीणः पुरोहित आसीद् येन स्वकीयो भावाञ्जलिस्तस्याश्चरणयोः सश्रद्धं,सानु-रागं च समर्पितोऽस्ति।

विस्तारभयात् साकल्येनात्र तस्य प्रकृतिवर्णनस्य परिचयो दातुं न शक्यते तथापि कणेहत्य संक्षेपतो दीयते।

## दिनावसानम्

सन्ध्या–सूर्यास्त–तारकोदयादीनां सुन्दरवर्णनान्येकोनविंशतितमे सर्गे समु-पलभ्यन्ते। एतानि वर्णनानि सौन्दर्यस्यैतावती तुलां बिभ्रति यत्काव्यप्रकाश-सदृशे ग्रन्थेऽप्येतेषामुट्टंकनं कृतमस्ति। वस्तुतः कवेरस्य हृदयं प्राकृतिकीं सुषमां विलोकयत् वर्णयच्च ततो न निवर्तते।

दिवस-कमलं सम्प्रति संकोचमञ्चति। स्पष्टोल्लसत्किरणकदम्ब एव तस्य केसरजालकम्, सूर्यबिम्बमेव विकसिताः कर्णिकाः, अष्टौ दिश एव दलानि यान्यधुना परस्परं संश्लिष्टानि, तम एव भ्रमरावल्यस्ति। एतादृशं रूपकं प्रकृतेः

४०. तदेव ३०।२८ ४१. तदेव ३०।२९
४२. तदेव ३०।३० ४३. तदेव ३०।३२
४४. तदेव ३०।३३ ४५. तदेव ३०।३४
४६. तदेव ३०।३५ ४७. तदेव ३०।३६
४८. तदेव ३०।३८ ४९. तदेव ३०।३९-८०

सूक्ष्मनिरीक्षणस्यैव परिणामः ।[५०] भगवतो भुवनभास्करस्य गोरोचना–सदृशं विम्वं दिवसावसानमरुदाहृत–सरसिज-पर्यस्त-पिंगल-परागेणैव मन्ये पिशंगितं विभाति ।[५१]

सूर्यास्ते सर्वथा नवीनोत्प्रेक्षा नितरां निभालनीयास्ति । अस्ताचलोन्मुखः सूर्यः समुद्रे प्रतिविम्बितं स्वकीयमरुणाभं विम्बमनया शंकया पश्यति यथा तस्य रथस्य हिरण्मयचक्रमस्ताद्रेः शृंगात्संघट्टितं सत् समुद्रे पतितं भवेत् ।[५२]

'सन्ध्याप्रनृत्तहरवाद्यगृहीतकांस्यतालाया' नाकलक्ष्म्याः सुषमा पूर्वमुदा–हृतैव ।[५३]

कवेर्भक्तहृदयस्याभिव्यक्तिः प्रकृतेर्वर्णनेऽपि बहुशो भवति । रागारुणा सन्ध्या दिवसरजन्योः सम्मेलनेनानुरक्तयोः पार्वतीपरमेश्वरयोर्मूर्तिरिवाभाति ।[५४] रात्रौ गगनं दूरदृश्य उच्छ्रितो वृक्ष इवासीत् यमवलम्ब्य सकलकलैः पक्षिभिरा-कुला दिग्लताऽवलम्बिता ।[५५] सूर्येऽस्ताचलावलम्बिनि संवृत्ते लोकरीत्यनुसारं कमलिन्योऽप्यारक्तनलिनकुड्मलकरांजलिं वद्ध्वा तं प्रणेमः ।[५६] अस्ताद्रेरे-कस्मिन् पक्षे जलदमण्डलमस्तमयतः सूर्यस्य किरणैरारक्तं सत् कुलिशाघाताद्रक्तरंजितः शैल इवावभासे ।[५७] जीवितसव्यपेक्षं धर्मविशेषं द्रष्टुमिवोत्सुकतया पुण्डरीका मन्ये उत्कन्धराः संजाताः ।[५८] पश्चिमदिक्प्रान्तगजेन स्व-शुण्डादण्डेन

---

५०. स्पष्टोच्छ्वसत्किरणकेसरसूर्यविम्वविस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
शिलष्टाष्टदिग्दलकलापमुखावतारवद्धान्धकारमधुपावलि संकुकोच ॥ (१६।१)

५१. अस्ताद्रिगोचरचरं रुरुचे चिराय, गोरोचनारुचिमरीचि विरोचनस्य ।
विम्वं दिनान्तपवनाहतपुण्डरीकपर्यस्तपक्ष्मरजसेव विलंघ्यमानम् ॥ (१६।२)

५२. सिन्धौ कुसम्भकुसुमस्तवकामिताभ्रमाजिह्मकान्ति तपनः प्रतिम्विम्वित सत् ।
संपश्यति स्म निजमण्डलमस्तकूटसंघट्टभग्नरथकांचनचक्रशंकी ॥ (१६।३)

५३. तदेव १६।५.

५४. प्रत्यग्ररागघटनेन्दुकलाकिरीटशैलाधिराजसुतयोरिव गाढसम्पत् ।
सन्ध्याहिताय दिवसक्षपयोः शरीरभागद्वयाविरलवृत्तिरजृम्भत श्रीः ॥ (१६।६)

५५. प्रेंखत्कुलायकलकोन्मुखपत्त्रिचक्रकोलाहलाकुलविशंकटदिग्लताग्रः ।
तिग्मांशुपातविशदाकृतिदूरदृश्यछायापथोऽधिनिशमम्वरपादपोऽभूत् ॥ (१६।८)

५६. प्राप्तेऽस्तशैलशिखरस्थितिमुष्णभासि लोकानुसारसरलत्वजुषो नलिन्यः ।
सन्ध्यां ससम्भ्रममवन्दिषतेव सायंमाताम्रकोरककरांजलिजालवन्धाः ॥ (१६।६)

५७. सन्ध्यातपारुणितपार्श्वतटावलम्बिविम्वैकदेशजलदः क्षणमस्तशैलः ।
वज्रव्रणाननगलत्क्षतजोक्षितार्धविछिन्नविशल्यपतत्र इवावभासे ॥(१६।१०)

५८. तुंगावकाशरचितस्थितिमातपस्य शेषं समुत्सुकत्यैव दिदृक्षमाणाः ।
उत्कन्धरा इव सरोजभुवो वभूवुरुन्नम्रकोरककरालितपुण्डरीकाः ॥(१६।१२)

समाकृष्यमाणं, तारकबुद्बुदोपेतं नभः सरसः प्रादुर्भूतमहिमरश्मिविम्वं रक्ताम्बुजमिवालम्बत।[५९] सन्ध्यारागेणारुणितं तपनबिम्वं मदन-दाह-वेलायामग्निमुद्वमत्-तृतीयमिव हर-नयनमासीत्।[६०] तमः संयुक्तं सायन्तनमर्कविम्वं शेषनागस्य विस्तीर्णफणस्यानुकृतिं चकार। सन्ध्याकालिकोऽन्धकार एव शेषनागस्तदानीन्तनो राग एव शेषमुखान्निर्गच्छन्तः स्फुल्लिगास्तारकाश्च मणय इवासन्।[६१]

स्वोच्छ्रायताप्रतिकूलमाचरतस्तस्यास्ताचलस्य तथाकथिता प्रतिष्ठा कूपे पततु य आश्रयार्थं गृहीतोऽपि रविणा न शरणागतरक्षां कुर्वाणस्तेनैव सहाम्वुधौ न पतति। शरणागतस्य रक्षायामसफलोऽपि पुमान् यदि तुंगताया अभिनयं करोति तर्हि किं तन्न वचनीयम्?[६२] तेजोविरहितेनाथ चान्धकारेण कदर्थितेन रविणा साकमेव दिवसश्रीरम्बुनिधौ न्यपप्तत्। सत्यमेवास्ति सुखदुःखयोरभिन्नानां प्राणिनां कृते इदमेव सर्वथोचितम्।[६३] तिमिरानुविद्धा काञ्चनपिंगा सन्ध्या भगवतो नीलकण्ठस्य कालकूटच्छटाभिर्युक्ता गौरीव विभाति स्म।[६४] सप्तसप्तितुरंगेषु समुद्रं विशत्सु जलचारिभिरश्वैस्सह शाश्वतविरोधात् स्व-श्वासपरम्पराभिरेव, मन्ये, तैः पयः फेनिलं कृतम्।[६५] दृष्टिपथमतीत्य गतं प्रेयांसं सूर्यमन्तरेव नानाविधैर्विकल्पै दिदृक्षवो नलिन्यः स्वनयन-निमीलनमकुर्वन्, येनान्तःसाक्षात्कारे प्रियतमस्य काचिद् बाधा समुपस्थिता न स्यात्।[६६]

५९. आकृष्यमाणमिव पश्चिम दिग् विभागवद्धास्पदद्विरददीर्घकरार्गलेन।
ताराच्छवुद्वुदकरालनभंस्तटाकरक्ताम्वुजं तपनविम्वमलम्वतारात्॥ (तदेव१९।१३)

६०. पर्यस्तमस्तगिरिसानुनि सान्द्रसान्ध्यरागारुणच्छवि सहस्रमरीचिविम्वम्।
कन्दर्पकोपितहरस्फुरितानलार्चिरूर्ध्वाक्षितारकतिरोहितभेदमासीत्॥ (१९।१४)

६१. आविर्भवत्तिमिरसंवलनानुविद्धसन्ध्यांशुधूसरविपाटलमुष्णधाम्नः।
भाति स्म निःश्वसितधूमशिखावकीर्णविस्तीर्णशेषफणरत्नविडम्बिविम्वम्॥ (१९।१५)

६२. तुंगात्मतासदृशमध्यवजह्नुषोऽस्तशैलस्य तस्य निधनं व्रजतु प्रतिष्ठा।
आलम्वितोऽम्वरतलात् पतता करौघैःसिन्धौ न यः सह सहस्ररुचा न्यपप्तत्॥(१९।२२)

६३. तेजःप्रकर्षपरिहानिनुपेयिवांसमारात्प्रदोषतमसामिवुभूष्यमाणम्।
अम्वोनिधौ तपनमन्वपतद्दिनश्रीरेकात्मतां विदधतामिदमेव युक्तम्॥(१९।२३)

६४. गौरीव गौरकरशेखरकण्ठपीठवद्धास्पदातनुविषच्छविलंघितश्रीः।
श्यामीवभूव जलधौ कलधौतकापिंगच्छविस्तिमिरसंवलिताथ सन्ध्या॥(१९।२६)

६५. अन्तर्विवक्षुरिव भानुमतो रथाश्वपंक्तिस्फुरत्सलिलसैरिभरोषदृष्टा।
श्वासानिलैः सपदि जर्जरयांचकार, सिन्धोर्जलं विधुतफेनिलवीचिचक्रम्॥ (१९।२७)

६६. प्रेयांसमर्कमिव दृष्टिपथव्यतीतमन्तर्विकल्परचिताकृतिमीहमानाः।
प्रेम्णा विलोकयितुमस्खलितेन चक्रुरम्भोजनेत्रविनिमीलनमम्वुजिन्यः॥(१९।२९)

एकं सर्वथा नवीनं विचारमालोकयन्तु सुधियः—अयस्कान्तमणिनेव सन्ध्यासमयेन, मन्ये, तमः कालायसमभितः समाकर्षितम् । प्रतिदिनमन्धकारं पश्यद्भिर्जनैर्न कदाप्येवमनुभूयते । परमेषा कवेः सूक्ष्मा दृष्टिर्या नवनवानर्थानुद्भावयति ।[६७] अपरामप्युद्भावनां साक्षात्कुर्वन्तु–मन्ये प्रेयसोऽर्कस्य विरहेण दिग्ललनाभिर्यत्कज्जलमलीमसमश्रुजलमंगुलीभिः परिमृज्य समन्तात् क्षिप्तं तदेवान्धकाररूपे परिणतम् ।[६८]

स्वपितुरादित्यस्य पातादद्दुःखातिशयेन भूमौ विवर्तनेनैवाधिक मलिनानां यमुनाजलानामिवासितैरन्धकारैः क्षितितलं व्याप्तमभूत् ।[६९] प्रवत्स्यत्पतिकया कमलिन्या वियोगभयादेव, मन्ये, भ्रमरतारकमब्जनेत्रमामीलितं भवेत् ।[७०]

अभिसारिकाभिरन्धकारो बहु मतः । यतो हि ताः सम्प्रति स्वप्रियानुपगन्तुं निश्शंकं समर्थाः । अत एव ताभिः स्व धम्मिलव्याजेनोत्तमाङ्गै र्धारितः । लोकेऽपि बहुमतः कश्चिच्छीर्षेण ललाटेन वोह्यते ।[७१]

अन्योऽप्येको मनोहारी भावः सहृदयानां मुदे स्यात्—"कमल–कुड्मलानामंजलिं कृत्वापि बहुशो याचितो भास्वान् मां विहाय कथमिव गतः"—इत्यमुमेवार्थमन्तर्निरुद्धमधुपावलिगुंजनव्याजेन कमलिनी निशायामुत्स्वप्नायते ।

कमलिनीकोषे बद्धं द्विरेफमुद्दिश्य कविना कियन्तो नूतना विचाराः समुद्भाविताः सन्ति ।[७२]

सायंकाले लक्ष्मीः कमलाकरमस्मान्मुमोच यत्सा चन्द्रमसः पाद (किरण)–स्पर्शमवाप्य स्वकीयामवमाननामनुभूतवती । अतएव मनस्विनी स्वकीयं निवासस्थानमपि तत्याज । मनस्विनी च पादस्पृष्टा घृणया रोषेण च स्वदेशमपि

---

६७. श्यामावतार समयेन मलीमसत्वमासेदुषा स्थगिततिग्ममरीचिरोचिः ।
सल्लोहकान्तमणिनेव तदान्धकारकालायसं प्रसभमाचकृषे पुरस्तात् ॥ (१६।३०)

६८. तावत्क्रमेण दयितार्कवियोगजन्मदाहज्वरव्यथितदिग्वनिताकरस्थैः ।
क्ष्मामण्डलं विगलतांजनवाष्पतोयलेशोत्करैरिव तमःशकलैः पुपूरे ॥ (१६।३१)

६९. छायापथैस्तिमिरसंवलनानुवन्धनिर्व्यामदीर्घविकटैः क्षितिपीठपृष्ठम् ।
शारीवभूव पतिते तरणौ कलिन्दकन्याविचेष्टनविभिन्नजलौघकल्पैः ॥ (१६।०३)

७०. देशान्तरप्रवसनप्रवणोष्मरश्मिचिन्तानुवन्धवशजैह्म्यजुषो नलिन्याः ।
आसीन्निकोचभरजिह्मितपक्ष्ममालमामीलितभ्रमरतारकमब्जनेत्रम् ॥ (१६।३६)

७१ व्यक्तोपकारमधुना स्थगितासु दिक्षु प्रेयोगृहं सुखमलक्षितमेव यामः ।
धम्मिल्लवन्धरुचिरैरभिसारिकाभिः प्रेम्णा तमश्चिरमितीव तमोभिरूहे ॥ (१६।४३)

७२. आवद्धपद्ममुकुलांजलि याचितो मामुत्सृज्य सम्प्रति गतः कथमंशुमाली ?
अन्तर्निरुद्धमधुपक्वणितैरितीव स्वप्नायते स्म नलिनी निशि लब्धनिद्रा ॥ (१६।४५)

परित्यजति ।[७३] अम्बुज-कम्पित-कुड्मलसन्धि-प्रदेशा ज्योत्स्नाच्छुरिता एवं प्रतीयन्ते स्म यथा कमलं पूर्वमसन्तोषवशात्पीतां कौमुदीं सम्प्रत्युद्वमतीव ।[७४]

चक्रवाकमिथुनैः प्रातः समागमसुखस्याशया रजनी यथाकथंचिद् व्यतीता परं भविष्यद्रजनीविरहाशंकया दिने तेऽपीड्यन्त । सत्यमेवास्ति दुःखेऽनुभूयमाने भविष्यदपि सुखं रमणीयम् परं सुखेऽनुभूयमाने न दुःखम् । आगामिनो दुःखस्य असह्यत्वात् ।[७५]

सूर्येन्दुमण्डलकपाटोद्घाटनात् नक्षत्रतारागणा रात्रावेवमदीप्यन् यथा रत्न-राजिर्मञ्जूषायाः कपाटविश्लेषणाद्विकीर्णा भवति ।[७६] निशीथिनीवनपुष्प-स्तबक इव, आकाश-सागर-बुद्बुदजालकमिव, ब्रह्माण्ड-शुक्ति-पुट-मुक्ता-मण्ड-लमिव तारकौघो गगने व्यापृतोऽभूत् ।[७७]

नभसि ग्रहचक्रवालमादिवराहेण दन्ताग्रे समुत्थापितायामवनौ संलग्नाः क्षीरसागरबिन्दव इव व्यराजन् ।[७८] कुत्रचिदेतानि स्वाभाविकानि दृश्यानि प्रस्तूयन्ते यानि सुदृढं हृदयं हरन्ति-पृथिव्या उच्चावचेषु प्रदेशेष्वन्धकारस्तथा-ऽतिष्ठत यथा सैरिभयूथाः पल्वलपंकमधितिष्ठन्ति ।[७९]

यत्र-क्वचित् श्लेषबलेनापि सन्ध्यावर्णने चमत्कारमुत्पादयति कविः । तद्यथा-व्याघ्र-कमलयोर्वाचिनः 'पुण्डरीकस्य' प्रयोगं कृत्वा सायं-वर्णने । वने (१. जले २. जंगले च) सायंकाले पुण्डरीकाः (१. कमलानि २. सिंहाश्च) शयिता जागृताश्चापि । सन्ध्यातपपिशंगितेन मरुता विधूयमानकेसराणि कम-

---

७३. संकोचसंहृतदलस्फुटलक्ष्यमाणदूरान्तरालनवकुड्मलचक्रवालम् ।
शीतांशुपादपरिमर्शघृणामवाप्य, लक्ष्मीमुमोच शनकैः कमलाकरांकम् ॥(१९।४९)

७४. प्रेंखत्करालपारिपाण्डुपलाशपंक्तिसन्धानराजिशवलीकृतपृष्ठभागम् ।
भाति स्म दृश्यमुकुलाननरन्ध्रपीतज्योत्स्ना विनिर्गमनमार्गमिवारविन्दम् ॥(१९।५०)

७५. प्रातः समागमसुखानुभवं विधाय,चेतस्यनीयत निशा रभसेन कोकैः ।
कृच्छ्राद्वियोगचकितैस्तु दिनं व्यलंघि दुःखे सुखं भवति साधु, सुखे न दुःखम् ॥
(१९।५२)

७६ तावन्निरर्गलमुदैदमलात्ममूर्तिकल्माषिताम्वरतलं ग्रहचक्रवालम् ।
सूर्येन्दुमण्डलसमुद्गकवाटकोपविश्लेषकीर्णनवरत्नकणानुकारि ॥(१९।५४)

७७. भास्वन्निशीथवनपुष्पकदम्वकेन, नाकाम्बुराशिजलबुद्बुदजालकेन ।
ब्रह्माण्डशुक्तिपुटमौक्तिकमण्डलेन, भूषां निशोडुनिकरेण परामधासीत् ॥(१९।५५)

७८ निष्पिष्टशैलविनिघृष्टयुगादिघृष्टिदंष्ट्राग्रकोटिपरिमण्डलसन्निवेशम् ।
क्षीरोदशीकरकणच्छवि शारिताभ्रं व्यभ्राजताथ नभसि ग्रहचक्रवालम् ॥(१९।५८)

७९. क्षोणीनिरोकजठरेषु विशंकटेषु नैशं तमः स्तिमिततामभितस्तयायत् ।
विस्पष्टमैहिषत पल्वलपंकमोहमुग्धा यथा सलिलसहृतयोऽवगाढुम् ॥(१९।६१)

लानि मुद्रितानि, विधूतसटाः सिंहाश्च जागृताः।[८०]

अन्यच्चापि श्लिष्टमुद्राहरणं विलोकनीयम्—दीपाः सन्ध्याकाले क्रीडतां बालकानामिव भ्राजिता अभूवन्। बालकाः कज्जलकृष्णालकाः, (शिखण्डः-खण्डाः) सन्ध्यासमय--गृहान्तर्भाजः, स्नेहस्निग्धाः, सरागकरा भवन्ति। प्रदीपाश्चापि खण्डितसन्ध्यान्धकाराः, गृहोत्संगभाजः, तैलपूर्णाः, रागरंजित–किरणा भवन्ति।[८१]

एवं विविधैश्चित्रैः कवेः सन्ध्यावर्णनं सुसज्जितमस्ति।

**चन्द्रोदयः**

विंशे एकविंशे च सर्गे चन्द्रोदयस्य वर्णनमस्ति। अत्र बह्वयो नूतनाः कल्पनाः समवलोक्यन्ते। तासु काश्चनात्र समुदाह्रियन्तेः :

चन्द्रः समुद्र-मन्थन-काले लग्नं पंकमिव कलंक-रूपे धारयन् रजनी-कालिन्दीजल-बुद्बुदवत्स्वच्छैस्तारकैर्युक्तमाकाशमारुरोह।[८२] चन्द्रिकाऽद्रिशृंगेषु निपतिता। इदमवलोक्य कविरुत्प्रेक्षते यदियं चन्द्रिका मनस्येतद्विचिन्त्य 'यदनेन भानुना मम दयितश्चन्द्रोऽवधूतः कान्तिहीनश्च कृतस्तस्य सम्प्रति पतनं भवति। स्वभर्तुरहितस्यात्याहितं द्रष्टुमहं पर्वतशृङ्गाण्यारोहामि' इति कृत्वैव पर्वतोन्नतभागेषु निपतिता। स्वकीयस्य शत्रोः पतनं कस्य मुदे न स्यात्?[८३] उदयकाले चन्द्रो रक्तवर्ण आसीदनन्तरं च पीतवर्णः संवृत्तः। एवमाभाति यत्केनाप्युच्चावचेन शृङ्गेणायं व्रणितः संवृत्तस्तेनास्य शरीराद्बहुरक्तं निर्गतमत एवायं पीतवर्णः संजातः। यस्य शरीरादधिकं रुधिरं निर्गच्छति सोऽपि पीतवर्णः संजायते।[८४] चन्द्रमसि कलंक एवं लगति यथा बलरामस्य वक्षसि धेनुकासुरेण स्वखुराघातैः कृतो व्रणः।[८५]

---

८०. सन्ध्यातपच्छुरणपिंगमरुद्विधूतविस्तारिकेसरशिखैर्वनमध्यमाग्भिः।
सुप्तोत्थितैर्विगलितेऽह्नि पुण्डरीकैरेकैरजृम्भि रभसादपरैर्निदद्रे॥ (१६।६२)

८१. निष्ठ्यूतकज्जलकरालशिखण्डिखण्डैरुत्संगवृत्तिमधिगम्य निकेतनानाम्।
स्नेहानुबन्धिभिरदीपि दिनावसानसन्ध्यार्भकैरिव सरागकरैः प्रदीपैः॥ (१६।६४)

८२. विभ्रत्सलक्ष्मजलधेस्तलभागलग्नपंकच्छटांकमिव बिम्बमनुष्णरश्मिः।
श्यामाकलिन्दतनयाजलबुद्बुदाच्छतारागणस्तवकितं वियदारुरुक्षत्॥ (२०।४)

८३. विच्छायतामकृत यो मम भर्तुरिन्दोरंशुच्छटाभिरुदयन्नवधूय बिम्बम्।
पश्यामि भानुमुदधौ पतितं तमद्रिशृंगेष्वितीव नवचन्द्रिकयाध्यरोहि॥ (२०।५)

८४ विस्पष्टचिह्नमुदयाद्रिविटंककूटसघट्टजर्जरतयेव सरन्ध्रमिन्दोः।
बिम्बं क्रमेण विगलन्नवसांध्यरागरक्तच्छटं नभसि पाण्डुरतामयासीत्॥ (२०।१५)

८५. प्रत्यग्रजक्ष्ममलिनोदरकान्ति बिम्बमिन्दुर्बभार नवकुन्ददलावदातम्।
वक्षो हलीव दृढधेनुकपाश्चमार्धप्रखरखुराग्रशिखरोल्लिखितव्रणांकम्॥ (२०।१७)

चन्द्रोदय एकं सर्वथाभिनवं विचारं मनाङ् निभालयन्तु — चन्द्रमा जले प्रतिबिम्बितो भवति। एवं प्रतीयते यत्स कालरूपिणः कुलालस्य चक्रं भवेत्। तस्य मध्यभागे कलंको मृत्तिकारूपेणावस्थितो भवेत्। प्रतिविम्बितत्वाज्जले भ्रमत् तच्चन्द्रचक्रं नवनवानि रूपाणि धारयदिवाभाति। यथा कुलालचक्रं परिवृत्य घटशरावप्रभृतीनि पात्राणि निर्माति तथैवेत्याशयः।[८६] कलंकं धारयतश्चन्द्रस्य शोभा भस्मच्छुरितस्य शिथिलितगजासुरचर्मणः शंकरस्यांसदेशस्येवास्ति।[८७] पवनविलुलितं मेघखण्डमाश्रित्य स्थितमिन्दुबिम्बम् वैनतेय–नीयमानः सुधाकलश इव प्रतीयते।[८८]

प्रकृति-वर्णने कविः स्वकीयं पौराणिकं ज्ञानमनायासमेव प्रकाशयति। एकमन्यत्पौराणिकं रूपकं समालोचकपुंगवानां मुदे स्यात् — शुक्ल-कृष्णपक्षवतो (पक्षः=पंचदशदिवसात्मकः, बाणाग्रभागो वा) निशावतार-रूपेणः परशुरामस्य बाणेन दिवस-रूपिणः क्रौंचगिरेर्भेदनं कृतं तस्मात् सप्तपर्णच्छदाच्छा कलाधर-दीधिति-रूपिणी हंसावली निर्गत्य उड्डीयते। कियत्पाण्डित्यपूर्णं सुन्दरं च रूपकं वर्तते।[८९] चन्द्रमसि कलंकःकथमित्यस्योत्तरं कविरेवं ददाति — चन्द्रमसा चिन्तितं यदहमनेन लांछनेनागुरुपंकपत्रावलीदिग्धैः पुरन्ध्रिवक्त्रैः समं भविष्यामीत्यत एव तेन कलंको धारितः।[९०]

पुराणेषु प्रसिद्धं यच्चन्द्रमसो जन्मात्रेर्नयनाद् बभूव। इमामन्तः कथामन्तः कृत्वा कविः कथयति यच्चन्द्रेण सुतत्वान्न केवलमत्रेरेव नयनमाह्लादितमपितु नेत्रमात्रमाह्लादितम् — नेत्रजातिरेवोपकृता। सर्वेषां नयनानि चन्द्रं दृष्ट्वा प्रसीदति।[९१]

भ्रमरः कुमुद-गर्भगृहं प्रविशति। दृश्यमेतदवलोक्य कविरनुपमां कल्पनां

---

८६. लक्ष्मच्छलोपहितपीवरपंकपिण्डकल्माषमध्यमतनुप्रतिबिम्बमिन्दोः ।
लक्ष्मीं दधावधिजलं घटमानहारिरूपं भ्रमत्सरसि कालकुलालचक्रम् ॥ (२०।१८)

८७. कल्मापितं शशकलंकलवेन मध्यभागे बभार परिपाण्डुरमिन्दुबिम्बम्।
विस्रस्तमेचकगजाजिनपल्लवाग्रचन्द्रावतंसशुचिभस्मपितांसलीलाम् ॥ (२०।१९)

८८. अभ्राजतानिलविलोलितसांध्यरागपिंगीकृताभ्रशिखरक्षणलब्धसंस्थम् ।
शीतांशुबिम्बमुरगाशननीयमानमाणिक्यभासुरसुधाकलशाभिरामम् ॥ (२०।२२)

८९. प्रत्यग्रपक्षघटनेन निशावताररामेषुणा सपदि वासरक्रौंचकुंजे।
निर्दारिते स्फुटमयुक्छदनच्छदाच्छा निर्गच्छति स्म शशिदीधितिहंसपंक्तिः॥ (२०।२३)

९०. संवादमेष्यति ममागुरुपंकदिग्धपत्रावलीशवलगण्डपुरंध्रिवक्त्रैः।
कल्मापितं किममुनापि न बिम्बमेतदुत्प्रेक्ष्य लांछनमितीव बभार चन्द्रः॥ (२०।२६)

९१. आश्रित्य शीतरुचिना सकलेन जातिसामान्यमुथितवता नयनान्महर्षेः।
आनन्दभारभरमन्थरता व्यधायि तत्पक्षपातरभसादिव लोचनानाम्॥ (२०।२७)

कुरुते-भ्रमरः कश्चिद्रसाधक इव प्रतिभाति । यः स्वकीयं गुंजन-रूपिणं मन्त्र-मुदीरयन् पत्ररूपिणं यन्त्रं भिन्दन्, पुष्परस-रूपिणं रसायनं पिबन् कुमुद-कोष-रूपिणि गर्भगृहे साधनां कर्तुमिव प्रविशति ।[६२] भानोरनुपस्थितावन्धकारेण सुचिरं सहवासं कृत्वा कुमुदिनीभिर्ये भ्रमराः प्रसूतास्ते सति चन्द्रोदयेऽसतीना-मिव तासां गर्भगृहादेवं निर्गत्य पलायिता यथा कुलटासुता ज्ञानानन्तरं स्वकीया असतीर्जननीर्विद्वेषेण परित्यज्य यथेच्छं गच्छन्ति । अत्रेदं ध्यातव्यं यत्कविनो-त्प्रेक्षा सुनिपुणं निरीक्ष्य कृता । यतो हि सन्ततिः पितरमनुकरोति । अन्धकारः कृष्णोऽस्माद्भ्रमरा अपि कृष्णवर्णा एव संजाताः । अहो, कुमुदिनीनामसाध्वी-चरितत्वम् ![६३]

गवाक्षैर्निर्गच्छन्तीभिरगुरुधूमलेखाभिर्मिश्रिताश्चन्द्रदीधितयः सागरमन्थन-वेलायां कालकूटेन मिश्रिताः क्षीरसागरस्य वीचिच्छटा इवाभान्ति ।[६४]

चन्द्रिका-पारावारे दिशामपि ज्ञानं पृथक्तया नाभूद् इति सामान्यमर्थं कविः कियत्या सुन्दरतयाभिव्यनक्ति — रजनीनाथे रजनीमालिंगति स्रस्तान्ध-कारवसनां तां वीक्ष्य तस्या दिशारूपिण्यः सख्यः सहासं सलज्जं च दूरं पलायिता येन तयो रहस्यन्तरायो मा भूत् ।[६५]

चन्द्रः प्राचीं परित्यज्य प्रतीचीं गच्छति । इत्यमुमर्थं मनसि निधाय कामपि सरसतामापादयति कविः — "अयं चन्द्रः प्राच्यां सर्वं रागं समाप्य सम्प्रति प्रतीचीं गच्छति । मूढोऽयमन्याः पादपतनैः प्रसादयति" —इत्येवं हृदये कृत्वा निशासमीरणेनान्दोलितकैरवत्वादलीनां स्वरेणैव स्वरेण, पत्राणां मर्मरध्व-निनैव करतलध्वनिना कुमुदिन्यः नक्तंचरं सुचिरमहसन् । 'नक्तंचरशब्दोऽत्र नितरां ध्वनिपूर्णः ।[६६] चलत्पलाशान्तरगोचराभिस्तुषाररश्मे रश्मिभिश्चित्रिता

---

६२. शिंजारवं सपदि मन्त्रमुदीरयंस्त्वं, नक्तं मुखे विघटमानपलाशयन्त्रम् ।
संरभ्य साधक इवात्तरसोपभोगमभ्याविशत्कुमुदगर्भगृहं द्विरेफः ।।(२०।२८)

६३. भानोरसन्निधिवशात्तिमिरेण सार्धमह्नाय संगतिवाप्यं कुमुद्वतीभिः ।
चन्द्रोदये कुमुदकुक्षिगतास्तदीयगर्भद्विपः सुखमसाविषत द्विरेफाः ।।(२०।३६)

६४. लक्ष्मीं दधुः शिशिररश्मिरुचो गवाक्षनिर्यूहनिर्यदसितागुरुधूमशाराः ।
पर्यस्तमन्दरविघूर्जितदुग्धसिन्धुवीचिच्छटा इव परिप्लुतकालकूटाः ।।(२२।४६)

६५. स्रस्तान्धकारवसनां रजनीपुरन्ध्रिमालिंगति प्रियसुधास्रुति दिक्सखीभिः ।
दूरं मृणालशकलामलतन्मयूखहासच्छटांचितमुखीभिरिवापसस्रे ।।(२२।४७)

६६. पौरन्दरीं दिशमपोज्झ्य विलुप्तरागसंपत्क्षणाज्जिगमिषत्यधुना प्रतीचीम् ।
अन्याः प्रसादयति निर्जितपुण्डरीकशोभाग्रपादपतनैः ककुभः सलीलम् ।।
नैशानिलाहतिपरस्परघट्टयमानसंफुल्लकैरवतयालिकुलप्रणादैः ।
उक्त्वेतिहस्ततलताडनयेति नक्तंनक्तंचरश्चिरमहासि कुमुद्वतीभिः ।।(२२।५३,५४)

भूमिः स्वदयितस्य भानोरत्यये साधनार्थं मृगचर्मेव धारयति।[९७] तारकचन्द्रिकाभ्यां मुक्तं गगनं निर्मोकमुक्तः सर्प इव प्रतीयते।[९८] कमलवनं जरावस्थयेव संकुचितम्। चन्द्रिकेव सा जरा, यस्याः सम्पर्कमवाप्य कमलानि मुद्रित-लोचनानि संवृत्तानि, वायुजनितः कम्प एवं जराकृतः कम्पः, चन्द्रिकाया धवलतैव जराया धवलता।[९९] चन्द्रिकापूरप्लाविते जगति कैरवचक्रवालमपि निमग्नं सदुत्तरणायैव स्वपलाशहस्तान् संचालयति। यथा कश्चिद् जनः पारं यातुं हस्तौ संचालयति तथैवेदं कैरवचक्रवालमपि चन्द्रिका पूरात् पारं प्रयातुं स्वपलाशहस्तान् आक्षिपति। पत्राणां समीरणेनान्दोलनं लक्ष्यीकृत्य मनोहरोऽर्थः कविना प्रकाशितः।[१००] पाञ्चजन्य-धवल-कुशेशय-विभेदनाक्षमगपि कैरवविकासनक्षमं चन्द्रं धारयन्त्या रजन्याः 'श्यामा' इति नाम निरर्थकमभूत्।[१०१]

प्रकृतौ मानवीकरणमनेकशो दृश्यते काव्येऽस्मिन्। 'पर्याप्तजृम्भणभरादि' पूर्वोक्ते (२०।६५) श्लोके स्ववल्लभं दृष्ट्वा परिवर्तिताङ्गभङ्गाया योषितः सर्वापि चेष्टा चित्रवदक्ष्णोः समक्षमायाति। शीतलानामिन्दुकिरणानां सम्पर्कमवाप्यैव दलाम्बरसंवृतांगाः पद्माकरा भान्ति। यथा शीतार्दितः कश्चिद् वस्त्रं परितः समावृत्य तिष्ठति तद्वदिति भावः।[१०२]

प्रवहमाणः सायन्तनः समीरणः कदाचिन्मदीयं सर्वमपि गन्धकोषं मा मोषीदिति कृत्वैव मन्ये भयात्कमलं संकुकोच।[१०३] या कमलिन्योऽह्नि कठोर-

---

९७. भाति स्म मारुतविधूतपलाशरन्ध्रलब्धप्रवेशशिशिरांशुमरीचिशारम्।
छायां विनेशुपि रवौ दधती तरूणां, संवीतचित्रमृगचर्मपटेव भूमिः॥(२०।५६)

९८. भाति स्म संवलित तारकचक्रवालचन्द्रातपच्छुरणपाण्डुरमन्तरिक्षम्।
विभ्रज्जराजरठजिह्मगदीर्घभोगमुक्तस्फुरद्विकटकंचुकपट्टलीलाम्॥(२०।५८)

९९. जिह्मीकृताब्जनयनं श्वसनानुबन्धकम्पाकुलस्थिति विपाण्डुरतां दधत्या।
संकोचमाप जरयेव कृतावमर्शमिन्दुत्विषा कमलकाननचक्रवालम्॥(२०।६१)

१००. आप्लावितावनितले नवचन्द्रिकाम्बुपूरे निमग्नमथकैरवचक्रवालम्।
उत्तारलग्नमिव मन्दसमीरयातपारिप्लवीकृतपलाशभुजं व्यराजत्॥(२०।६३)

१०१. वैकुण्ठशंखधवलाब्जविभेदकुण्ठसोत्कण्ठकैरवकरालकरोत्करेन्दुः।
श्यामेति रात्रिरगमत्स्फुटमर्थशून्यपर्यायतां क्षततमः परिपाण्डुरश्रीः॥(२०।६४)

१०२. श्च्योतत्सुधाशिशिरनिर्झरशीकरार्द्रचन्द्रांशुराशिपरिमृष्टकरालकोषाः।
पद्माकराः सपदि संकुकुचुर्निशीथशीतार्दिता इव दलाम्बरसंवृतांगाः॥(२०।६७)

१०३. निश्शेषमेव सुरभिं मम कोपगन्धमावान् दिनक्षयमरुन्मम नैष मोषीत्।
इत्थं भियेव कमलं कलयांचकार संकोचसंकटविशंकटकुड्मलत्वम्॥(२०।६९)

निदाघकिरणैरपि न मम्लुस्ता सुधाशीतलैः शशिकिरणैः संकोचमापुः। सत्यं कमलनयनाः (१. कमलिन्यः २. कामिन्यश्च) वामचरिता एव भवन्ति।[१०४] कुमुद्वत्या रसपानलोलुपं भ्रमरं कमलिनी परकीयानुरक्तमीर्ष्याकषायितेव नायिका स्वदलनिगडबन्धने ववन्ध।[१०५] जगति कलावतः पुरुषस्य कृते किमप्यसाध्यं नास्ति। तदैव तु कलावता (चन्द्रमसा) प्रस्तरमया अपि चन्द्रकान्तमणयस्तरलीकृताः। यथा कलावान् विदग्धो नागरोऽतितमां कठोरा अपि योषितो द्रावयति।[१०६] शशिना स्वपादैः सम्पीडय कमलं यत्संकोचितम् तेन स्फुरत्केसरदन्तपंक्ति कुमुदं स्व प्रतिपक्षस्य कमलस्यापमानं दृष्ट्वा मुदा हसतीव।[१०७] मनसिजाक्रान्तेन कलाधरेण सुप्ता कुमुदिनी स्पृष्टाऽन्तः स्थभ्रमरक्वणनव्याजेन हुंकारं कुर्वन्तीव तथा बुबुधे यथा काचित् साध्वी केनापि कलंकिना स्पृष्टा हुंकुर्वती स्थिता भवति। चन्द्रोऽपि सकलंक एव। कल्पनायाः कीदृशो मनोरमो विलासः।[१०८] स्व प्रियतम-भास्कर-विरह-सम्प्राप्तमूर्च्छायाः पद्मिन्या उपरीन्दुना शान्त्यर्थं भृशं मृदुतया स्थापिता किरण-मृणालदण्डा अपि खेदायैव समभूवन्।[१०९] इन्दुं निरीक्ष्य कैरवमनंगतूणीरलीलामधारयत्। स्फुरन्तः केसरचया एव तत्र नाराचा आसन्। अर्धविकसिताः कलिका एव तूणीरमुखस्थानीया आसन्।[११०] कुमुदिनी स्वप्रियस्य करस्पर्शवाप्य 'चक्रीभवच्चारुकुचा' चकाशे।[१११]

---

१०४. स्पृष्टा न या दिनकरांशुभिरह्नि वह्निगर्भैरपि क्वचन चवलमुरम्बुजिन्यः।
मम्लुस्तरां शशिकरैरपि ताः सुधार्द्रैरक्षुण्णवामचरिता बत, पद्मनेत्राः॥(२०।७०)

१०५. पातुं मधून्यधिकुमुद्वति बद्धरागमुद्धूतपक्षति मधुव्रतमुत्पतन्तम्।
श्लिष्यत्सरोजदलसम्पुटपीडितांघ्रिमीर्ष्यावशादिव कुशेशयिनी बबन्ध॥(२०।७१)

१०६. साध्यं न तज्जगति यन्न कलावतोऽस्ति चन्द्रः करैः सकलदिङ्मुखकर्णपूरैः।
विष्यण्णवारिविसराः परितो निनाय यच्चन्द्रकान्तदृषदोऽपि तदार्द्रभावम्॥(२०।७२)

१०७. संकोचघूसरमकारि सरोजखण्डमग्रे यदस्य शशिना परिपीड्य पादैः।
तेन स्फुरद्विकटकेसरदन्तपंक्ति तोषादिवातिविशदं कुमुदं जहास॥(२०।७३)

१०८. सन्धुक्षितासमशरेण करैरवाप्तनिद्रा सती कुमुदिनी शशिनावमृष्टा।
हुंकारिणीव बुबुधे कमलोदरस्थकुचन्मधुव्रतकुलक्वणितानुवन्धैः॥(२०।७४)

१०९. प्रेयोंशुमालिविरहव्यसनानुबन्धमूर्च्छानिमीलितसरोजदृशो नलिन्याः।
न्यस्ताः सलीलमवन्नुपरीन्दुनापि खेदाय कोमल–मरीचिमृणालदण्डाः॥(२०।७५)

११०. पर्युच्छ्वसत्सरलकेसरकांचनोत्थनाराचचक्रपरिपूरितकुक्षिरन्ध्रम्।
इषद्विभिन्नमुकुलाननमिन्दुभाभिरादत्त कैरवमनंगनिषंगलीलाम्॥(२०।७७)

१११. उद्भिन्नकण्टकभरात्पुलकानुवन्धपर्याकुला कुमुदिनी मुदिता प्रदोषे।
धूतारविन्दरुचिचन्द्रकरप्रणोदचक्रीभवत्कुमुदचारुकुचा चकाशे॥(२०।७९)

चन्द्रोदयस्य विषये हृदयाह्लादिनो विचाराः पार्वतीमुद्दिश्य भगवता शंकरेण एकविंशे सर्गे प्रकाशिताः सन्ति । पूर्वं प्रकाशिता अपि केचन भावा नवीनरूपे तिष्ठन्ति । तेषु कतिपये इमे — यतश्चन्द्रोऽत्रेर्नयनात्समुद्भूतोऽस्मादेवास्य मध्यभागस्तस्य कनीनिकासम्पर्कात्कृष्णिमानं भजते ।[११२] उदयाचलमारूढवता चन्द्रेण केलिमिव कर्तुं निज-कौमुदीपिष्टातकस्य मुष्टिना हतं कमल-लोचनमियं कमलिनी निमीलयति ।[११३] असौ कुमुदिनीनामुरोजःस्थलीं मधुकरनिकरैः पत्रावली-मण्डितामिव करोति ।[११४] इयं कुमुद्वती निशाकरेण स्वबिम्बेन वितीर्णज्योतिरासवं स्वकैरवाननमुत्थाय सलालसं पिबतीव ।[११५] दंष्ट्रयैव स्वकान्त्या पर्वतकुलमिवान्धकारं विदारयन्नसावादिवराहलीलामनुकरोति ।[११६] पद्मिनी निशाकरेण करैः स्पृश्यमाना मन्युविवर्तितवदनेव संजाता । मुखपरिवर्तने वेणीलतेव भ्रमरावली तस्य कुड्मलपयोधरे समागत्य पतिता ।[११७] समीपस्थया भ्रमरमालया कुमुद्वतीन्द्रनीलमणिवलयमिव धारयन्ती प्रतीयते । यानि पत्राणि समुच्छ्वसन्ति तान्येव वलयधारणक्रियायां स्फुरन्त्योऽगुल्यः ।[११८] परागपिंग-वर्णक-पूरितैः कैरव-शृंगकैः कुमुदिन्यः सविलासं स्वप्रियतममिन्दुं हन्तुमिव समुद्यताः सन्ति ।[११९]

## प्रभातवर्णनम्

हरविजयस्याष्टाविंशतितमे सर्गे पूर्णतः प्रत्यूषवर्णनमस्ति । एकोनविंशतितमे

---

११२. इतोऽधुनाविष्कृतलक्ष्म लक्ष्यतां निशाकरस्योत्थितमत्रिलोचनात् ।
विभाति तन्वंगि तदीयतारकत्विषावलीढोदरवर्त्मं मण्डवम् ॥ (२१।२)

११३. विधित्सुना केलिमिवोदयश्रिता निजप्रभाकुंकुमवासमुष्टिभिः ।
पराहतं पक्ष्मलमेणलक्ष्मणा निमीलयत्यम्बुजनेत्रमब्जिनी ॥ (२१।३)

११४. असौ शशांकः कुरुते समुन्नताः कुमुद्वतीनां कुमुदस्तनावलीः ।
निजप्रभाहारलताविभूषणा षडंघ्रिकालागुरुपत्रभंगिनीः ॥ (२१।५)

११५. निशाकृता बिम्बमुखेन पाटलप्रभासवं प्रत्तमसौ कुमुद्वती ।
अपावृतोत्तानितकैरवानना, चिरं नतभ्रूः पिबतीव सस्पृहम् ॥ (२१।८)

११६. विदार्य दंष्ट्राकुलकोमलत्विषा निशान्धकाराद्रिकुलं स्वलेखया ।
बिभर्त्यसावादिवराहविभ्रमं सदा तु लक्ष्मोद्वहनेन चन्द्रमाः ॥ (२१।६)

११७. मृणालिनीन्दोः स्पृशतः करैः क्रुधा विवर्तयन्तीव कुशेशयाननम् ।
बिभर्ति पृष्ठागतया कृतश्रियं द्विरेफ—वेणीलतयाम्बुजस्तनम् ॥ (२१।११)

११८. कुमुद्वतीकैरवहस्तमुच्छ्वसद्दलांगुलीकं श्रियमेति बिभ्रती ।
अवाप्तपार्श्वस्थितभृंगमण्डलीकृतावनद्धासितकम्बुविभ्रमम् ॥ (२१।१४)

११९. कुमुद्वतीभिर्मकरन्दकुङ्कुमच्छटापिशंगाम्बुविपूरितोदरः ।
सविभ्रमं कैरवशृंगकोत्करः क्षपाकरं हन्तुमिव व्युदस्यते ॥ (२१।२०)

सर्गे वन्दिभिर्भगवत्प्रबोधनावसरेऽपि एकत एकं नवीना भावाः सहृदयान् विमोहयन्ति । रत्नाकरस्य प्रभात-वर्णनं नूनम् अलौकिकं वर्तते । अभिनवा उत्प्रेक्षा, सूक्ष्मनिरीक्षणं, हृदयग्राहि बिम्बविधानं, स्वाभाविकत्वं चास्यां प्राभातिक्यां सुषमायां चतुश्चन्द्रीं योजयन्ति । अत्र कानिचिदुदाहरणानि दीयन्ते ।

उषसो रक्तिमा यथा सप्तसप्तिवाहानां पुच्छनद्धविषधराणां सततगमनश्रमतया मुखान्निर्गतज्वालमालेव प्रतीयते।[१२०] तारकाणां कुलानि प्रातःकाले प्रतिदिशं एवमधःपतन्ति यथा त्रिभुवन-पद्मकोषात् पतन्त्यो मकरन्दधारा भवेयुः।[१२१] तारकगणा गगनतलात् सूर्यरश्मिभिरेवं विलुप्यन्ते यथा अचतुरमणिकारैरनुविद्धा मणयः परिभ्रष्टाः सन्त इतस्ततः समुत्पतन्ति।[१२२] नभो भ्राष्ट्रमिव। उषसो रागस्तस्मिन् वह्निज्वालाः, रात्रेरवशिष्टं तमो धूम इव, उडुगणाश्च भर्ज्यमानाः लाजाः सन्ति ये समुत्पत्य इतस्ततः पतन्ति।[१२३] उडुगणानां लाजैः साकं सादृश्यं नूनं कवेः किमपि सूक्ष्मनिरीक्षणपटुत्वमभिव्यनक्ति। प्रातस्तारका अपि श्वेता भवन्ति लाजाश्चापि। इति सादृश्यस्यात्यन्तं युक्तियुक्तत्वम्।

रात्रिर्गता, दीपशिखानवरतं वेपते। दृश्यमिदं निरीक्ष्य कविरुत्प्रेक्षते मन्ये, दीपकमेतद्विचिन्त्य यद् रजन्यां प्रियतमहृताम्बरया तरुण्या नाहमपास्तः, इति प्रमोदपरवश इव नृत्यति, आहोस्वित् रात्रेः मादकदृश्यानि स्मारं-स्मारं मदविह्वलः सन् नरीनृत्यतीव।[१२४] प्रभाते कैरविणी मुद्रिता संजाता, इत्थं प्रतिभाति यत्तया स्वकीयं कुमुदनयनं दिनकरकराघातात् निमीलितं भवेत्। अवश्यायकणाश्चाश्रूणीव प्रतिभान्ति।[१२५] प्रभाते कालार्णवात् दिवसो मणिरिव विनिर्ज-

---

१२०. अधिगगनतलं परिस्फुरन्ती, कपिशितकौशिकदिङ्मुखा बभासे।
दिनकररथवन्धतान्तभोगिश्वसितकृशानुशिखावलीव सन्ध्या ॥ (२८।६)

१२१ प्रतिककुभमधोगलन्ति सन्ध्याकपिशितमांसि कुलानि तारकाणाम्।
विदधति भुवनारविन्दकोपच्युतमधुशीकरविन्दुवृन्दलीलाम् ॥(२८।१२)

१२२. प्रतिदिशमुडुरत्नराशयोऽथ स्तिमिततमोभिदुरत्विषः प्रणेशुः।
दिनकरकिरणैः समुन्मिपद्भिः सपदिकुवैटिकैरिवानुविद्धाः ॥(२८।१५)

१२३. स्फुरितवहुलसान्ध्यरागवह्नौ सतिमिरधूमशिखेऽम्वराम्वरीषे।
उपसि विरलभृज्यमानलाजाश्रियमुडुसंहतयः क्षणं वितेनुः ॥(२८।१६)

१२४. मदविगलितलज्जया युवत्या दयितहृताम्वरयास्मि न व्यपास्तः।
इति पवनविघूर्णितः प्रभाते प्रमदवशादिव. नृत्यति स्म दीपः ॥(२८।१७)

१२५. दिनकरकरघातताडितं सद्रजनिजलाश्रुपरिप्लुतं तदानीम्।
कुमुदनयनमाशु कैरविण्याः प्रबलरुजेव कृतव्यथं न्यमीलत् ॥(२८।२५)

गाम।[१२६] उषसि म्लानं कुमुदं खेदतया, विकसितं कमलं च प्रहर्षपरवशतया मधुकरो विषमस्थितिर्भवन् युगपदेव लेढि।[१२७] सूर्यविम्बं दिवसश्रियो मुखमिव विभाति यत् संसारस्याभिनवानि दृश्यान्यवलोकयितुमुदयाचलगवाक्षात् पश्यदिव स्थितम्।[१२८] प्राभातिकसमीरणप्रकम्पिताः कैरविण्यश्चन्द्रमसं निपतन्तं वीक्ष्येव प्रकम्पिताः।[१२९]

नलिनानि नाद्यापि विकसितानि। तेषु भ्रमराः निगडिताः। एतस्मिन्नन्तराल एव कश्चिदन्यो मधुकरः समायातः मण्डलाकारेण च भ्रमन्नन्तःस्थितान् सर्वान् स्वबन्धून् प्रत्याययतीव यदयं भगवान् भास्करो भवतां सर्वेषामपि यन्त्रणां द्रागेवापनेष्यति।[१३०]

एकोऽपरो भावोऽप्यवलोकनीयः। निखिलामपि रजनीं चन्द्रकान्तशालमंजिका चन्द्रमसो द्रविता अभूवन् परं प्रभाते यदैव ताभिर्दृष्टं यत्तासां प्रेरणास्रोतश्चन्द्रः सूर्येण बलात् क्षिप्तस्तदैव ताः शोकार्ताः सत्यः सद्य एवाशुष्यन्, चन्द्रास्ते चन्द्रकान्तमणीनां शोषणे' कीदृशी मनोज्ञा उत्प्रेक्षा कविनाऽविर्भावितास्ति।[१३१] प्राभातिकेन समीरणेन कमलं मधुप इव घूर्णति, विकसितानि दलान्येव तस्य चषकः, यस्मादयं वालातपासवं पिबतीव।[१३२] कुमुदान् विहाय कमलावलीं व्रजन्ती मधुकरपंक्ती रात्रीव प्रतिभाति, याऽवशिष्टेनान्धकारेण सहिता दिवाकर भयात् पलायमाना याति।[१३३] एवमेव क्वचिद् रविः सांयात्रिक इव रथपोत–

---

१२६. दिनकरकिरणप्रवालवल्लीवलयभृतः स्फुरितोडुपात्तशोभात्।
भुवनपुलिनसीम्नि भासुरश्रीर्दिवसमणिः प्रससार कालसिन्धोः॥(२८।२६)

१२७. कुमुदमुषसि संकुचत्सखेदः कमलमहो विकसत्पहृष्टचेताः।
उभयरसविसंस्थुलो रसायुर्मधुसुतिनिर्भरं लिलेह॥(२८।३०)

१२८. उदयगिरिशिखागवाक्षभूमौ भुवनविलोकनकौतुकावसक्तम्।
मुखमिवदिवसश्रियो विरेजे धृतनवकुङ्कुमलेपमर्कविम्वम्॥(२८।३१)

१२९. स्फुटमधिगतसंभ्रमा भवन्त्यः शशिनि लिलम्बिपमाणधूम्रविम्बे।
उशसि मृदुसमीरघट्यमाना विशदमवेपिषताशु कैरविण्यः॥(२८।३५)

१३०. द्रुतमयमवमोचयत्यपास्य च्छदपटलोदरयन्त्रणां रविर्वः।
इति कलरणितैरिवाम्वुजानामुपरि चरन् मधुपानुवाच भृंगः॥ (२८।४५)

१३१. शशधरमणिसालभंजिकाभिर्भवनविटंकटंकिताभिः।
दिनकरकिरणाहताभिरिन्दौ विनिपतिते शुशुषे शुचेव सद्यः॥ (२८।४६)

१३२. स्फुटदलमणिगर्भशुक्तिपीस्फुरदरुणातमशीधुशीकरौघः।
मदविवश इव प्रभातवातव्यतिकरतः कमलाकरश्चकम्पे॥ (२८।५१)

१३३. त्वरितनधिसरोजिनि व्रजन्ती मधुपततिः कुमुदाकराच्चकाशे।
दिवसकरभयात्पलायमाना, तिमिरपरिप्लवधूसरेव रात्रिः॥ (२८।५२)

मारुह्याकाशसमुद्रे नक्षत्रमणीन् संगृहीतुमिवावतरन्नुत्प्रेक्षितः ।[१३४]

चन्द्रास्तेऽपि कविना नूत्ना उत्प्रेक्षाः कृताः सन्ति । तासु कासांचित्प रिचयोऽधस्तात्प्रस्तूयते :

द्यौराकाशवाची स्त्रीलिंगशव्दः । अमुमेव मनसि निधाय कविः सम्भावनां करोति । चन्द्रोऽस्तमयते, सूर्य उदेति, मन्ये द्यौर्निखिलामपि रात्रिं क्वचिद्अन्यत्रापवाह्य समागतवन्तं रविं द्रष्टुमपि नेच्छति । अतएव तया स्वकीयं चन्द्रमुखम् अवनामितमस्ति ।[१३५] प्रभातं संवृत्तम् । सूर्यमवलोक्य तत्किरणैर्भयातुरा रजनी संजाता । तदायामिमां दुर्दशां वीक्ष्य चन्द्रस्य हृदयमद्रवत् । स तां स्वकीयांके निधाय द्रुतमस्ताचलाभिमुखमधावत् । तत्कलंक एव सा रजनी ।[१३६] त्रिभुवनमेव विपिनं, तस्मिन् कठोर दिनकर-किरण-कुठारच्छेदनात् निशालताया रजनिकरस्तबकोऽम्लायत ।[१३७] मम प्रियतमश्चन्द्रस्त्वनेन तिरस्कृत एव, कदाचिदयं मामपि भावमानयेत इति मत्वा कुमुदिनी स्वकुड्मलकरांजलिं समानीय, शोकार्ता, सूर्यं याचत इव ।[१३८]

कवेः प्रतिभा सामान्यप्यर्थजातं नितान्तमभिनवे रूपे प्रकाशयति । प्रभाते मण्डलाकारं भ्रमन्तीं मधुकरालीं, मन्ये, कमलिनी स्वदयितस्य भानोः स्वागतार्थं तोरणस्रजमिवातानीत् ।[१३९] एवमेवान्यत्र प्रसारिता नलिन्या कमलकराग्रपुटाः कवये, प्रियतमार्काय पाद्यं दित्सवः करा इव प्रतिभान्ति ।[१४०] मधुरां भ्रमरक्वणनवीणां श्रावं-श्रावं, मन्ये, कुमुदवनं निद्रामग्नं वभूव ।[१४१]

---

१३४. विकटभुजगशृंखलावनद्धं सपदि रथप्लवमर्यमाधिरुढः ।
ग्रहमणिनिचयं जिघृक्षुराप स्फुट इव पोतवणिङ्नभःसमुद्रम् ॥ (२८।५३)

१३५. उपगतमपरत्र वासतेयीं द्रुतमपवाह्य पुनः प्रभातकाले ।
क्रुध इव रविमक्षमेक्षितु द्यौरवनतमिन्दुमुखं चिरं वभार ॥ (२८।५५)

१३६. दिनकरमुदितं निरीक्ष्य चन्द्रः स्फुरिततदंशुशिखावमर्शभीताम् ।
स्फुटहरिणनिभेन रात्रिमंके दधदिव सम्भ्रमतोऽस्तशैलमभ्यैत् ॥ (२८।५६)

१३७. त्रिभुवनविपिने कठोरभास्वत्किरणकुठारनिपातलूनमूर्तेः ।
स्फुटमलमधुपो निशालताया रजनिकरस्तवकः क्रमेण मम्लौ ॥ (२८।५७)

१३८ दयितममुं विधूय तेजो दिनकर मा परिभूर्निशाकरं मे ।
इति विरचितकुड्मलांजलिश्रीस्तमतिशुचेव कुमद्वती ययाचे ॥ (२८।५८)

१३९. मधूकरपटलीं मधुस्पृहान्धामुपरि कुशेशयनी परिभ्रमन्तीम् ।
अरचयदुषसि प्रियस्य भानोः कुवलयवन्दनमालिकाभिवारात् ॥ (२८।५९)

१४०. दिशि–दिशि दिवसेश्वरस्य पाद्यस्थितिमिव पंकजिनी रसेन दित्सुः ।
नवकिसलयपाटलान्विरेजे कमलकराग्रपुटान् प्रसारयन्ती ॥ (२८।८४)

१४१. विशदमधुरसारणानुबन्धक्वणदलिसंहतिवल्लकीनिनादैः ।
जनितसुखमिव क्षपावसाने कुमुदवनं प्रतिपन्ननिद्रमासीत् ॥ (२८।६०)

कमलिनीकोषे वन्दिनो विस्फुरितान् भ्रमरान् लक्षीकृत्य कविरुत्प्रेक्षते यत् कमलिनी चलद्दलहस्ता, अन्तर्निरुद्धमिलिन्दध्वनिव्याजेन दिवसान्तवेलायां भास्कर कृतां प्रवञ्चनां स्मरन्ती क्रुधा — "समस्तां रात्रिं क्वचिदन्यत्रातिवाह्य मां स्पृशन् सम्प्रति त्वं न विलज्जसे! कस्य त्वम् ? स्थायिरूपेण? त्वं तु संचारी असि।" इति सेर्ष्या तं (सूर्यम्) उपालभते।[१४२] साध्व्यः कुमुदिन्यः परपुरुष-सूर्य-स्पर्श-परिजिहीर्षयेव संकोचमवापुः।[१४३]

निशायां भुजंग्याः समारोपस्तु बहुभिः कविभिः कृतः परमसौ नूतनामेवोद्भावनामकरोत्। तथाहि—दिवसोदयकालिकाः दिनकरकरा एव यष्टयः, कृष्णा रजनी भुजंगी, ग्रहगणा एव दन्ताः, तिमिरौघ एव विषम्, चन्द्रमरीचिचय एव निर्मोकः, दण्डेन च दन्तेषु चाल्यमाना भुजंगी भयान्निर्मोकमुज्झतीति गारुडिकानां विश्वासः, सम्पिण्डितश्चार्थोऽयम्—सूर्यकिरणैः दन्तेष्विव ग्रहगणेषु घट्यमाना रात्रि–भुजंगी, चन्द्रमरीचिनिर्मोकं, जहाति, तमोविषंचोद्वमति। अर्थात् प्रभाते बालारुणस्य किरणाः भूमौ निपतिताः, तिमिरनिचयः समाप्तिं व्रजति ग्रहगणाश्च विलीयन्ते, चन्द्रिका चापि तिरोहिता भवति।[१४४]

जले प्रतिबिम्बितं सूर्यमवलम्ब्य कियती मनोहरा विचारसरणिः शरणीकृता। इत्थमाभाति यत् भास्करः संध्यासमयकृतायाः प्रवंचनायाः कृते कमलिन्याश्चरणयोर्निपतन् स्वापराधस्यार्थं तां क्षमां याचते।[१४५] आकाशात् पतन्तं चन्द्रमण्डलमवलोक्य स्वगर्भबद्धानां भ्रमररत्नाणां मिषेण 'अहो बत, एतच्चन्द्रमण्डलमाकाशात्पतति तारकानिचयोऽपि न दृश्यते'—इति वददिव क्रन्दनं करोति[१४६] कुमुदवनम्। नभसि दूरमारूढं सूर्यमवलम्ब्यावतारितं कल्पनाकौशलं कं न चमत्कृतिपरवशं विदधाति ? सहस्ररश्मिग्रंहमणिकल्पमाषं व्योमसागरं त्वरितं लंघितु-

---

१४२. क्षपितरजनिरागतोऽपरत्र प्रकटितराग न लज्जसे करैर्माम्।
स्पृशसि यदधुना जहीहि कस्य त्वमिति दिनात्ययखण्डनां स्मरन्ती ॥
विरलविपमपत्रसंस्थमब्जं चलदलिपल्लवहस्तचारु कृत्वा।
भ्रमरविरुतिभिर्जगाद सेर्ष्यं तपनमितीव सरोजिनी सरोषम् ॥ (२८।६३-६४)

१४३. प्रकृतिशुचितया परावमर्शं सपदि विसोढुमिवाक्षमाभिरारात्।
स्पृशति दिनकरे करैः सरागं दिशि-दिशि संकुचितं कुमुद्वतीभिः ॥ (२८।६६)

१४४. अरुणकिरणदण्डघट्यमानस्फुटतिमिरौघविषा निशाभुजंगी।
ग्रहगणमणिमण्डिता तदानीं विगलितचन्द्रमरीचिकंचुकासीत् ॥ (२८।६७)

१४५. दिवसविरतिखण्डनापराधस्मृतिसरुषोम्भसिबिम्बितोऽम्बुजिन्याः।
न्यपतदनुनिनीषयैव भास्वानरुणदलांगुलिपादपद्ममूले ॥ (२८।६८)

१४६. निपतति शशिमण्डलं हहा ! किं नभसि न दृश्यत एव तारकौघः।
कुमुदवनमितीव गर्भबद्धभ्रमरवैरथ पर्यदेवतारात् ॥ (२८।६९)

मिच्छुर्मन्ये दीर्घंकरानिव स्वकरान् सन्तरणरसादिव विस्तारयति । यथा कश्चित् पुमान् नदीम् उत्ततुं शीघ्रतया स्वहस्तावुत्क्षिपति, तथैव सूर्योऽपि नभःसमुद्रं ततुं स्व-किरणकरान् संचालयति ।[१४७] प्रभाते सूर्येण स्वकरैः दिवसदर्पणात् अन्धकार-मलं प्रोञ्छ्य सः त्रिभुवनस्य कृते दर्शनयोग्यः (स्वच्छः) कृतः ।[१४८] अन्धकारं मृदितवता सूर्येण दिश एवं दूरं क्षिप्ताः, यथा कश्चित्तेजस्वी पुमान् परपुरुषसम्पर्कंदूषिताः कामिनीः । अन्धकारश्चात्र परपुरुषः, दिशां च तत्सम्पर्कात् नैरन्तर्यं (एकतानता) तदेव कविना मलीनसत्वेन शंक्यते । दिशां निरन्तरता सूर्येणापाकृता । एवं सः मनस्वीवाचरति ।[१४९] अहर्मुखे चक्रवाको मृणालदण्डं भक्षयति स्म । कविरत्रोत्प्रेक्षते यत् स स्ववियोगकारणस्य चन्द्रमसः खात्पतिताः कलाः प्रतिशोधधिया भक्षयति, अयं रात्री मम वियोगहेतुः, तदात्वहं विवश आसम् परमधुनासमर्थोऽहमेनं भक्षयामि ।[१५०] पयसा दग्धस्त-क्रमपि फूत्कृत्य पिबति—इति न्यायात् स मृणालखण्डेषु चन्द्रकला–भ्रान्तिं करोति ।

एतत्समनन्तरमेव रूपान्तरितमेतन्मृणालभक्षणदृश्यम् । चक्रवाकेण स्वद-यिताया मुखाद् विसकलिका एवमार्कषिता यथा तेन विरहव्यथाशलाका गृहीत्वा निस्सारिता भवेत् ।[१५१] एवं सूर्योदय-सम्बन्धे कवेरुर्वरेण मस्तिष्केन अद्भुता कल्पनासृष्टिः कृता वर्तते ।

एकोनत्रिंशे सर्गे सौखशायिकाः (वन्दिनः) भगवत्प्रबोधनावसरे प्रभातस्य विविधरूपैर्वर्णनं कुर्वन्ति । अत्रापि पूर्वकृता उत्प्रेक्षा रूपान्तरे परिणमय्य कविनाऽनेकशः स्थापिताः । केचन भावास्तु सर्वथा नवीना एव । प्रातःकाले-ऽवश्यायकणैः कगलितं कमलनयनं स्फुरन्मन्ये, कमलिन्यै प्रियतमभानोः समा-

---

१४७. ग्रहमणि शवलं नभःसमुद्रं सपदि लिलंघयिषुर्निदाघरश्मिः ।
दिशि–दिशि विचकार दैर्घ्यमाजः प्लवनरसादिव दूरमंशुवाहून् ॥ (२८।७२)

१४८. उषसि घनतरान्धकारपंकव्यतिकरमार्जननिर्मलं कराग्रैः ।
अकृत दिवसदर्पणं त्रिलोक्याः सपदि विलोकनयोग्यमंशुमाली ॥ (२८।७४)

१४९. अमृदु ममृदुपा निशातमस्तद्व्यतिकरदोषमलीमसत्वमाप्ताः ।
स्फुरदरुण रुचा रुषेव दूरं दिवसकरेण निरासिरे दशाशाः ॥ (२८।९१)

१५०. धवलविसलतारसेन कोकः प्रविकटचंचुपुटोद्धृताश्चवाद ।
क्रुध इव शशिनो वियोगहेतोर्गगनतलात्पतिताः कलाः कथंचित् ॥
चंच्वग्रखण्डितमुखाद्विचकर्ष सूत्रजालं मृणालशकलात्क्षणदाप्रियस्य ।
कोको निलीनमहिमांशुभयात्तदीयरन्ध्रोदरेषु करचक्रमिवक्रुधेन्दोः ॥ (२८।१०६-१०८)

१५१. सरसविकटचंचुकोटिलग्नां सरभसवृत्तिरुपेत्य चक्रवाक्याः ।
हृद इव विरहव्यथा–शलाकां विसकलिकां विचकर्ष चक्रवाकः ॥ (२८।१०७)

गमस्य सूचनां ददाति। वामानामंगादिस्फुरणं शकुनसूचकम्।[१५२] बालातपारुणितं दिवसश्रियो मुखं पत्रमंजरीमिव दधदाभाति।[१५३] स्व प्रियतमचन्द्रस्याभिभवकर्त्तारं भानुमसहमाना रजनी निमीलिततारका सम्प्रति गिरिगह्वरं प्रविशति।[१५४] स्वकीयं स्रवन्मधुग्रहणाभिलाषेणैव, मन्ये, कमलानि स्वारुणपत्रव्याजेनारुणमणिशुक्तिपात्रं प्रसारयन्ति।[१५५] इमे भवनदीपका निशीथिन्यां सुन्दरीणां कपोलस्थलस्य कांचनकान्त्यैव, शंके पीततां धारयन्ति।[१५६] समुपागतामपिप्रियां चक्रवाकः कमलपरागस्थगितनयनो न पश्यति।[१५७]

रात्र्यपगमेऽपि कामिनी बाहुपंजरं न श्लथयति।[१५८] कमलिनी स्वकीये कोषे भ्रमरान् विरहाग्नेश्चिह्लानीव धारयति।[१५९] उदयास्तगिरिविष्टरमुपविष्टाविमौ सूर्यचन्द्रौ फलक इवाम्बरेऽक्षैरिव नक्षत्रैः द्यूतक्रीडां कुरुतः।[१६०] सूर्यस्य चिराददर्शनादेव कमलिन्यवश्यायकणान् धारयति। वाष्पबिन्दून् इव।[१६१] कमलकोषादुत्तिष्ठन्ती भ्रमरपंक्तिर्भास्वता भूषणसमुद्गकादुत्थापिता

---

१५२. अयं क्षणाद्दयितमेन भानुना समागमस्तव भवतीति शंसितुम्।
स्फुरत्यदस्तरलितमौपसानिलैः कुशेशयं नयनमिवाम्बुजश्रियः॥ (२६।४)

१५३. दिनश्रियो मुखमरुणारुणप्रभापिशंगितस्फुटघनमेघराजकम्।
विराजति प्रतिनवकुंकुमच्छटाकृतत्विषं दधदिव पत्रमंजरीम्॥ (२६।८)

१५४. अपारयन्त्युपहितशीतदीधितिप्रभामिवाह्मिकरधामसम्पदम्।
निमीलितातनुतरतारकाधुना विभावरी विशति महीध्रगह्वरम्॥ (२६।६)

१५५. विकासिभिर्दिशि-दिशि गर्भनिर्भरस्रवन्मधुग्रहणधियेव सत्वरम्।
सरोरुहैर्दलपटलच्छलान्मिथः प्रसार्यतेऽरुणमणिशुक्ति-मण्डलम्॥ (२६।१३)

१५६. अधिक्षपं धवलकपोलमण्डलस्फुटोदितप्रतिमतया मृगीदृशाम्।
तदाहितामिव परिपाण्डुरश्रियं दधत्यमी तव भवनप्रदीपकाः॥ (२६।१६)

१५७. उपेयुषीं कमलरजोवृतेक्षणो न वीक्षते रथचरणाह्वयः प्रियाम्।
सुखं चिरादुपनतमप्यसंशयं व्रजत्यहो विधिहतकस्य दूरताम्॥ (२६।१७)

१५८. निशीथिनीव्यपगमदुन्दुभिस्वनैर्विनिद्रतामपि सहसाभ्युपागता।
यियासुरप्यभिमतकण्ठगोचरं न कामिनी श्लथयति बाहुपंजरम्॥ (२६।२१)

१५९. मधुस्पृहानिभृतनिलीनषट्पदं कुशेशयं हृदयमिवारविन्दिनी।
बिभर्त्यसौ तपनवियोगसंज्वरज्वलच्छिखाशतशिखिदाहधूसरम्॥ (२६।२८)

१६०. स्फुटाक्षताञ्चितखचितोडुशारतामुपागते फलक इवाम्बरेऽधुना।
श्रितोदयापरगिरिविष्टरावुभौ दुरोदरं तनुत इवेन्दुभास्करौ॥ (२६।३६)

१६१. अहर्पतेश्चिरमनिमेषदर्शनक्लमादिव स्रुतघनवाष्पशीकरम्।
सरोजिनी रजनिपयःपरिप्लुतं बिभर्त्यसौ विकसितमञ्जलोचनम्॥ (२६।४२)

मरकतमणिहारावलीव भाति ।[१६२] प्रभाकरः पद्मिनीं रमयति ।[१६३] कापि मत्तकाशिनी प्रियमद्यापि न मुञ्चति ।[१६४]

श्लेषयमकादीनामपि प्रभातवर्णने कविः प्रयोगं करोति । दिङ्मात्रमुदाह्रियते । यमकं यथा :

नभस्वतामुदवसितोदरोत्थिताः सुगन्धितां विदधति वासरेणवः ।
पतन्त्यमूर्ग्रहततयो दिवाकरप्रभाहृता दिशि-दिशि वासरेऽणवः ॥
(२६।५१)

उदवसितेभ्यः=गृहेभ्यः समुत्थिताः पटवासरेणवो वायौ सौगन्ध्यमापादयन्ति । अणवः (स्वल्पाः) ग्रहपंक्तयश्च सूर्यकान्तिनिष्प्रभाः सत्यो दिशि-दिशि पतन्ति ।

उदाहरणान्तरम् :

सरोजिनी पयसि हृदीव बिम्बितं श्रितं तटानहिमकरं दधार या ।
नयालयः स्फुटितकुशेशयोत्थया न तोषिता नहि मकरन्दधारया ॥
(२६।५२)

तटान् श्रितम् अहिमदीधितिं कुशेशयिनी हृदीव पयसि दधार । तया मकरन्दधारया, अलयः (भ्रमराः) तोषिता न, इति न, अपितु तोषिता एव । श्लिष्टं यथा :

शकुनिभिरधिशिश्रिये वनोर्वी स्फुटमदनानलदाहतापयोगाम् ।
स्थितिमुपदधती मनोरथैश्च त्रिदशवधूजनतोषसि व्रजन्ती ॥(२८।५४)

पक्षिभिर्वनभूमिः प्रभाते मनोरथैर्व्रजन्ती सुरवधूसंहतिरिवाधिश्रिता । वनभूमिः — स्फुटमदनानलदाहतापयोगां स्थितिं धारयति स्म । स्फुटा मदननामकास्तरवो यत्र, नलदा = नलनामकं वृक्षं दातुं शीला, अहता =प्रशस्ता, पयोगां = जलगतां स्थितिं बिभ्रति । (स्फुटमदना + नलदा + अहता + पयोगाम्) । सुरवधूसंहतिरपि मदनानलस्य दाहेन यस्तापस्तेन स्फुटो योगो यस्यां तादृशीं स्थितिं धारयन्ती भवति ।

उदाहरणान्तरम् :

---

१६२. शिलीमुखा विधुतपतत्रमारुतप्रसारितैरुषसि सुगन्धयन्त्यमी ।
दिशोऽधुना निजतनुलग्नविस्फुटत्कुशेशयोत्करमकरन्दशीकरैः ॥ (२६।४३)

१६३. मनोरमस्मितहसिता परिस्रवन्निशाजलस्फुटरुदितोत्पलेक्षणाम् ।
इतोऽधुना श्रितकिलकिंचितामिव प्रभाकरो रमयति नाथ ! पद्मिनीम् ॥ (२६।४५)

१६४. भुजालतामशिथिलकण्ठवर्तिनी रतोत्सुका दयिततमस्य कुर्वती ।
विजृम्भते किल विनिमग्नपीवरस्तनद्वया तदुरसि मत्तकाशिनी ॥ (२६।४६)

शरदिव दिवसावतारलीला सकलमकाशतया श्रियान्वितासौ ।
क्षततिमिरमला निनाय दूरं सरित इवाशु दिशः प्रसाद-लक्ष्मीम् ॥
(२८।६५)

या श्रियान्विता सती सकलमकाशत=समस्तमपि वस्तुजातमकाशत= प्रकाशयत् । सा दिवसावतारलीला क्षततिमिरमला=अन्धकाररहिता दिश आशु प्रसादलक्ष्मीं निनाय=विमलीचकार । यथा शरत् सरितो विमलीकरोति । सापि कलमैः = धान्यैः, काशैश्च सह वर्तते या तस्य भावः सकलमकाशता तया सकलमकाशतया श्रियान्विता = शोभासम्पन्ना भवति । क्षततिमिः=क्षतास्तिमयो (जलाभावात्) ययासा, अमला = स्वच्छा च भवति ।

एवमन्यत्रापि कविना श्लेषचमत्कारः प्रभातवर्णने प्रदर्शितः ।[१६५]

**नदी-सागर-वर्णनम्**

मार्गविभागनाम्नि त्रिंशे सर्गे बहूनां नदीनां सरसं वर्णनमस्ति ।[१६६] समुद्रस्य वर्णनं २२-३० सर्गयोरुपलभ्यते । तत्र २२ तमे सर्गे शैली सरला ३० तमे सर्गे च प्रौढा । कवेरस्याब्धिवर्णनं कालिदास-बाणयोः शैलीं संस्मारयदपि कामपि नवां सुषमां धत्ते ।

सिन्धुर्नृसिंह इवाभाति । य उर्मिहस्तैः, शुक्ति-नखैः, भयङ्करं गर्जन् उद्धत-वाडवाग्निशिखासटः सन् तटाचलरूपिणो हिरण्यकशिपोर्वक्षस्थलमुत्पाटयति ।[१६७] स सरिदंगनाभिः परिहासमिव करोति स्म । ताश्च पृष्ठत आगत्य तस्य शुक्ति-नेत्राणि स्वतरंगहस्तैर्निमीलयन्ति स्म ।[१६८] भूरिपयः पानात् स्वमन्दं जठराग्निं समुत्तेजयितुमिव स तटवर्तितालीसतरुचूर्णनिकरं कल्लोलपाणिभिराकर्षयन्निव प्रतीयते स्म ।[१६९] नद्यः फेनच्छलेनौर्वाग्निदाहतप्तं तस्य वपुश्चन्दनचर्चया विभूषयन्ति ।[१७०] समस्तमपि जगत् सुधया तर्पयन्तमिव वीक्ष्य चन्द्रं हर्षगद्गदः सिन्धुः

१६५. द्रष्ट०—हर०, २८।७७, ८२, ८७, ९०, ९४, १०३, २९।५०.

१६६. तदेव, ३०।१२—३८.

१६७. हेलाविदारिततटाचलदैत्यवप्रवक्षःस्थलप्रकटशुक्तिनखोर्मिहस्तः ।
सिन्धुर्नृसिंह इव तारविराववृत्तिरुद्धूतवाडवकृशानुशिखासटोऽभूत् ॥ (२२।२७)

१६८. व्यातेनुषीभिरभितः स्फुटफेनहासलक्ष्मीं रराज जलधिः सरिदंगनानाम् ।
पश्चादुपेत्य परिहासविधित्सयेव कल्लोलपाणिपिहितातनुशुक्तिनेत्रः ॥ (२२।४२)

१६९. मन्दीकृतस्य शिखिनो जठरास्पदस्य तोयातिपानवशतः पृथुवीचिहस्तैः ।
उत्तेजनार्थमिव तीरवनान्तरालतालीसचूर्णनिकरं विचकर्ष सिन्धुः ॥ (२२।४३)

१७० उद्दामवाडवकृशानुशिखासहस्रतापानुबन्धशमनार्थमिवोर्मिहस्तैः ।
नीता नदीभिररुचज्झषकेतनस्य फेनच्छटारुचिरचन्दनपङ्कचर्चा ॥ (२२।४८)

शुक्तिनयनैर्मुक्ताश्रूणि मुञ्चतीव ।[171] तस्य मणयो वीचिहस्तेषु स्थिताः रसातलस्यान्धकारमपाकरिष्णवः प्रदीपा इवावलोक्यन्त ।[172] वडवाग्निदाहमप्यविगणय्य रसभराद् दिग्भ्यः समायाताः सरितः पराङ्मुखीकृत्यायं स्वकीयां जडतां प्रकाशयति[173] तीरेष्वमूल्यान् मणीन् प्रक्षिप्य, फलवतां पादपानामनुकूलं चोन्मूल्य दूरारूढा जलधि–तरंगा वाडवाग्नौ तथैव निपतिता यथा दूरारूढा(उन्नतिभाजः) अप्यविवेकिनो राजानोऽस्थाने मणिनिचयमभिवर्ष्यानुकूलान् राजानश्चोन्मूल्य विपच्सागरे निपतन्ति ।[174] वडवाग्निना भस्मीकृतं शंखचूर्णम् ('चूना' इति भाषायां प्रसिद्धम्) आदाय नागवल्लीदलेषु संयोज्य, भग्नैः पूगीफलैः, खदिरैः (सुपारीकत्था' इति भाषायां प्रसिद्धैः)च तत्र संघटनां विधाय समुद्रस्य तरंगास्ताम्बूलरंजनस्य निखिलमपि विधिं प्रतिपादयन्त इवासन् ।[175]

त्रिंशे सर्गे समुद्रस्य वर्णनं तु कवेः प्रकामं कल्पनाकौशलमभिव्यनक्ति । अब्धिवर्णनमस्य सर्गस्य ३६–८० श्लोकेषु कृतमस्ति । तत्र क्वचित्सः (सागरः) कामीव प्रतीयते ।[176] अन्यत्र स्व-तरंगहस्ताकृष्टतीरतरुपुष्पाणि आवर्तचक्रचषकेषु

---

१७१. निःशेषलोकनयनोत्सवहेतुमेकमालोक्य चन्द्रमिव सम्भृतगाढतोषः ।
अम्भोनिधिर्गलितमौक्तिकवाष्पबिन्दुसन्दोहशारशुचिशुक्तिविलोचनोऽभूत् ॥(२२।५०)

१७२. सिन्धोश्चकासतितरां स्म मणिप्रकाण्डरश्मिच्छटाविसरविच्छुरितास्तदानीम् ।
हर्तुं रसातलतंभासि गृहीतदीप्रदीपा इव प्रतिदिशं पृथुवीचिहस्ताः ॥(२२।५१)

१७३. और्वाग्निदाहमनपेक्ष्य रसानुबन्धभाजो जवाद् विविशुषीः ककुभां मुखेभ्यः ।
सिन्धुश्चकार तरसा सरितः पराचीः स्निग्धेऽपि जातु न जडस्य भवत्यपेक्षा ॥(२२।५४)

१७४. क्षिप्त्वा तीरेष्वनर्घान्ल‍पितशशिरुचः संचयांस्तान्मणीनां
तच्चोन्मूल्यानुकूलं सरसफलभृतां मण्डलं पादपानाम् ।
दूरारूढा निपेतुर्जलधिजलरयास्तत्क्षणं वाडवाग्नौ
के वा न प्राप्नुवन्ति व्यसनमुपगता विक्रियां जाड्यहेतोः ॥ (२२।६१)

१७५. आदायौर्वानलकवलितं शंखचूर्णं तदानीमाकर्षन्तस्तटवनभुवो नागवल्लीदलौघान् ।
भग्नानेकक्रमुकखदिरग्रन्थयो वीचिभंगास्ताम्बूलस्य स्थितिमविकलां चक्रुरब्धेरिवेत्थम् ॥
(२२।६२)

१७६. विस्रंसमानसलिलामलनीविबन्धमास्फालयन्तमतिकाममिवोर्मिहस्तैः ।
आबद्धरत्नवलयोज्वलकान्तिदामवेलांगनापुलिनपीननितम्बबिम्बम् ॥ (३०।४१)
आवर्तमण्डलकुकुन्दरबद्धशोभकल्लोलपीवरनितम्बतटान्तरेषु ।
पर्यस्तशुक्तिनयनं गलदच्छहारिरत्नप्रभानिवसनेषु सरिद्वधूनाम् ॥ (३०।५६)
वेलापुरंध्रिरभियोगपटुप्रपञ्चमुक्तेव चंचलतरैः श्रियमूर्मिहस्तैः ।
यस्य प्रवालमणिशोभिभिरेति दन्तच्छेदप्रकारसदृशैः स्फुटबिन्दुमालैः ॥ (३०।७२)

विनिवेशयन्नदीनायिकाभ्यः समर्पयन्मधुप इवावलोक्यते,[१७७] परत्र स भैरव इव प्रतिभाति,[१७८] क्वचिद्विविधरत्नलुण्ठनशुचेवात्मानं मौर्वाग्नौ विनिपातयन्निव संदृश्यते,[१७९] एकतोऽवशिष्टस्य कालकूटस्याग्निदाहशमनार्थम् रजनीषु चषकैरिव शुक्तिभिर्ज्योत्स्नासुधां पिवन्[१८०] क्वचित्कौस्तुभमणिकल्पैरावर्तैर्मुरारिवक्षो विडम्वयन्नाभाति ।[१८१]

सः शैलाभिघातशकलीकृतोऽप्यखण्डः, आकृष्टरत्नोऽपि रत्ननिधिः, वडवा-ज्वालामालादग्धोऽप्यदग्धदशोऽस्ति :

शैलाभिघातशकलीकृतमप्यखण्डमाकृष्टरत्नमपि रत्ननिधित्वमाप्तम् ।
लक्ष्मीमदग्धदशमप्यसमौर्ववह्निदाहाकुलं चिरगतामपि नोत्सृजन्तम् ।।[१८२]

अपिच :

और्वाग्निहेतिशतमप्यकृशानुतापमुत्तानमप्यतिगभीरतयानुयातम् ।
सन्नागमप्यनवसन्नगिरिप्रकाण्डमिन्दुप्रभोज्झितमपि स्फुटचन्द्रिकाढ्यम् ।।[१८३]

वडवानलसन्तप्तोऽपि कृशानुना सन्ताप्यः, उत्तानो(विस्तृतः, प्रकाशितः)ऽप्यनुयातः (गभीरत्वात् निम्नः - अगम्यः) सन्नागोऽपि अनवसन्नगिरिः (अनव-सन्नाः - सुखस्थिताः गिरयो यत्र इति अविरोधः), इन्दुप्रभोज्झितोऽपि (समुद्र-मन्थन-काले-इति-भावः) स्फुटचन्द्रिकाढ्यः (यदा चन्द्रोदयस्तदा स ज्योत्स्नयाढ्यो भवतीत्यविरोधः) ।

स महेन्द्रकुलिशपातभीत्या स्वतोये लीनानामिन्द्रनीलमणिशैलानां प्रकाश–

---

१७७. उत्संगसंगिविलसत्तटिनीपुरन्ध्रिलीलार्पणारभसयेव निवेशयन्तम् ।
आवर्तचक्रचषकेषु तरंगहस्तव्याकृष्टतीरतरुपुष्पभरावतंसान् ।। (३०।४२)

१७८. प्रेंखत्कपालशकलामलशंखशुक्तिमाच्छादिताम्वरघनामितवीचिवाहुम् ।
औवाग्निर्पिगलशिखाविकरालकेशमुत्प्लुत्य भैरवमिवासकृदारसन्तम् ।। (३०।४३)

१७९. लक्ष्मीसुराविमलकौस्तुभपारिजातचन्द्रामृतापहरणोत्थितया शुचैव ।
हेमाद्रिकूटविकटार्चिषि निर्व्यपेक्षमात्मानमौर्वदहने विनिपातयन्तम् ।। (३०।४४)

१८०. गम्भीरगर्भघटितास्पदकालकूटशेषाग्निदाहशमनार्थमिव क्षपासु ।
ज्योत्स्नासुधां विकटमौक्तिकदन्तपंक्तिशोभाधरैर्विवृतशुक्तिमुखैः पिवन्तम् ।। (३०।४५)

१८१. प्रेंखत्प्रवालकिरणाच्छुरितं वहन्तमावर्तचक्रमरिवर्तगभीरमम्भः ।
संवादिकौस्तुभमयूखशिखावकीर्णं दैत्यायुधव्रणकरालमुरारिवक्षः ।। (३०।४६)

१८२. हर० ३०।४७.

१८३. तदेव ३०।५५

मुद्गिरन्,[१८४] वीचिसम्भारैरखिलाशाविजिगीषुः,[१८५] वेलांगनाभ्यो रत्नावलीर्ददन्,[१८६] तरंगोन्नत्या स्वान्तर्निविष्टानां शरणागतानां पर्वतानां भयहेतुमिवोत्पश्यन्,[१८७] दिग्भ्यः समायाताः सरागाः सरितो दुग्धजलकाख्येनालिंगनभेदेन समालिंगन्निव प्रतिभाति ।[१८८]

यस्य तीरे ज्योत्स्नां दुग्धधिया जलाद् विवेक्तुं भ्रान्त्या हंसाः समायान्ति ।[१८९] यो वडवाग्निकालनिपीयमानमस्थिरं जलमायुरिव प्रतिक्षणं क्षीयमाणमवलोक्य वैरस्यमावहन् विवेकीव प्रतीयते, अतएव कूर्चकेसर -(नारिकेल) संकुलाम् तटकाननोर्वीं भजते ।[१९०] नानादिग्भ्यः समायातानां सरितां स्वादुजलं सम्प्राप्यापि तद्विरसतामापादयन् 'स्वभावो दुरतिक्रमः' इत्याभाणकं चरितार्थयति[१९१] स्वान्ते च शयानं परिमुद्वहति ।[१९२]

समुद्रः काननसमूह इव प्रतिभाति :

सन्नागमक्षततिमिश्रितमुत्प्रवालमुद्रागमाकुलमलंघनतामवाप्तम् ।
सश्रीफलस्पृहतरत्प्लवगं वनौघमुत्तालमुच्चमरसत्त्वजुषं वहन्तम् ॥[१९३]

समुद्रः सन्नागः (निमग्नपर्वतः) अक्षतैस्तिमिंगिलैः श्रितः, काननसमूहश्च

---

१८४. वज्राभिघातभयकातरतोयलीनमाहेन्द्रनीलमणिशैलशतप्रकाशम् ।
गर्भान्धकारमिव शेषफणासहस्रमाणिक्यरश्मिगलहस्तितमुद्गिरन्तम् ॥ (३०१४८)

१८५. प्रेंखत्करालमणिरश्मिशताभिनद्धकल्लोलकेतुपटलस्थगितान्तरिक्षम् ।
उद्दामवाजिगजसाधनमभ्युपेत्यगृह्णन्तमाशु विजिगीषुमिवाखिलाशाः ॥ (३०१४९)

१८६. वेलांगनाभिरभितो धुतवीचितालवृन्तानिलाकुलितफेनदुकूलपट्टम् ।
ताभ्यो दिशन्तमसकृज्जलवेगनुन्ना रत्नावलीरविरलाः स्फुरदिन्दुगौरीः ॥ (३०१५०)

१८७. उत्थाय दूरमसकृत्सुरनाथमुक्तवज्राभिघातकलनाशरणागतानाम् ।
क्षोणीभृतामनिशमप्यकुतोभयानां सर्वासु दिक्षु भयहेतुमिवेक्षमाणम् ॥ (३०१५१)

१८८. दिग्भ्यः क्रमादविरलोत्कलिकानुबन्धमभ्येयुषीः सरभसं सरितः सरागाः ।
विस्पष्टदुग्धजलकप्रविजृम्भमाणचेतोहरस्थिति परिष्वजमानमारात् ॥ (३०१५२)

१८९. ज्योत्स्नातपं विकटवीचिघटासहस्रमध्यास्पदं सपदि दुग्धधिया विवेक्तुम् ।
आवांछता सरभसं तटरालहंसयूथेन बन्धुरगलेन निषेव्यमाणम् ॥ (३०१५३)

१९०. विस्फूर्जदौर्वशिखिकालनिपीयमानमालोक्य मंक्षु सुकमायुरिवाभितोऽम्भः ।
प्राप्तं क्रमाद्विरसतां भजमानमाशुसत्कूर्चकेसरघनां तटकाननोर्वीम् ॥ (३०१५४)

१९१. दिवचक्रवालरभसोपगतप्रविष्टसुस्वादुनिर्झरवती जलसंप्लवेऽपि ।
अम्भश्रिया विरसया प्रकृतेरिवौर्वंवह्न्यारवैरमिदधानमसुत्यजत्वम् ॥ (३०१५६)

१९२. गाम्भीर्यशालिमणिरागपिशंगमम्भस्तत्राप्यनन्तभुजगाधिपभोगशय्याम ।
तामाश्रितं विकटकुक्षिपुटस्थलोकमभ्युद्वहन्तमधिकं हरिमेव सारम् ॥ (३०१५७)

१९३. हर०, ३०।६०.

नागैर्गजैः, अक्षाणां = बिभीतकानां ततिभिर्युक्तो भवति, समुद्रः उत्प्रवाल: =उद्गतविद्रुमः, काननसमूह उद्गतपल्लवः, समुद्रे उद्राः=केचनप्राणिनस्तेषामुद्गमेनाकुलः, अङ्घ्यश्च, काननसमूहोऽप्युद्रागः, किसलयैररुणः, आकुलः= पक्षिस्वरैर्व्याप्तः, अलं यथा स्यात्तथा घनतामवाप्तः, श्रीफलं=धनं प्राप्तुं सांयात्रिकाः समुद्रं प्लवैस्तरन्ति, काननसमूहोऽपि श्रीफलानां=बिल्वफलानां स्पृहया मर्कटाः (प्लबगाः) तरन्ति, उत्तालः समुद्रः, उत्तालः=उच्चो रसश्च काननसमूहश्च उद्गततालवृक्षः, उद्गताभिश्चमरीभिर्युक्तश्च दृश्यते।

स आवर्तचक्रनयनैरादरवशादारादापतन्तीर्नदीर्निर्विशेषमवलोकयन्नास्ते।[१६४] यथा कश्चिन्मनोविनोदाय स्वप्रियां लिखति तथैव सागरोऽप्यूर्मिफलकेषु स्वप्रियतमाः सिन्धूर्विलिखति।[१६५] स स्ववैभवेन विष्णुरिवाभाति[१६६] – कदाचिद्, कदापि शिशिररश्मिरिव प्रतीयते :

श्लाघ्यो गवामधिपतिस्तिमिरक्षयार्घ्य-
रूपस्थितिर्जलदमार्गतलावलम्बी ।
सच्चन्द्रिकं शिशिररश्मिरिवात्मबिम्ब-
मम्भो बिभर्ति हरिणाध्युषितं य एकः ।। (हर० ३०।७४)

समुद्रो गवाम् (जलानां) पतिः, तिमीनां (मत्स्यानां) रक्षया अर्घ्यरूप–स्थितिः (सम्मानितरूपः)। जलदमार्गतलावलम्बी (आकाशस्य नीचैःस्थितः), सच्चन्द्रिकः (स्वल्पकायैश्चन्द्रैर्युतः, हरिणा (विष्णुना) चाध्युषितः।

चन्द्रश्चापि गवां (रश्मीनां) पतिः, तिमिरस्यान्धकारस्य क्षयेण प्रशंसनीयरूपः, आकाशचारी, हरिणा (हरिणेन) च युक्तो भवति।

कदापि शशांकमौलिरिव :

यो ग्रावलग्नबहलोर्मिकया चिराय,
कुर्वाणया रुचिरसैकतया व्यवस्थाम्।
लक्ष्मीं सभोगिवलयो जलसम्पदैति,
शैलाधिराजसुतयेव शशांकमौलिः ।। (हर०, ३०।७५)

यः सागरः सभोगिवलयः (सर्पैर्युक्तः), ग्रावसु (प्रस्तरेषु) लग्ना बहला

१६४. सिन्धूर्विपाण्डुररुचिस्फुटफेनहासदूरावगाढरसनिर्भरमापतन्तीः ।
पश्यन्तमादरवशादिव निर्विशेषमावर्तचक्रनयनैर्मधुरं वलद्भिः ।। (३०।६३)

१६५. उद्भिन्नरत्नकिरणारुणधातुवर्तिप्रेंखत्फणांगुलिभुजंगमभोगहस्तम् ।
रोपादिवानधिगतप्रसरं वलन्तीः सोत्कण्ठभूर्मिफलकेषु नदीर्लिखन्तम् ।। (३०।६५)

१६६. आवर्तचक्रमुदरास्पदरन्ध्रनाभिपर्यन्तघूर्णितमणिप्रकरांशुशारम् ।
विभ्राणमच्युतमिवांचितशंखशोभमम्भोदमेचकरुचोन्नतवीचिदोष्णा ।। (३०।६८)

ऊर्मयः (तरंगाः) यस्यास्तया, रुचिराणि सैकतानि (पुलिनानि) यस्यास्तया, व्यवस्थाम् (वि+अवस्थाम्) वीनां (पक्षिणाम्) अवस्थां (स्थिति) कुर्वाणया जलसम्पदा, शैलाधिराजसुतया (पार्वत्या) शशांकमौलिरिव लक्ष्मीमेति।

कीदृश्या पार्वत्या ? 'यो ग्रावलग्न' इत्यत्र अकारस्य प्रश्लेषःकरणीयः। तथा च-यः सभोगिवलय (सर्पकटकधारी) अग्रे (हस्ताग्रे) लग्ना बह्व्यः ऊर्मिका (वालिका–'चूड़ी' इति प्रसिद्धा) यस्यास्तया, स्वस्य शंकरस्य च रुचि+रसा–भ्याम् अभेदेन व्यवस्थां (नियमं) सम्पादितवत्या शैलाधिराजसुतया युतः लक्ष्मीमेति।

यो जलनिधिः कदापि 'इमाधिपतिरिव' च प्रतिभाति।[१६७]
सः कदाचित् क्षितिपतिरिव राजते :

लक्ष्म्या कुलीरचितया श्रित एक एव
प्राप्नोति यः स्म महिमानमलंघ्यधामा।
योधैरिव क्षितिपतिः स्थितिमेत्यमन्द-
पातालवासिभिरनेकविधैश्च सत्वैः॥[१६८]

योऽलंघ्यधामा समुद्रो लक्ष्म्या श्रितो महत्तामवाप योधैरिव क्षितिपतिः (भूपतिः) कीदृश्या लक्ष्म्या ? कुलीरैः (कर्कटैः) चितया (व्याप्तया)। अनेकविधैः पातालवासिभिश्च सत्वैः (प्राणिभिः) स्थिति प्राप्नोति।

क्षितिपतिरपि कुली (श्रेष्ठकुलोत्पन्नः) रचितया (विभिन्नेषु कार्येषु व्ययितया लक्ष्म्या) च श्रितः। अलंघ्यतेजा, अमन्द+पात+अलव+असिभिः (नास्ति मन्दः पातो येषां तैः, अलवाः=विस्तीर्णा असयो येषां तैश्च) सत्वैर्योधैः स्थितिमेति।

तस्य वेला उर्मिलांछिततया (१. उर्मिभिस्तरंगैर्लाञ्छितया च २. उर्मिलया आञ्छिततया च) लक्ष्मणचित्तवृत्तिरिवाभाति :

प्रत्यग्रविद्रुमवितानमरीचिगाढ-
रागोर्मिलाञ्छिततया रजनीष्वभीक्ष्णम्।
यस्योन्नतानुगतलक्ष्मणचित्तवृत्ति-
राभाति चन्द्रकिरणोल्लसितस्य वेला॥[१६९]

---

१९७. छायागतर्क्षप्रतिविम्बविधानपिण्डलीलाप्रसारितविसारितरंगहस्तः।
धत्ते स्म यः स्फुरितविद्रुमताम्रराग तालूरसत्स्थितिरिभाधिपतेरभिख्याम्॥ (३०।७६)
१९८. हर० ३०।७६.
१९९. हर० ३०।७७.

एतत्समुद्रवर्णनमवलोक्यैतत्प्रतीयते यद् रत्नाकरो रत्नाकरं साक्षात्कृत्य पूर्ण-शक्त्या तस्याभिनन्दनं करोति स्वकल्पना-सम्भारैः।

## ऋतुवर्णनम्

हरविजयस्य तृतीये सर्गे ऋतूनां यमकपूर्णं वर्णनमस्ति। पुनश्च पंचमसर्गे ६५-१३३ श्लोकेषु यमकस्यैव विविधभेदेषु ऋतवो वर्णिताः। इदं ऋतुवर्णनं सर्वथा पारम्परिकम्। एकत्र (तृतीये सर्गे) कालिदास-प्रस्थापितशैल्याः प्रभा-वितमपरत्र (पंचमे सर्गे) च माघ-शैल्याः। ऋतुवर्णनमत्रोद्दीपकतयैवाधि-कांशतया कृतम्। सर्वेषां वर्णनानां पर्यवसानं कामुकतायामेव भवात। तृतीये सर्गे तु हृदयस्पर्शिनो भावाः सन्त्यपि पदशय्यापि नितान्तं कोमला परं पंचमे सर्गे तु बुद्धेरायास एव केवलम्। हृदयमुत्कलिकं विधातुं तत्र नावसरः। ऋतुवर्णनमपि तत्र पर्वतांगत्वेनास्ति। एषाऽपरा वार्ता यद् यत्क्वचित्कृत्रिम-तायामपि, सौभाग्यात्, सौन्दर्यमुपलभ्यते। उभाभ्यां सर्गाभ्यां दिङ्मात्रमुदा-ह्रियते :

### वसन्तवर्णने

मधुपराजिपराजितमानिनीजनमनः सुमनः सुरभिश्रियम्।
अभृत वारितवारिजविप्लवां स्फुटितताम्रतताम्रवणं जगत्।।[२००]

मधुपानां राजिभिः (पंक्तिभिः), पराजितमानिनीजनमनसः सुमनसः (कुसुमानि) यत्र तादृशं, स्फुटितैः (विकसितैः), ताम्रवर्णैः (आरक्तैः), ततैः (विस्तृतैः) आम्रवर्णैः (रसालकाननैः) च युक्तं जगत् सुरभेः (वसन्तस्य) श्रियम् अमृत (दधार)। अपिच :

स्मरमदीदिपदूर्ध्वविलोचनं पुररिपोरिव यच्छिखिपिंगलम्।
स्फुटदशोकमुदीक्ष्य तदुत्सुका न कमिता कमितारमलं वधूः?[२०१]

स्मरमदीदिपत् (कामं सन्धुक्षयत्), स्फुटितम् (विकसितम्) अशोकं ज्वालापिशंगितं पुररिपोः शंकरस्योर्ध्वविलोचनमिव वीक्ष्य तदुत्सुका (दृश्ये-नानेनोत्कण्ठिता) का वधूः कमितारम् (अभिलाषुकम्) कं न, अलम्, इता (प्राप्ता)? एतादृशे मादके समये कापि कोऽपि च स्ववल्लभेन वल्लभया वियुक्ता वियुक्तो वा नासीदिति भावः। यथावा :

मधु पिबत्यसितच्छविशारितस्तबकरोचिरसौ रभसंगतः।
कलरवैर्भ्रमरः सुरभेरिव स्तवकरोऽचिरसौरभसंगतः।।[२०२]

२००. तदेव ३।२

२०१. हर ३।३४

२०२. तदेव ५।६५

अयं भ्रमरः स्वकृष्णकान्त्या पुष्पस्तवकानामाभां मलिनीकुर्वन्-अचिर-सौरभसंगतः (सद्यः सौगन्ध्यभूषितः) सरभसं मधु पिबति। स्वकीयैः कलरवैश्च सुरभेः (वसन्तस्य) स्तवकरः (चारणः) इव प्रतीयते।

ग्रीष्मं वर्णयन् कविः कथयति :

स्पृशति तिग्मरुचौ ककुभः करैर्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयायिदिनश्रिया ॥[203]

तिग्मरुचौ (सूर्ये), स्वकिरणैर्दिशां स्पर्शे कृते चिरयायिदिनश्रिया (कर्त्र्या) विजृम्भिततापया (सन्तप्तया) रुचिरया (सुन्दर्या) अतनुमानपरिग्रहया (मानवत्या) दयितयेव स्थितम्। यद्यपि दिवसश्रीः परिपक्वावस्थाया (प्रौढा) आसीत् तथापि यदा तया दृष्टं यत्तत्पतिरन्याः स्वकरैः स्पृशति तदा सा सन्तप्ता, मानवती च दयितेव संजाता, एतस्यामवस्थायां सा सुन्दरी भाति स्म।

ग्रीष्मदिवश्रीर्विजृम्भिततापा (वर्धमानातपवशात्सन्तापदायिनी), अतनुमाना (दीर्घपरिमाणवती), रुचिरा च भवति।

दयितापि च विजृम्भिततपा (ईर्ष्यासन्तापतप्ता), अतनुमाना (विपुलमानवती), रुचिरा च भवति।

यथावा :

घटितषट्पदपेटकपाटलापटलसम्पुटपाटनपाटवम्।
स्फुटयतानवबन्धुरसौरभप्रसरता सरता मरुता दधे ॥[204]

घटितानाम् (एकत्रितानाम्), षट्पदानां (भ्रमराणां) पेटकैः (समूहैः) युक्तस्य पाटलापटलस्य ('गुलाब' इति प्रसिद्धानां पुष्पाणां समूहस्य) सम्पुटानां (दलानां), पाटने (विकासने), पाटवं (कौशलं) स्फुटयता (प्रकटीकुर्वता,) सरता (प्रसरणशीलेन), मरुता (समीरणेन) नवो बन्धुर (सुन्दरः) च सौरभप्रसरो यस्य तद्भावः नवबन्धुरसौरभप्रसरता दधे (धारिता)। पुष्पाणां विकासात्सुगन्धितो वायुर्दिशिदिशि प्रससार इति भावः।

यथावा :

तरंगिणी ग्रावशतेषु यान्ती रसज्जला भंगमिता चकास्ति।
वयस्ययेष्टं भवने नतभ्रू रसज्जलाभं गमिता चकास्ति ॥[205]

रसद् (ध्वनद्) जलं यस्याः सा रसज्जला तरंगिणी (नदी) ग्रावशतेषु

---

२०३. तदेव ३।३७
२०४. हर० ३।४१
२०५. तदेव ५।११२

(शताधिकेषु प्रस्तरेषु), भंगमिता (भंगम्+इता=प्राप्ता) यान्ती (गच्छन्ती), चकास्ति (शोभते)।

का च नतभ्रूः (तरुणी), भवने (गृहे), अक्षज्जलाभम् (अप्राप्तम्, अनुपस्थितमिति यावत्) इष्टं प्रियतमं) वयस्यया (सख्या) गमिता (प्रापिता), न कापि। सर्वेषां प्रियतमाः स्वगृहेषूपस्थिता इति भावः।

वर्षावर्णने तृतीये सर्गे सरलता सरसता च विलोक्यते। तथा च :

दधति यत्र पयोधरपंक्तयो गिरिशकण्ठरुचिं जलमन्थराः।
सकृतपान्थवधूजनवेपथू रसमयः समयः स्म विजृम्भते ॥[२०६]
विकिरवारि, विलोलय विद्युतो नभसि गर्ज, तिरस्कुरु दिवतटान्।
इति घनो, विपुतामकृताचरन्न नवशां नवशान्ति पराङ्मुखीम् ॥[२०७]
अवसरे मलिनोऽप्युपकारकः क्वचिदितीव रवैस्तरुणान्भ्रमन्।
स्तनितभीतपुरन्ध्रिनिगूहनस्थितिमतोऽतिमतोऽभिदधौ घनः ॥[२०८]
घनतमस्यबलाः समर्वातिना दहशिरेविरहग्लपिता न याः।
जगति ता इव दर्शयितुं तडित्प्रविरलाविरलातनिभाभवत् ॥[२०९]
हरिरदाग्र इवोत्थितकालिके ग्लपितमानतमा नभसि स्थिते।
कमिव नाम न बाहुलतान्तरं प्रियतमायतमानयदीप्सितम् ॥[२१०]

एषु श्लोकेषु केवलं 'घनतमसीत्यादि' श्लोके 'प्रविरला तडित्, अलातनिभा+आविर्भवत्' अयं, 'हरिरदाग्र' इत्यादिश्लोके च हरीणामश्वानां रदाग्रे दन्ताग्र इवोत्थितकालिके (समुत्थितमेघे) नभसि स्थिते' अयमेवार्थो मनाक् कठिनः। शेषं 'प्रियतमा+आयतं+भुजलतामध्यं कमिवेप्सितं न 'आनयदित्यादि' तु स्पष्टमेव। पर दुर्भाग्यादियं सरला शैली प्रावृट्चपलेव चमत्कृत्य निलीयते। पंचमे सर्गे पुनरपि तदेव श्लेषयमकानां दण्डकारण्यं समायाति :

सुभ्रूरत्र प्रियतमलाभे नूनं स्थानादानानघघननादानास्था।
अस्योर्वी मे जनयति तोषं नानासाध्यापाता पिकृकपितापाध्यासा ॥[२११]

अस्मिन् 'प्रतिलोमानुलोमपादे यमके' द्वितीय-चतुर्थयोः पादयोः परिवर्तनेन तथैव पदावली भवति।

अत्र श्लोके नन्दी भगवन्तं मन्दरं परिचाययन् वर्षर्तोर्वर्णनं करोति — अत्र (मन्दरे) प्रियतमलाभे सति सुभ्रूः (सुन्दरी) नूनं स्थानादानानघघनना-

---

२०६. तदेव ३।४३
२०७. तदेव ३।५३
२०८. हर० ३।५४
२०९. तदेव ३।५६
२१०. तदेव ३।६०
२११. तदेव ५।१२०

दानास्था स्थानादानेन (स्थानस्थोचितदेशस्यादानेन (ग्रहनणेन) अनघस्य (परिपूर्णस्य) घनस्य नादे (गर्जने) नास्ति आस्था (अपेक्षा) यस्यास्तादृशी भवति। प्राप्ते प्रियतमे सा मेघान्न बिभेतीत्यर्थः। नानासाध्यापाता= नानाविधानां साध्यानां (देवविशेषाणां आपातेन (आगमनेन युक्ता, पिकक-पितापाध्यासा=पिकानां कपीनां तापम् (शारीरिकीं व्यथां) आधिम् (मानसीं व्यथां च) अस्यति (दूरीकरोति) सा अस्य (मन्दरस्य) उर्वी (पृथ्वी) मे तोषं जनयति।

शरद्वर्णनं कविरेवमादिना प्रकारेण करोति :

स्फुरितचारुतरापघनश्रिया हृदयनन्दनशोभनवेगया।
दयितयेन जनः शरदाश्रितो मुदमलं दमलंघनमाचरत्॥[२१२]

जनः (लोकः) दयितयेव शरदा मुदमाश्रितः अलम् (सुतरां) दमलंघनं (दमस्य शान्तवृत्तेः लंघनम्) आचरत्। कीदृश्या शरदा ? स्फुरिता, चारुतरा, अपघना (मेघरहिता) श्रीर्यस्या तया स्फुरितचारुतरापघनश्रिया, हृदयनन्दन-शोभनवेषया च='हृदय+नन्दन+शोभ+नव+इषया' इत्ययं छेदः शरत्पक्षेकरणीयः। हृदयनन्दकशोभो नव इषः (आश्विनो मासो) यस्यां तया (शरदा श्रियमाप)।

दयिता च — अपघनानाम् (अंगानां) श्रिया हृदयह्लादकेन च वेषेण युक्ता जनान् इन्द्रियदमनादधिक्षिपति।

सरलान्यप्युदाहरणानि प्राप्यन्ते। येषामर्थः, सत्यपि यमके, झटित्यैवाव-भासते। तद्यथा :

पतति वृष्टिरसौ मयि नाधुना दिनकरातपसेवनलालसम्।
इति विकासमगादिव चिन्तयच्चिरमुदारमुदा युतमम्बुजम्॥[२१३]
प्रकटताललयं शुकवारणे कमलगोपवधूनवगीतकम्।
मृगगणस्य मनः श्रुतमाक्षिपत्प्रचुरसस्यरसस्य जिघत्सतः॥[२१४]

किन्तु पंचमे सर्गे न तथा ऋजुकः कवितामार्गः :

वीक्ष्य प्रसीदति वधूर्दयितेऽपि मानान्नानाविला सरसि कौमुदमत्र सन्तौ।
कान्तौ कुलं कलयतश्च रतावमन्दं नानाविलासरसिकौ मुदमत्रसन्तौ॥[२१५]

मानात् न अनाविला (कषायिता) अपि धारितमाना अपि) वधूः सरसि (सरोवरे) कौमुदं कुलं (कुमुदानां समूहं) वीक्ष्य दयिते (प्रियतमे) प्रसीदति।

---

२१२. हर० ३।६१
२१३. तदेव ३।६३
२१४. तदेव ३।७८
२१५. तदेव ३।१२५

तथा च अत्रसन्तौ (शंकारहितौ - एकान्तन्तत्वाद् विस्रब्धौ) सन्तौ (वर्तमानौ) नानाविलासरसिकौ (असमशरकलाप्रवीणौ) कान्तौ (कान्तश्च कान्ता च) रतौ (निधुवनविलसिते) अमन्दम् (अत्यधिकम्)मुद्रम्(आनन्दं) कलयतः (अनुभवतः)।

हेमन्तवर्णनम् दिङ्मात्र मुदाह्रियते :

हिमऋतौ मलिनीनलिनाननाश्रियमूढमनोरमकर्णिकाम् ।
तुहिनरेणुजरागमविप्लवैर्विमलितागलितापकृतं वभौ ।।[२१६]

हिमऋतौ कमलिनी (१) उदूढमनोरमकर्णिकाम् उदूढा (धारिता) मनोरमा कर्णिका (बीजकोषः) यया ताम् । (२) मनोरमाभ्यां कर्णाभ्यां=श्रोत्राभ्यां च युताम् । तुहिनस्य रेणव एव जरागमस्तस्य विप्लवैरुपद्रवैर्विमलिताम् (१) विशेषेण मलितां (दलितां) (२) धवलिताम् अतएव -अलीनां (भ्रमराणां) कृते तापकृतं (सन्तापदायिनीं) श्रियं दधौ ।

अपिच :

अतनुशीतपरिप्लवभीतितः सहिमसारुतवल्लितया वभौ ।
सपरिरम्भ इवोपवनद्रुमश्चतुरयातुरया लतया कृतः ।।[२१७]

अस्मिन् हेमन्ते तुहिनशीतलेन वायुना कम्पितया लतया उपवनद्रुमस्तथैवालिंग्य स्थापितो यथा कयाचिच्चतुरया (प्रौढया) शीतकम्पभयान्नायक आलिंग्य स्थाप्यते । यथा वा

मरुति वाति तुषारकणाकुले कमितुराहितसीत्कृतिविभ्रमा ।
अभिमुखं वलति स्म धुतस्फुरत्करतला रतलालसया वधूः ।।[२१८]

हिमशीतले वायौ सरति सति, सीत्कारं कुर्वन्ती, कम्पितकरतला च नवपरिणीता कमितुः (प्रियतमस्य) अभिमुखं (समक्षं) वलति स्म (चटुलतामापादयति स्म) रतौ सीत्कारः करतलधूननं च भवति ।

अन्यच्च :

क इह न रतिकेलिसम्पदामरतनुतरागमोहितः ।
स्थितिमधिकमवाप्य हैमनीमरमत नुत रागमोहितः ।।[२१९]

नन्दी शिवं प्रति कथयति—"हे नुत (सर्वजनप्रणत) इह हैमनीं स्थितिमधिकमवाप्य (हिमन्तऋतुमुपलभ्य) रागमोहितः (काममोहितः) को न अरमत्यधिकम् - अरमत ? सर्वोऽपि कामाकुलश्चिरं चिक्रीड । रतिकेलिसम्पदां (कामकलानाम्) अतनुतरेण (विपुलेन) आगमेन (परिज्ञानेन) को वा न मोहितः ?

---

२१६. हर० ३।८०
२१७. तदेव ३।८१
२१८. तदेव ३।८२
२१९. तदेव ५।१२६

शिशिरस्य वर्णनमपि सरसं वर्तते :

समय एव गुणोऽप्युपयुज्यते सपरिरम्भरुचिं दयितं स्त्रियाः ।
स्तनयुगोष्मभरः शिशिरागमे यदकरोदकरोष्णिमगोपतौ ।।[२२०]

गुणस्योपयोगः समय एव भवति तदैव तु–अकरोष्णिमगोपतौ (नास्ति कराणामुष्णिमा सन्तापो यस्य तादृशो गोपतिः-सूर्यो वर्तते यत्र तस्मिन्) शिशिरागमे स्त्रियाः स्तनयुगोष्मभरो दयितं सपरिरम्भरुचिम् (आलिंगनेच्छुम्) अकरोत् ।

स्थगितदिङ्मुखहैमरजःप्लुतं मधुकरः कमलाकरमत्यजत् ।
त्यजति कः प्रकृतोपकृतिं जनः सपदि नापदि नाम मलीमसः ।।[२२१]

मलीमसस्य धाष्ट्‍र्यमस्मिन् पद्ये व्याख्यामनपेक्ष्यैव स्थितम् ।

स्त्रियोऽरशनैः (शीताधिक्यात् कांचीरहितैः) जघनैश्चिताः समाश्लिष्ट–प्रियतमकण्ठा अपि हिमऋतोरागमनाद् उदकण्ठिषत (सोत्काः संजाताः) । नव-लवंगसुरभितैः समीरैरप्यपीड्यन्त :

दयितकण्ठगता अपि विस्फुटन्नवलवंगसमीरहृताः स्त्रियः ।
हिमऋतोरुदकण्ठिषतोदयादरशनै रशनैर्जघनैश्चिताः ।।[२२२]

कामेन 'हृदि अर्पिते (खातिते) खादिरे (खदिरदारुमये कीलके) इव शल्ये द्राढर्यं (द्रढिमान) भजति संसारे काः स्त्रियो रजनीरजनीचरयोषिता (रजनी–राक्षस्या) विरहे नावचखादिरे (भक्षिताः) सर्वा एव विरहिण्यो रात्रावात्मानं राक्षसीमुखपतिता अज्ञासिषुः :

स्मृतिभुवा हृदि शल्य इवार्पिते दधति दाढर्यमतीव च खादिरे ।
न रजनीरजनीचरयोषिता जगति का विरहेऽवखादिरे ?[२२३]

पंचमे सर्गे शिलादत्तनयश्चन्द्रचूडं सम्बोध्य कथयति–कान्तारम् (वनम्) धवलयतः (श्वेतिमानं प्रापयतः), कुन्दस्यामोदाः (कुन्दपुष्पस्य गन्धाः), ते (तव) घ्राणालेपं (घ्राणसन्तर्पणं), विदधति (कुर्वन्ति) । धव–लयतः (धवस्य-प्रियतमस्य, लयतः—समालिङ्गनात्) प्रारम् (अत्यधिकं), हृष्टा (उत्फुल्ला), नवसुरते बद्धौत्सुक्या का नाम कान्ता उदास्ते (उदासीना भवति ?) सर्वा अपि शिशिरे रताभिलाषिण्यः संवृत्ता इति भावः ।

---

२२०. हर० ३।८३
२२१ तदेव ३।८५
२२२. तदेव ३।८७
२२३. तदेव ३।९१

घ्राणालेपं विदधति कुन्दस्यास्मिन्नामोदास्ते धवलयतः कान्तारम् ।
बद्धौत्सुक्या नवसुरते हृष्टा का नामोदास्ते धवलयतः कान्तारम् ।।[२२४]

अनेन विवेचनेन ऋतुवर्णनसम्बन्धिन्यस्य प्रवृत्तिः सरलतयैवानुमातु शक्या ।

## पर्वतवर्णनम्

पर्वतवर्णनं महाकाव्यस्यास्य चतुर्थे, पंचमे त्रिंशे च सर्गे प्राप्यते । चतुर्थ-पंचमयोर्मन्दरस्य विस्तरशस्त्रिंशे च कैलास-सुवेल-विन्ध्य-सुमेरु-प्रभृतीनां पर्वतानां सभासतो वर्णनानि समुपलभ्यन्ते । चतुर्थे त्रिंशे च सर्गे कवेः सहृदयताऽवलोक्यते यदा पंचमे पाण्डित्यम् । अत्र कविकृतस्य पर्वतवर्णनस्य संक्षेपतः परिचयो दीयते :

मन्दराद्रिः स्वाभ्रंकषैः शृंगैर्भास्करस्य रथमपि रुणद्धि स्म ।[२२५] स समुद्र-तलादानाकं स्थित आसीत् ।[२२६] सागरमन्थनकाले वासुकेर्निर्मोकव्याजेन गंगैव स्वभर्तुः सागरस्य मन्थनकृतोस्यारुज उपशमार्थं यस्य पादयोर्लुठन्ती दया-प्रार्थनामिव करोति स्म ।[२२७] सुरासुरैः पुरा रत्नानां लुण्ठनात्पुनरपि तथा शंकया यस्य गुहासु रत्नपटलानि समुद्रेण न्यधीयन्त ।[२२८] यस्य नीलगण्डशैलाः समुद्रोद्-भूतकालकूटपिण्डा इव प्रतीयन्ते,[२२९] यस्य परिस्फुरन्तो मणयो निशास्ववलोक्या-परिचितो लोकस्तेषु ग्रहवुद्ध्या प्रतारितः पश्चाद् गत्यैव वस्तुस्थितिं जानाति । यद्येषु गतिस्तदा ग्रहा यदि चागतिकास्तदा मणयः ।[२३०] यः शून्याम्बरे भ्रमण-खेदाच्छ्रान्तं भास्करं स्वगुहा-निर्गत-पवन-विलुलितै र्जलद–तालवृन्तैरुपवीजय–

---

२२४. हर० ५।१३२

२२५. विश्रान्तभास्कररथं स तमालुलोके । (४।२)

२२६. मूलेन यस्य मथितः सकलोऽम्वुराशिरत्युन्नतेन शिखरेण च नाकमार्गः । (४।२)

२२७. आकृष्टिवेगविगलद्भुजगेन्द्रभोगनिर्मोकपट्टपरिवेष्टितयाम्वुराशेः ।
मन्थव्यथाव्युपशमार्थमिवाश यस्य मन्दाकिनी चिरमचेष्टत पादमूले ।। (४।७)

२२८. यस्योर्मिभिर्मथनकालविजृम्भिताम्भाः क्षीरोदसिन्धुरपहस्तितकौस्तुभानि ।
न्यासीचकार सुरदैत्यहठापहारभीत्येव रत्नपटलानि गुहागृहेषु ।। (४।१०)

२२९. यस्यां चकासति तटीभुवि नीलगण्डशैला निजच्छविविलुप्तरविप्रकाशाः ।
क्षीराम्वुधेर्मथनसम्भृतकालकूटपिण्डा इवोद्धततरंगशतव्युदस्ताः ।। (४।१५)

२३०. यस्यान्धकारनिकुरम्भभिदो नितम्वसीम्नि प्रभाप्रकरशारितदिग्विभागान् ।
दृष्ट्वा मणीन् ग्रहविमुग्धमना निशासु संचार एव दृशमाशु करोति वाह्यः ।।
(४।२०)

न्निव दृश्यते।[२३१] यः स्व गुहावातैः प्रलयकाल-कृशानु-शिखाभिरुत्तप्तान् पार्श्वप्रदेशान् शीतलयन्निवाभाति ।[२३२] यस्योन्नतं शृंगं प्रतिदिनं लिलंघयिषुरपि भास्वान् स्व-मनोरथं पूरयितुं समर्थो न भवति।[२३३] पतत्त्रिणां कूजित-पूजिते यस्मिन् पर्वते नीलगण्डशैलो महागज इव स्व नभःस्पृशा किरण-शुण्डा-दण्डेन सूर्यालवालवतो दिनवृक्षस्यातप-पत्रमिव त्रोटयति ।[२३४] यः पद्मरागमणिमय–त्वात्पाटलितमाकाशचुम्वि शिखरं गगनोत्पलनालदण्डमिवाभाति । सौदामनी–शिखा एव तत्र केसरा नीलमेघा एव च तस्य पत्राणि।[२३५] यस्योत्तुंगेषु शृंगेषु स्थिताश्चन्द्रबिम्वं कलंकरहितं दृष्ट्वा तस्य सकलंकत्वं केवलमाप्तप्रसिद्धिकमेव मन्यन्ते। लोके इयं प्रसिद्धिः शाब्दी एव न तु प्रत्यक्षपरिपुष्टा इति जानन्ति।[२३६] यस्य सानुस्थितिर्जनकराजसुतेव (सीतेव) श्रियमेति ।

स्पष्टाभिलक्ष्यरमणीयकुशप्रसूतिरव्याहता मुनिनिकेतकृतास्पदश्रीः ।
सानुस्थितिर्जनकराजसुतेव भास्वदंकोल्लपल्लवतया श्रियमेति यस्य ॥[२३७]

अत्र स्पष्टतयाभिलक्ष्यमाणा कुशानां (दर्भाणां) प्रसूतिः (उद्भवः), इयम् अव्याहता (अ+वि+आहता, न विभिः पक्षिभिराहता व्याकुलिता) मुनिनिकेतकृतास्पदश्रीः (मुनीनां निकेतैः संकेतैः कृता आस्पदानां गृहाणां श्रीः शोभा यत्र), भास्वदंकोल्लपल्लवतया (भास्वन्तोऽकोल्लानामेतत्संज्ञकवृक्षाणां 'निकोच'-इति प्रसिद्धानां) पल्लवाः (पत्राणि) यत्र तद्भावेन (श्रियमेति)।

जनकराजसुता च-स्पष्टतयाभिलक्ष्यमाणा रमणीयस्य कुशस्य (तदात्मजस्य) प्रसूतिर्जन्म यस्यास्तादृशी, अव्याहता (पवित्रचरित्रा), मुनेर्वाल्मीकस्य गृहे कृतास्पदशोभा, भास्वति अंके चोल्लयन् लवः (तत्सुतः) यस्यास्तादृशी ।

यस्य प्रदेशा गजयूथैः साम्यं बिभ्रति :

---

२३१. यो वीजयन्निव निषण्णरथं तटेषु शून्याम्वरभ्रमणखिन्नमशीतरश्मिम् ।
आभाति दूरगतकन्दररन्ध्रवातपातभ्रमीवलितवारिदतालवृन्तैः ॥ (४।२१)

२३२. उत्तापितः प्रलयकालविजृम्भमाणसरंम्भकर्कशकृशानुशिखासहस्रैः ।
निर्वापयन्निव नितम्वभुवो विभाति योऽद्यापि कन्दरमुखस्खलितैर्मरुद्भिः॥ (४।३१)

२३३. यस्योत्पतत्प्रतिदिनं सविशेषमेव नालं विलंघयितुमुन्नतशालि शृंगम् ।
आयासितारुणकरोर्ध्वं विकृष्यमाणप्रेंखत्खलीनमुखवाजिरथो विवस्वान् ॥ (४।३३)

२३४. तदेव ४।३५–३६.

२३५. योऽभ्रंकपं शिखरमुत्कटपद्मरागरत्नप्रभापटलपाटलितं विभर्ति ।
सौदामनीकपिलकेसरमालभारिनीलाभ्रपत्रगगनोत्पलनालदण्डम् ॥ (४।३७)

२३६. पाश्चात्यभागमवलोकयतां शशांकविम्वस्य लक्ष्ममलमून्यतया परीतम् ।
उत्संगसंगिमृगतागमिकत्वमेति तुंगेषु यस्य शिखरेषु कृतास्पदानाम् ॥ (४।३९)

२३७. हर० ४।१२३

विस्पष्टदन्तरुचयः पृथुगण्डशैलशोभा नितान्तविकटोन्नतवंशकुंजाः ।
यस्याभिरामगुणतां दधति प्रदेशाः सज्जाटवीरणहिता गजयूथपाश्च ।।[२३८]

वीनां (पक्षिणां) स्पष्टा दन्तेषु (शिलासु) रुचिः (निवासाभिलाषः) येषां ते, पृथुभिः (विशालैः) गण्डशैलैः सम्पादिता शोभा येषां ते, नितान्तविकटा उन्नता वंशानां वेणूनां कुंजा येषां ते, सज्जाटवीरणहिताः (सत्+जाट+वीरण+हिताः सद्भिर्जाटैर्लतानां समूहैर्वीरणैस्तृणविशेषैश्च हिताः हितकारिणः) प्रदेशाः ।

गजयूथपाश्च—विस्पष्टदन्तरुचयः (प्रकटितदन्ताः) स्फुटा गण्डशैलानां शोभा येषां तादृशाः, नितान्तं विकटा उन्नता वंशाः (पृष्ठवंशा 'रीढ़ की हड्डी' इति यावत्) कुंजाः (हनवः) च येषां तादृशाः, सज्जेभ्यः (समुद्यतेभ्यः) वीरेभ्यः अटव्यां (जंगले) रणेषु च हिताः (हितकारिणः) भवन्ति ।

पंचमे सर्गे १५१ श्लोकैः श्लेषेण सप्रभेदेन यमकेन च वर्णनमस्ति मन्द–रस्य । नन्दी भगवन्तं शंकरं पर्वतस्यास्य विजये कथयति । स्थालीपुलाकन्यायेनात्र द्वित्रा एव श्लोका दीयन्ते :

एष ससारससारस्तुलित श्रीः पीतवाससा रस सारः ।
अनलससारस सारः प्रकर्षमद्रिः परं ससार ससारः ।।[२३९]

एषोऽद्रिः परं प्रकर्षं ससार प्राप्तवान् । सारसैः सह वर्तत इति ससारसः, आराभिः (धाराभिः) सह वर्तत इति सारः । ससारश्चसारश्चेति ससारससारः, पीतवाससा (पीताम्बरेण–हरिणा) तुलितश्रीः (समानः) हे अरस ! (उदासीन !) अयं सारः (अरैः शृंगैः सह) अनलससारससारः (अनलसः क्षिप्रः, सारसाणां सारो गमनं यत्र) एतादृशो वर्तते । भवन्तमिवैनमद्रिं वीक्ष्य को न रमते ? :

व्याप्य स्थितः कनककूटभुवान्तरिक्ष–
माभाति कर्कशशिलाञ्छितया सदृक्षः ।
प्रीतिं भवानिव दिशन् जटया नगोऽय–
माभाति कर्कशशिलाचितया सदृक्षः ।।[२४०]

अन्तरिक्षं व्याप्य स्थितः कनककूटभुवा (कनकाद्र्युपकण्ठेन) अयमाभाति, भवानिव जटया । कीदृश्या भुवा ? कर्कशाभिः शिलाभिराञ्छितया (युक्तया),

---

२३८. तदेव ४।३२.
२३९. हर० ५।२
२४०. तदेव ५।६६

सदृक्षः (सन्तो ऋक्षा भल्लूका) यत्र। भवांश्च आभयातिकर्केण (स्वच्छेन) शशिना लाञ्छितया असदृक्षः (अद्वितीयः) वर्तते।

राजति तटीयमभिहतदानवरासातिपातिसारावनदा।
गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ।।[२४१]

इयम् आतिपातिसारावनदा (आतिपातिनो वेगवन्त) सारावाः(सध्वनयः) (नदा यत्र तादृशी) तटी राजति (सुशोभिते)। अभिहतदानवरास (अभिहतो दानवानां रासो गर्जनं येन स त्वम्। शंकर–सम्बोधनमेतत्) इयं च अविरत-दानवरा (अविरतेनावच्छिन्नेन दानेन मदजलेन वरा श्रेष्ठा) सारा (दृढा), वनदा (वनानि द्यति खण्डयति या सा) गजता (गजसमूहः) यूथमतिपाति (रक्षति)।

अत्र मलय-पवनो वहति मुनयश्च मुक्त्यर्थं प्रयतन्ते :

सरति मलयवात्या मानधैर्यं वधूनां
विधुतपनसमालं सादरं सज्जयन्ती।
इह मुनिजनतासौ तेजसा भाति मुक्ति
विधुतपनसमालं सादरं सज्जयन्ती ।।[२४२]

अत्र मलयवात्या (मलयानिलसंहृतिः) विद्युतपनसमालं (पनसानां 'कट–हल' इति भाषायां प्रसिद्धानां फलानां मालां पंक्ति विधूय यथा स्यात्तथा) सादरं (आत्मनोऽवसादकरं) वधूनां सद् (वर्तमानं) मानधैर्यं (मानविषयकं धैर्यं) जयन्ती सती सरति (प्रवहृति)। तेजसा विधुतपन–समा (चन्द्रसूर्यसदृशी) असौ मुनिजनता (मुनिसमूहः) मुक्ति सादरं सज्जयन्ती (अनुसन्दधती) अलमत्यर्थं भाति (सुशोभते)।

त्रिंशे सर्गे कालमुसलमार्गे पतितानां कैलास[२४३]–विन्ध्य[२४४]–महेन्द्र[२४५]-ऋक्ष-

---

२४१. तदेव ५।१३७.

२४२. हर० ५।१४६.

२४३. ऐक्षिष्ट विस्फुरितकांचनकल्पवल्लीविस्तारिपक्ष्मशिखरच्छदचक्रवालम्।
कैलासशैलमसकृत्स जगत्त्रयैकलक्ष्म्याः स्थितं धवलविभ्रमपुण्डरीकम्॥ (३०।१५)

२४४. आराधनप्रवणकासरदैत्यवंशकण्ठप्रसाधनधियेव विलम्ब्यमानाः।
चण्ड्या यदीयमणिकंदरमन्दिराग्रविस्तारितोरणगताः प्रविभान्ति घण्टाः॥
स्थूलेन्द्रनीलमणिशृंगरुचोऽथ तस्य कल्मापिताखिलदिगन्तरमुन्मिपन्ती।
भूयस्तरां तरणिमार्गरुरुत्सयाशु मुक्ताः शिखा इव ददर्श स मेकलाद्रेः ॥(३०।२०–२१)

२४५. सेवाविचक्षणतयेव दवाग्निदग्धकालागुरुप्रचुरधूमशिखाकदम्बैः।
कुर्वन्तमैक्षत महेन्द्रमसावनल्पकल्पद्रुमांशशुकततीः सुरभीः सुराणाम्॥ (३०।२५)

वान्[२४६]-सुवेल[२४७]-सुमेरु[२४८]-शैलानां वर्णनानि संक्षेपतः प्राप्यन्ते ।

## (आ) नगरादिवर्णनम्

रत्नाकरेण न केवलं प्राकृतिकदृश्यानां ऋतूनां चैव चित्रणं कृतमपि तु नगर-सेनामार्गादीनामपि वर्णने स्वकीयं कौशलं प्रदर्शितम् । प्रथमे सर्गे 'ज्योत्स्नावत्या' नगर्या एकत्रिंशे सर्गे स्वर्गपुर्या, द्वात्रिंशे सर्गे 'चान्धकासुरस्य राजधान्या वर्णनं विस्तरशः प्राप्यते । इमानि दृश्यानि यत्र स्थापत्यस्य सुन्दराणि चित्राण्यक्षणोः समक्षमवतारयन्ति तत्र कवेरद्भुतं पाण्डित्यमपि प्रकाशयन्ति ।

प्रथमसगस्य वर्णनमालंकारिकं सदपि न तथा क्लिष्टम् । एकत्रिंशे तु सर्गे कविः श्लेषस्म चमत्कारं प्रदर्शयति, द्वात्रिंशे सर्गे तदीया वर्णनाशक्तिः पाण्डित्यं तस्य संसूचयति ।

(क) ज्योत्स्नावती : मन्दराचलशृङ्गे ज्योत्स्नावती नगरी भगवतश्चन्द्र-चूडस्य शिरसि शशांकलेखेव प्रतीयते ।[२४९] यत्र निशीथे गगनं नवपद्मरागर्निर्मितप्रासादप्रभाभिररुणितं नृसिंहेणोत्पाटितं हिरण्यकशिपोः वक्षस्थलमिव विभाति ।[२५०] स्फटिकमणिनिर्मितान्यजिराणि यत्र क्षीरसागरायन्ते । अयं क्षीरसागरो वातायनस्थितवधूवदनेन्दुविम्बसंदर्शनादेव निरन्तरं क्षुभ्यति ।[२५१] भगवता चन्द्रशेखरेण दग्धमपि कामदेवं यत्रेन्दुः स्व करैंगनानां हृदयेष्वैन्द्रजालिक

---

२४६. संवादिकाननतलस्य निवेशलक्ष्मीमद्रेरसावधिकमृक्षवतोऽभ्यनन्दत् ।
पादावनौ कतिचिदेव दिनानि बद्धसंस्थो निशीव तमसाहृतदृष्टिरासीत् ।। (३०।३५)

२४७. गच्छन्विशंकटमसौ कटकं सुवेलशैलस्य कांचनशिलाशकलावकीर्णम् ।
वेलाविलोलवरुणालयवीचिभंगपर्यस्तवाडवकृशानुमिवेक्षतारात् ।। (३०।३६)

२४८. धत्ते समुद्रपरिखावलयावलीढपर्यन्तवर्त्मपरिमण्डलभूप्रतिष्ठः ।
यः कूर्मपृष्ठपृथुपरसंनिविष्टरुक्मांशुविच्छुरितमन्दरशैलशोभाम् ।। (३०।८२)
विस्तारशालिकुरुविन्दशिलानितम्वभागोत्थितं वहति यः करचक्रवालम् ।
स्कन्धावघर्षणविलग्नमहावराहविश्लिष्टकेसरसटानिकुरुम्बशोभम् ।। (३०।८३)
येन प्रसाधितमिलावृतमाचकास्ति रत्नप्रभाशवलकांचनसानुनोच्चैः ।
पद्मासनेन च विनिद्रपलाशचक्रमुत्पत्तिपंकजमनुज्झितकर्णिकाकम् ।। (३०।८४)
तस्यानुवेलमलिवल्लभवेल्लिताग्रवल्लीविलोलमणिपल्लववल्लरीकैः ।
ऐक्षिष्ट कल्पतरुभिः कलिलामनल्पसंकल्पसाधनफलैर्मणिमेखलां सः ।।(३०।९०)

२४९. अस्त्युन्नते सुरसरिज्जलधाव्यमानभागे नवार्करुचिमन्दरशैलशृंगे ।
ज्योत्स्नावतीति नगरी भुवनत्रयैकभूषा शशांकशिरसीव शशांकलेखा ।। (१।१४)

२५०. यस्यां निशासु गगनं नवपद्मरागसद्मप्रभारुणितमध्यगतेन्दुलेखम् ।
वक्षो नृसिंहनखरैरसुराधिपस्य सासृक्छटं विषमभिन्नमिवाचकास्ति ।। (१।१५)

२५१ ज्योतीरसाश्मभवनाजिरदग्धसिन्धुरत्युन्मिषत्प्रचुरतुंगमरीचिवीचिः ।
वातायनस्थितवधूवदनेन्दुविम्वसन्दर्शनादनिशमुल्लसतीव यस्याम् ।। (१।१६)

इव तमुत्थापयन्निवाभाति ।[२५२] यत्रेन्द्रनीलभवनमुभयपार्श्वगतैः पद्मरागगवाक्षै-रित्थमाभाति यथा हरिचक्रविलूनबाहोर्बाणासुरस्य शरीरम् ।[२५३] यस्यां चन्द्रस्य रश्मयोऽगुरुधूममिश्रिता एवं प्रतिभान्ति यथा गवाक्षाणां कपाटपुटेण संश्लेषणादेव ताः किणयुक्ताः संवृत्ता अतएव कृष्णिमानं बिभ्रति । यथा कस्मिंश्चित्संकीर्णे स्थाने सम्पीडितमंगं रुधिरावरोधान्नीलवर्णकिणयुक्तं भवति तथैव शिशिरदीधितेरपिकिरणा अगुरुधूम-मिश्रिता प्रतिभान्तीत्याशयः ।[२५४] यत्र वातायन-विवरैर्विवलिता निर्गच्छन्तोऽगुरुधूमप्रकराश्चन्द्रमयूखैर्भीता अतएव कम्पिता अन्धकारस्य हस्ता इव प्रतीयन्ते ।[२५५] यत्रत्याः कामिन्यः सुमेरोः कुंजवीथय इवाभान्ति । कुंजवीथयः किसलयैरारक्ताः कल्पवृक्षसम्बन्धित्वाच्च वार्धकशंकाशून्याः । कामिन्यश्च रागरक्ता अभिनवयौवनवत्यश्च तत्रासन् ।[२५६] यत्र शिवस्य निरन्तरसमुपस्थितावपि मनसिजो निशशंकं निवसति । पौराङ्ग-नानां शरीरमेव तस्य दुर्गस्तासां कटाक्षा एव तस्य विशिखा यान् भ्रूकुटि-शरा-सनादनवरतं प्रक्षिप्य स आत्मरक्षां करोति । यत्र मणिनिर्मितं तोरणं सूर्यरथस्याश्वशरीरकान्तिभिर्युक्तं सद्घनमाभिर्युक्तमिव प्रतीयते ।[२५८] यस्यां कुट्टिमेषु प्रतिबिम्बितानि गृहकमलानि 'अस्माभिस्त्वदनुग्रहात्त्वदरय इन्दुकिरणा अत्रावष्टभ्य स्थापिताः' इतीव सूर्याय निवेदयन्तः प्रतीयन्ते [२५९]। यस्यां स्फटिक-कुट्टिमे प्रतिबिम्बितश्चन्द्रः पौरपुरन्ध्रिमुखात्पराजित इव भूत्वा निर्विण्ण इव

---

२५२ सीमन्तिनीजनमनःसु समाधिभंगकोपानलेन चिरदग्धमपीन्दुमौलेः ।
उत्थापयन् मदनमाशुकरैर्विभाति यस्यां हिमांशुरवलम्बितजालमार्गैः ॥ (११८)

२५३. यत्रेन्द्रनीलभवनं पृथुपद्मरागवातायनैरुभयपार्श्वगतैर्विभाति ।
बाणासुरस्य हरिचक्रविलूनबाहुमन्तर्व्रणैरिव वपुः क्षतजच्छटार्द्रैः ॥ (१११०)

२५४. यस्यां निशासु रुचिरागुरुधूपधूमकल्माषितं शशिभृतः करचक्रवालम् ।
श्लिष्यद्गवाक्षकलधौतकवाटपट्टसंदंशलग्नकिणलेखमवैभि लक्ष्मीम् ॥ (१११५)

२५५. यस्यां सलीलमसितागुरुधूपधूमदण्डा गवाक्षविवरोदरतः प्रसन्नाः ।
आसन्नचन्द्रकरभंगभियान्धकारहस्ता इव स्फुरितदीर्घशिखांगुलीकाः ॥ (१११७)

२५६. रागानुबन्धिपरिणामदशावमर्शशून्याभिरामनवयौवनपल्लवाभिः ।
कल्पद्रुमव्रततिभिः कनकाद्रिकुंजवीथीव या पुरपुरन्ध्रिभिरावभासे ॥ (१११८)

२५७. यस्यां स्मरः सततसन्निहितेऽपि चन्द्रचूडामणौ वसति पौरपुरन्ध्रिदेहे ।
निर्मुक्तभीतिरधिरूढकटाक्षबाणतद्भ्रूशरासनसहस्रकृतात्मरक्षः ॥ (११२०)

२५८. माणिक्यतोरणमदूरविलम्बमानार्कतिग्मांशुकूबरितुरंगशरीरभाभिः ।
यत्र क्षणं हरितपल्लवनिर्मिताभिराभात्यशून्यमिव वन्दनमालिकाभिः ॥ (११२२)

२५९. यस्यां निकेतनलिनीषु च लौहितीकसोपानपट्टरुचिविच्छुरितान्तरालाः ।
लक्ष्मीमतानिपुरमन्दरुचः प्रियाय बन्दीकृतेन्दुकिरणा इव पद्मखण्डाः ॥ (११२५)

रसातलमन्तः प्रविशति। अन्योऽपि कश्चिल्लोके पराजयान्निर्विण्णो भूर्विवरे प्रविविक्षुर्भवति [२६०]। एतादृश्यां नगर्यां भगवान् शंकरो निवसति स्म।

(ख) इन्द्रपुरी : स्वर्गाभोगवर्णनप्रसंगे एकत्रिंशे सर्गेऽपि कविना स्वकीया वर्णनपद्धतिः सुचिरं प्रकाशिता। कालमुसल इलावृतवर्षमतीत्य त्रिदिवोपकण्ठमाससाद। यत्र पूर्वं गंगां क्षोऽक्षिलक्षीचकार। तदनुन्वैरावतस्तेन व्यलोकि। ऐरावतस्य श्लिष्टं वर्णनं कविना विस्तरशः कृतमस्ति श्लोकानां षड्विंशत्या [२६१]। तदनन्तरं मणिमृणाललतासनाथचंचवः सलिलेश्वरवाहहंसाः,[२६२] समवर्तिनः (यमस्य) कासरः (महिषः)[२६३], कलहंसकलापकेलिकोलाहलाकुलितकूलजलान्तराः सरस्यः[२६४], मन्दाकिनी-दुहितृका इव रत्नवाप्यः[२६५], मन्दवाताभिघातचलिताः कल्पवल्ल्यः[२६६], अमरनन्दनं-नन्दनकाननं[२६७], तारामृगस्य परिवारलीलां विदधदाकुलितान्तरिक्षं कुरंगकुलम्[२६८], नभोयुवतिकरावलुप्तपल्लवस्तत्समकालमेवोन्मिषद्भिरपररत्नपुष्पैर्युक्तः पारिजातश्च[२६९] तस्य दृशमाचकर्ष। अथोत्तरोत्तरविशेषविलोकनेच्छुश्चन्द्रचूडदूतः पुरहूतपुरीमवालुलोक यस्यां पुर्यामिन्द्रनीलमणिनिर्मितानि मन्दिराणि सन्ति। मरकतमयीषु किंचारुणरत्नवतीसु भित्तिषु पतिताश्चन्द्रांशवः हरितपाटलतामवाप्तास्तालवृन्तश्रियं वहन्ति।[२७०] यत्राभ्रंकषा मणिहर्म्यपंक्तिः पिहितैरपि द्वारैर्वैदूर्यमणिघटिताररिभिः (द्वारपट्टकैः) अपावृतेव निशासु प्रतिदिशं शोभां बिभर्ति।[२७१] यस्यां प्रासादवातायननिर्यदगुरुधूमः

---

२६०. लावण्यनिर्भरपुरन्घ्रिमुखावधूतच्छायो दधत्कलुषतां हृदयेन यस्याम्।
इन्दुर्निशासु मणिकुट्टिमविम्ब्यमानमूर्तिच्छलेन विशतीव रसातलान्तः॥ (१।३१)

२६१. हर० ३१।८–३३

२६२. तदेव ३१।३४

२६३. तदेव ३१।३५

२६४. तदेव ३१।३६

२६५. तदेव ३१।३७

२६६. तदेव ३१।३९

२६७. तदेव ३१।४१

२६८. तदेव ३१।४३

२६९. तदेव ३१।४४–४६

२७०. यस्यां स्फुरन्मरकतारुणरत्नहर्म्यभित्तिप्रभापटलसंवलिता वहन्ति।
चन्द्रांशवः कुरवकद्रुमपुष्पतालवृन्तश्रियं हरितपाटलतामवाप्ताः॥ (३१।४९)

२७१. वैदूर्यपट्टघटिताररिभिर्निशासु दूरादपावृतमुखैरिव दृश्यमानैः।
द्वारैर्बिभर्ति पिहितैरपि यत्र लक्ष्मीमभ्रंकषा प्रतिदिशं मणिहर्म्यपंक्तिः॥ (३१।५०)

प्रतिदिशमुपवनकल्पलतांशुकानि सुरभयति।[२७२] यस्यां रमणीनामिन्द्रकान्त–निर्मितहारा रजन्यां चन्द्रकरावमर्षाद्द्रवितास्तासामाननेन्दुनिर्यत्सुधाबिन्दुवन्त इव प्रतीयन्ते।[२७३] यत्रेन्दु-किरणा इन्द्रनीलवलभ्या निर्गच्छन्त्यो राहुणा निपीत-मुक्तमलिना इव सदृश्यन्ते।[२७४] यत्र नीलमणिप्रासादेषु सुरयुवतयः स्फुरन्त्यो विद्यु-ल्लता इव प्रतीयन्ते।[२७५] यत्रांगनानां सुरतक्लान्तिं माणिक्यमन्दिरगवाक्षपथप्र-विष्टाः सुरनिर्झरिणीतरंगशीतला मरुतो हरन्ति[२७६] यस्यां सुवर्णजटितं सालवलयं नभश्चरगणा 'अलातचक्र'मिवावगच्छन्ति भ्रान्त्या।[२७७] यस्यां गिरिजानुरक्तशिव इव गृहौघो देहलीनां शोभां धारयति :

यस्यां भूत्यानुज्झितो नीलकण्ठच्छायारम्यो भोगिनाथैरशून्यः।
धत्ते शोभां देहलीनां गृहौघः क्ष्माभृत्कन्यामुन्नतात्मेव शम्भुः॥[२७८]

गृहौघः नीलकण्ठः (मयूरः) तस्य वैभवेन युक्तो निवसति। पार्वत्यां च नील-कण्ठः (शिवः) भूत्या (भस्मना) युक्तोऽनुरक्तः। गृहौघो भोगिभिः (धनिभिः) अशून्यः शम्भुश्च भोगिनाथैः (सर्पैः) युक्तः। गृहौघे देहलीनां शोभा भवति, शम्भुश्च देहे लीनां पार्वतीं धारयति। यस्याम् अवलाजनता विलोचनयोर्विशालां, कपोलकुचस्थलीषु सम्पिण्डितां (एकत्रीभूतां), नितम्बतटेषु च विस्तारितां शोभां धारयति।[२७९] यस्याभिन्दुकान्तनिर्मितमन्दिरनिष्यन्दमानजलप्रवाहेण सिक्तातरवः

---

२७२. प्रतिककुभमयत्नपूर्वमारादुपवनकल्पलतांशुकानि यस्याम्।
सुरभयति गवाक्षमार्गनिर्यत्प्रचुरतरागुरुधूपसौरभश्रीः॥ (३१।५१)

२७३. यस्यां विभाति निशिचन्द्रकरावमृष्टहारेन्दुकान्ततरलच्युतमंगनानाम्।
आवद्धविन्दुपटलाननचन्द्रविम्वनिर्यत्सुधाशिशिरनिर्झरशोभमम्भः॥(३१।५२)

२७४. यत्रेन्द्रनीलवलभीविवराभिनिर्यदंशूच्छटापटलधूसरितानुवन्धाम्।
धत्ते तरामतनुमत्सरसैंहिकेयनिष्पीतमुक्तमलिनामिव कान्तिमिन्दुः॥(३१।५३)

२७५. यत्र दधति सुरयुवतयः श्रियं भास्वदसितमणिभवनसंगजाम्।
व्यूढसलिलभरजलदमण्डलप्रेंखदचिररुचिरुचिरविभ्रमाः॥

२७६. क्लान्तिं रतान्तजनितां जनयन्ति यत्र माणिक्यमन्दरगवाक्षपथप्रविष्टाः।
अभ्यर्णवर्तिसुरनिर्झरिणीतरंगभंगानुसारशिशिरा मरुतोऽङ्गनानाम्॥ (३१।५५)

२७७. यस्यां नभश्चरगणेन विदूरदेशसंस्थेन सालवलयं कलधौतदिग्धम्।
आलक्ष्यत भ्रमदलातशिखाकृशानुलेखानिवद्धपृथुचक्रकरालशोभाम्॥(३१।५६)

२७८. हर० ३१।५७.

२७९. दीर्घीकृतामिव विलोचनयोर्युगेषु सम्पिण्डितामिव कपोलकुचस्थलीषु।
विस्तारितामिव नितम्वतटे विभर्ति लावण्यकान्तिमवला जनता च यस्याम्॥
(३१।५८)

सदैव सकलर्तु लक्ष्मीं धारयन्ति ।[२८०] यत्राभिरामो वैदूर्यप्रासादः हतप्रसर्पन् मृग-रूपचिह्नतेजस्विमारीचबलः सन् राम इवाभाति :

रामाभिरामश्च विदूरजाश्मप्रासादराशिर्निशि यत्र धाम्ना ।
हृतप्रसर्पन्मृगरूपचिह्नतेजस्विमारीचबलश्चकास्ति ।।(३१/६०)

प्रासादराशी रामाभिः (सुन्दरीभिः)अभिरामः, मृगरूपलांछनधारिणश्चन्द्रस्य मारीचं सामर्थ्यं हृतं येनस्तथाविधः सन्नाभाति । चन्द्रमसो यन्मरीचिसम्बन्धि बलमासीद् यदहं तेजस्वी तद्गृहार्घेण स्वकान्त्यापास्तमित्याशयः । रामश्च मृगरूपधारिणं मारीचं जघानेति प्रसिद्धमेव । या चन्द्रिकाधवलैः केतनैरनाविलं स्वकीयं यश इव किरन्ती प्रतीयते ।[२८१] यत्रारुणंन सुनिगडितापि भोगिपंक्तिरागत्य रत्नहर्म्येषु तत्रत्यानां मयूराणां ध्वनिं श्रुत्वा विवलितफणचक्रा सती भास्वतो रथबन्धं श्लथयति ।[२८२]

(ग)अन्धकराजधानी : तृतीयं पुरीवर्णनमस्माभिरन्धकराजधानी-वर्णन-प्रसंगे प्राप्यते । वर्णनमिदं शास्त्रीय–सन्दर्भे रेतावद्युक्तमस्ति यत्कवेः पाण्डित्यं सहजभावादेव पाठकं चमत्करोति । सा नगरी क्वचित् विन्ध्यभूमिरिव, क्वचि-दम्बुधिरिव क्वचिन्मूर्छनाप्रक्रियेव, क्वचिन्मातंगपृष्ठवंशोर्वीव, क्वचित् प्रौढवाद-विद्येव, क्वचिन्नृत्तलीलाविडम्बिनीव, क्वचित्कांचननिकषोपलमिव, क्वचिन्नाट-कप्रक्रियेव, क्वचिद्वीणावाद्यविद्येवासीत् । तत्रत्याः कामिन्यः माध्यमिकदर्शनमि-वाभान्ति स्म । गृहावली च पटलोपहृतच्छाया दमयन्तीव प्रतीयते स्म । तत्रै-कत्र क्रीडाकमलिन्यासीदपरतो विदग्धगोष्ठ्योऽन्यतश्च कणादसिद्धान्तप्रक्रियेव सा व्यराजत ।

सा नगरी शिवगणस्य (कालमुसलस्य) कृतेऽत्यन्तमाश्चर्यकारिण्यासीत् । कवेः पाण्डित्यस्य वर्णनाशक्तेश्च परिचयार्थमिमे सर्वेऽपि श्लोका अधस्ताद्दीयन्ते :

अथ तामावशन्नीलमणिमन्दिरसंकुलाम् ।
विन्ध्यभूमिमिव व्यक्तगण्डशैलां गणाधिपः ।।

---

२८०. चन्द्रोदये भवनचन्द्रमणिप्रणालनिष्यन्दमाजलनिर्झरसिक्तमूलैः ।
यस्यां शिशूपवनपादपचक्रवालैरालिग्यते प्रतिदिशं सकलर्तु लक्ष्मीः ।। (३१।५९)

२८१. ज्योत्स्नाच्छटाधवलकेतनवैजयन्तीव्याजेन निर्जितविचित्रपुरान्तरोत्थम् ।
या दिङ्मुखेषु शशिदीधितिपाण्डुमूर्तमालक्ष्यते यश इवाविरलं किरन्ती ।। (३१।६१)

२८२. निविडमपि निबद्धानूरुणा रत्नहर्म्यस्थलघटितशिखण्डिव्रातकेङ्कारवार्ता ।
विवलितफणचक्रं यत्र मार्गागतस्य श्लथयति रथबन्धं भास्वतो भोगिपंक्तिः ।।
(३१।६२)

पद्मरागमयाट्टालप्रकाशेन प्रथीयसा ।
गगनाम्भोधिगर्भैर्वं वह्निनाराचितश्रियम् ॥
विचित्रस्थानकोपेता सुकुमारांगवर्तना: ।
नृत्ते चित्रे च दधतीमाक्षिप्तहृदया: स्त्रिय: ॥
पौरै: सदाशेषभोगमार्गिभिर्वैकुण्ठविभ्रमम् ।
बिभ्रद्भिराहिताभिख्यां समुद्रगृहकास्पदै: ॥
दधतीं मध्यमग्राममूर्छनाप्रक्रियामिव ।
सकलोपनतोदारपौरवीरचितां श्रियम् ॥
प्रवालपाणिभिर्वल्ली: पाणिपद्मैश्च योषित: ।
पद्माननैश्च नलिनीर्बिभ्रतीमुपशोभिता: ॥
अशसा (भूयसा) तत्फलोपात्तमनोहरतरत्विषम् ।
मातंगपृष्ठवंशोर्वीमिव विस्तृतदीर्घिकाम् ॥
बिभ्रद्भिर्गेयवैदग्ध्यीमुपकण्ठकृतास्पदै: ।
तालाक्षरचिताभिख्यै: काननैरुपशोभिताम् ॥
ससूक्ष्मतिलकां वक्त्रच्छायां गारुत्मतीमिव ।
गिरं च सामृतोद्गारां दधतीर्दधुषीं स्त्रिय: ॥
अन्तर्युक्तान्महामात्रै: पतद्ग्रहशताकुलान् ।
निशान्तान् दधतीमर्ककृतानकुलषत्त्विष: ॥
अदृष्टनिग्रहास्थानां प्रौढवादविधामिव ।
सद्वाचार्याहितच्छायां नृत्यलीलाविडम्बिनीम् ॥
भिन्नं लयमिव त्रेधा द्रुतमध्यविलम्बितम् ।
वलिभंगं दधानाभि: कृतशोभां पुरन्ध्रिभि: ॥
दशनेन्दुप्रभालोकै: स्वच्छमानसनिर्झरै: ।
मदनस्तबकोद्भेदै: स्त्रीणां हासैर्विराजिताम् ॥
नक्तं नक्षत्रमालाभि: कृतमूर्धविभूषणै: ।
अलिन्दानाकुलं हर्म्यगजैर्बिभ्रद्भिराचिताम् ॥
सत्कांचनपरीक्षाया: सदृशीं दृष्टिहारिणीम् ।
निकषोपलसल्लेखामदभ्रां बिभ्रतीं श्रियम् ॥
शुभप्रस्तावनाहृद्यां प्रख्यातोदात्तनायकाम् ।
नानार्थप्रकृतिश्लाघ्यां नाटकप्रक्रियामिव ॥
व्याप्तां कृतयुगस्थास्नुस्थितिं भोगिभिरुद्धतै: ।
रथसंस्थामिवोष्णांशो रथ्यावलिविराजिताम् ॥

अनाप्तगोत्रस्खलनामविपक्षामिव स्त्रियम् ।
शुभप्रकृतिविस्तारां वीणावाद्यविधामिव ।।
सार्धचन्द्रपताकत्वं दधतस्तेन वीक्षिता: ।
तस्यामसंयुता हस्ता इव देवगृहा: पुर: ।।
व्यलोकि विस्मयवता शुभमध्यमदर्शन: ।
सीमन्तिनीजनस्तेन दधन्माध्यमिकश्रियम् ।।
स कांचनोज्ज्वलास्तस्यां विस्फुरन्मणिबन्धना: ।
अलंकारावलीर्बाहुलताश्चैक्षत सुभ्रुवाम् ।।
प्राप्तानलसनाथत्वं तेन तत्र गृहावली ।
पटलोपहृतच्छाया दमयन्तीव वीक्षिता ।।
तेनैक्ष्यत सुधापाण्डुच्छायसन्मानसालया ।
नगर्या दधती साम्यं क्रीडाकमलिनी पुर: ।।
महानप्यनहंकारप्रसूतिरवलोकित: ।
तारकोऽप्युमना बिभ्रल्लोकोऽनक्षिगत: श्रियम् ।।
विदग्धमण्डलीमाराद्गोष्ठीवन्धमनोरमाम् ।
सदाकृतिगणोपेतां सद्वृत्तिं स व्यलोकयत् ।।
तेनांगनाजनस्तस्यामनपेक्षितभूषण: ।
स्वरूपशोभयाक्रान्त: शक्रहस्त इवेक्षित: ।।
जहर्ष सामान्यगुणद्रव्यसंयोगसुस्थिताम् ।
तां कणव्रतसिद्धान्तप्रक्रियामिव वीक्ष्य स: ।।

(हर० ३२।१–२७)

तत्रत्यमापणं सिन्धुलीलाविडम्बि आसीत् । यत्र मुक्ताप्रवालवैदूर्यादिरत्नानि विस्तीर्णान्यासन् । तत्रत्यं सिंहद्वारं त्रैलोक्य-सम्भारस्य प्रत्यादेशमिव भूत्वा स्थितमासीत् । सा नगरी समस्तस्य संसारस्य प्रतिविम्बमिवासीत् ।

३० सर्गे मार्गस्य, ३९, ४०, ४१ सर्गेषु च सेनाया ऊर्जस्वलानि वर्णनानि प्राप्यन्ते ।

## (इ) वर्णनान्तराणि

एतदतिरिक्तमेतादृशान्यपि वर्णनानि सन्ति यानि साक्षात् रसाङ्गभूतानि; यथा युद्धवर्णनं वीरस्य, कुसुमावचय–जलक्रीडा–प्रसाधन-पानगोष्ठी-प्रभृतय: शृङ्गारस्य, मृगयाविहाराद्यद्भुतभयानकयो: । एतादृशेष्वपि स्थलेषु वस्तुवर्णनं वहुश: प्राप्यते । तदत्र संक्षेपेण प्रस्तूयते ।

## युद्धवर्णनम्

युद्धस्य वर्णनं काव्येऽस्मिन्ननेकत्र प्राप्यते । रत्नाकरेण साक्षाद् युद्धानां वहुवारं दर्शनं कृतं भवेत् । शत्रुं प्रत्यभियानस्य क्रमबद्धं वर्णनं तस्य सैन्य–व्यवस्थया युद्धभूम्या च नैकटिकं परिचयं प्रकाशयति । ३९ तमे सर्गे सैन्य–सम्भारः, ४० तमे सैन्यसंरम्भः, ४१ तमे च सैन्य-प्रस्थानं युद्धस्य भूमिकां समुपस्थापयन्ति । अनन्तरं च युद्धस्य सजीवं वर्णनमस्ति ।

कविना युद्धक्षेत्राय न्यूनातिन्यूनमष्टौ सर्गाः समर्पिताः । यदि च सैन्य–सम्भारादिकमपि युद्धस्यांगतयास्मिन्नेव प्रसंगे संयोज्यते तर्हि त्वेषां संख्या ११ सर्गमिता भवति । कथनीयम् यत् ३९-५० सर्गेषु ४७ तमं चण्डीस्तोत्रम् परित्य-ज्यावशिष्टेषु युद्धस्यैव विजृम्भणमस्ति ।

विभिन्नशैलीषु युद्धस्य वर्णनमत्र प्राप्यते । ४२ सर्गे प्रमिताक्षरावृत्तेन, ४३, ४६, ४८ सर्गेषु चित्रकाव्यमाध्यमेन, ४४, ४९, ५० सर्गेषु वसन्ततिलकया च युद्धं वर्णितम्, ४५ सर्गे च विभिन्नवृत्तैः सुभटानां सन्दीपनमुपनिबद्धम् । दिङ्मात्रं यथा :

सेनातुरंगखुरकोटिविपाट्यमान-
हेमाचलासितशिलोद्धतधूलिदिग्धाः ।
आसन् जगत्प्रलयकालनिशावतार-
घोरान्धकारकलुषा इव दिग्विभागाः ॥[२८३]

अह्लादि दुन्दुभिभिराहननादगुंजि
गुंजागणेन विधुरैर्मुखरैरभावि ।
अक्वाणि गोमुखशतैः पणवैरराणि
तस्मिन् तयोरथरणे प्रविजृम्भमाणे ॥[२८४]

योधा युधे कृतधियो रभसेनवल्गु-
संवादिफल्गुनमफल्गुफलं ववल्गुः ।
पाणिस्थिताक्रुपक्रुपाणनिपातपीतम-
स्तद्विपाक्रुपक्रुपाणक्रुपीटपट्टाः ॥[२८५]

## कुसुमावचयः

सप्तदशे सर्गे कुसुमावचयस्य वर्णनमस्ति । कविनात्र स्व शास्त्रज्ञानं बहु प्रकटितमस्ति । सूक्तीनां बहुलः प्रयोगः काव्यसौन्दर्यं सवर्धयति । अंगनाभिर-

२८३. हर० ४४।४७
२८४. तदेव ५०।२१
२८५. तदेव ५०।२३

नुगता गणाधिया वनविहारार्थं मन्दराद्रौ समायाताः। नायकानुयाता नायिका कुसुमायुधस्य ध्वजिन्य इव चेलुः।[२८६] काचिद्दयितकृतनखक्षतं पश्यन्ती मार्गे चस्खाल,[२८७] काचिच्चुम्बनासक्तं चक्रवाकयुगलं वीक्ष्य प्रिय-तम-कण्ठे रभसाद-र्पितवाहुपाशा बभूव,[२८८] तरुगहने प्रविशन्त्याः कस्याश्चिन्मध्यभागमिव मातुं वल्लरी स्व किसलय-पाणि प्रासारयत्,[२८९] काचिद् व्रततिः कामप्यंचले गृहीत्वा स्व कुंजे रतोपभोगार्थमिव प्रार्थितवती,[२९०] कस्याश्चित् स्वभावतो गुर्वपि जघनं सपत्न्याः समक्षं स्व प्रतीक्षायां व्यग्रं प्रियतमं दृष्ट्वाधिकं गौरवं बभार।[२९१] अंगनानां सुगन्धयुक्तानामाननानां, भ्रमरा उपवनगन्धमुत्सृज्योपासनमकुर्वन्, सत्यमस्ति को विशेषलाभवन्तं पदं प्राप्य पूर्वतनमलाभकारि पदं न त्यजते ?[२९२] क्वचिन् निकुञ्जदेशे युवानः सौदार्द-सुखमनुभवन्ति स्म।[२९३] मादकं वातावरणं वीक्ष्य मानिनीनां मानं विगलितमभूत्।[२९४]

सपत्नीनां समक्षं कुसुमावचयं कुर्वन्तीनां युवतीनां स्थितिः काचिदन्यैवा-भूत्। काचित् प्रियनखक्षतविभूषितं बाहुमूलमुत्थाय सपत्न्यै प्रदर्श्य यत् शाखा-ग्रस्थितं पुष्पमगृह्णात् तत्पुष्यत्वेऽप्यमृतफलस्य लाभं तस्यै प्रददौ।[२९५] स्तनभारा-वनततया या पुष्पं प्राप्तुं नाशकत् सा विनता सत्यपि सपत्न्याः समक्षं प्रियेण स्वकरेण दत्तं तत्पुष्पं प्राप्य समुन्नतेवाभूत्।[२९६] स्व समक्षमेवान्यनार्याः श्रोत्र-देशे तमालपल्लवं नायकेन संयोज्यमानं वीक्ष्य प्रतियुवतिर्नेत्राभ्यामश्रूणि मोच-यति स्म।[२९७] कस्याश्चित्तं प्रियतमं लतान्तरितं वीक्ष्य शंकाकुलं संवृत्त यतोहि, पुरन्ध्रीणां चित्तमतीव मत्सरयुक्तं भवति।[२९८] प्रियतमाया नेत्रयोः कुसुमरजः

---

२८६. तदेव १७।९ — २८७. तदेव १७।१२
२८८. तदेव १७।१३ — २८९. तदेव १७।१९
२९०. तदेव १७।२० — २९१. हर० १७।३३
२९२. तदेव १७।३४ — २९३ तदेव १७।३९
२९४. तदेव १७।४६–४८

२९५. मूलस्थप्रियनखमण्डनस्य वाहोत्क्षेपात्प्रतियुवति विधूनयन्त्याः।
आदित्सोर्द्रुमविटपाग्रवर्तिपुष्पं पुष्पत्वेऽप्यमृतफलत्वमेव भीरोः॥ (१७।५३)

२९६. शाखाग्रस्थिति कुसुमं तरोर्जिघृक्षुर्यत्पीनस्तनविनता शशाक नाप्तुम्।
तन्नासीद्रतगुरुणा विलूय दत्तं प्रत्यक्षं प्रतियुवतेः समुन्नता स्त्री॥ (१७।५५)

२९७. कस्याश्चिद्दयितकराब्जयोजितेन श्रोत्राग्रे तरुणतमालपल्लवेन।
धूमेनाविरतमिवाभिहन्यमानं वाष्पाम्भः प्रतियुवतेर्मुमोच चक्षुः॥ (१७।७४)

२९८. नीरन्ध्रव्रततितिरोहितेऽपरस्याः साशंकं दयिततमे बभूव चेतः।
अभ्यास्ते हृदयमकृत्रिमं प्रियाणां कान्तानां बहुमत्सरो ह्यनंगः॥ (१७।७५)

फूत्कृत्य यत्प्रेयान् दूरीचकार तदेवोड्डीय प्रतियुवतेरक्षिणी कालुष्यपूर्णे चकार ।[२९९]
उदाहरणार्थम् :

कान्तानां कुचकलशैर्यथायथोहे
तुंगत्वं व्यवदधदानेनन्दुलक्ष्मीम् ।
तामुद्वीक्षितुमिव तैस्तथातथाप्तै-
विस्तारं क्षितिरवतस्तरे नितम्बैः ॥[३००]
विस्रस्ते त्रिदशपुरन्ध्रिरुत्तरीये
पश्यन्ती दयितनखक्षतं स्तनाग्रे ।
चस्खालानवहितचित्तवृत्ति यान्ती,
प्रेमाहो ! क्वचिदपि नेक्षते व्यपायम् ॥[३०१]
अन्यस्या दयितकरावलम्बिपाणे-
स्तत्स्पर्शाहितपुलकानुबन्धभाजः ।
गच्छन्त्याः पथि विचकास वक्त्रशोभा
नीवी च श्लथितनितम्बबिम्बवासाः ॥[३०२]
कुर्वाणा पृथुनि वधूर्नितम्बबिम्बे-
विस्रस्तं वसनमनास्थदुर्विनीतम् ।
विस्पष्टामनुरहसं प्रियस्य नान्या न
व्याञ्जीन्निधुवनलालसां स्फुरन्तीम् ॥[३०३]
कल्लोलानिललोलदोलनलसच्चामीकराम्भोरुहां,
रत्नक्षोदपरागसैकतभुवं मङ्क्तुं सुरस्यन्दिनीम् ।
प्रेयोमिः सममुच्छ्वसत्कुचमरक्लाम्यन्नितम्बस्थली,
लीलामन्थरचारचारुचरणन्यासा नताङ्गचो ययुः ॥[३०४]

सूक्तीनां प्रयोगे कविरत्यन्तमवधानवानस्ति । 'प्रेमाहो क्वचिदपि नेक्षते व्यपायम् ।' (१७।१२) 'प्रेमाहो विविधविधिप्रपंचदक्षम्' । (१७।१४) 'मार्गस्यः

---

२९९. कान्तायाः कुसुमरजो विलोचनस्थं यत्प्रेयान् वदनसमीरणैर्निरास्थत् ।
तेनैव प्रतियुवतेः समीपभाजः कालुष्यं युगलमनायि दूरमक्ष्णोः ॥ (१७।८६)

३००. तदेव १७।१२

३०१. तदेव १७।१३

३०२. तदेव १७।१८

३०३. तदेव १७।५८

३०४. तदेव १७।११४

क इव न भाजनं विभूतेः ?' (१७।३१) 'को नाद्यं त्यजति पदं विशेषलाभात् ?' (१७।३४) 'विश्रम्भः सुहृदि फलं ननु प्रधानम् ।' (१७।३९) इत्येवमादिकाः सूक्तयः प्रसंगेऽस्मिन् विकीर्णाः सन्ति ।[३०५]

श्लिष्टैर्वर्णनै कविर्यत्रेच्छति, चमत्कारं जनयति । तद्यथा :

निर्वाणस्थितिमपवर्तितैलमुच्चैरव्याप्तं न मृदु मरुद्विधूयमानम् ।
तं प्रातस्तनमिव दीपकं विलोक्य स्त्रैणेन द्विगुणरताभिलाषतापे ।।[३०६]

तं गिरिं प्रातःस्तनं दीपकमिव वीक्ष्य यौवतस्य (युवतीनां समूहस्य) रमणाभिलाषो द्विगुणोऽभूत् ! कीदृशं गिरिम् ? निर्वाणस्थितिम्='बाण'-संज्ञककुसुमरहितम्, अपवर्तितैलम्=अपवर्तिता=पवनेन संचालिता एलाः=निष्कुट्यो यत्र तादृशम्, उच्चैः, अव्याप्तम्=न विभिः=पक्षिभिर्व्याप्तम् इति नापितु व्याप्तमेव, मृदुमरुद्विधूयमानम्=समीरान्दोलितम् आसीत् ।

प्रातःकालिकं दीपकं चापि निर्वाणस्थिति=निर्वाणोन्मुखम्, अपवर्तितैलम्=वर्तितैलरहितम्, रव्याप्तम्=रविणा=सूर्येण न व्याप्तम्, मरुता कम्प्यमानं च भवति । यथा तद्दीपकमवलोक्य प्रमदानां रताभिलाषो द्विगुणः संजायते तथैव तं गिरिमवलोक्य कामार्दितास्ताः संजाता इत्याशयः ।

एवमेवान्यत्रापि ।[३०७]

## जलक्रीडा

अष्टादशे सर्गे जलक्रीडाया वर्णनमस्ति । सुरम्याणि दृश्यानि बिभ्रदपि वर्णनमिदं सर्वथा पारम्परिकम् । आतपं निराकरिष्णवोऽङ्गनाश्छत्राणि धारयन्त्यो जाह्नवीमवतरन्ति । तत्र कवेः सर्वोऽपि प्रयासो वासनां समुत्तेजयितुमेव कृतो वर्तते ![३०८] सपत्नीनां डाहः, यूनां कामो विलासिनीनां विलासः सर्वत्रात्र नृत्यन्निवाभाति । सुन्दराणि चित्राण्यक्ष्णोः समन्तादवतरन्ति चलन्ति :

स्थूलोच्छ्वासा निर्भरं वादयन्ती गाढोत्कम्पोच्चैस्तरां दन्तवीणाम् ।

---

३०५. द्रष्टव्याः श्लोकाः–१७।४३, ४५, ५०, ५९, ६०, ७५, ७८, ८५, ८६, ८८, ९१, ९२, ९५, ९७, ९९, १०४, १०५, १०८ ।

३०६. हर० १७।३७.

३०७. द्रष्टव्याः–१७।९, २४, २९, ३०, ४४, ४९, ५१, ७९, ८३, १०२, १०६, १०७, १०८ प्रभृतयः श्लोकाः ।

३०८. काचीनद्धैः स्थूलविम्बैर्नितम्बैः संबाधत्वं वर्त्मनः कुर्वतीभिः ।
मन्दं जग्मेऽथाङ्गलेखानिषण्णस्फूर्जत्कंदर्पातिमारादिवाभिः ॥ (१८।७)
अग्रे यान्तं काननालोकनेच्छाव्यग्रत्वात्वं वीक्षितो नो मयेति ।
व्याजादाश्यद्वल्लभं पीवराभ्यामाहत्याराकापि पृष्ठे स्तनाभ्याम् ॥ (१८।९)

शीतार्ता नु प्राप्तकामज्वरा नु भ्रेजे रोमांचांचितांगी नतभ्रूः ॥[३०९]
किं पद्मोऽसौ लीनभृङ्गोऽङ्गनायाः किं वा हस्तः सेन्द्रनीलोर्मिकाङ्कः ।
मङ्क्त्वा तोये कान्तयोत्क्षिप्तमित्थं संशिश्येऽन्यः पाणिमालोक्य दूरात् ॥[३१०]
स्व पाण्डित्यमपि कविः प्रसंगेऽस्मिन् प्रदर्शयति ।[३११]

कदापि सर्वथा नवीनोपमानानि प्रयुज्यन्ते कविना । यथा नारीणां 'कामकेदारभूमिभिः' साकं तुलनायाम् । हललेखामिव त्रिवलीं धारयन्ती काचिद् योषित् प्रियतमपाणिक्षिप्तैरम्बुकणैः सिक्तमूर्तिर्बभूव ।[३१२] यथावा—सौन्दर्यसलिलाप्लाविते कामिन्या वपुषि प्रियतम-नख-क्षतिरेवं प्रतीयते स्म यथा कामकृषकेन विविधविभ्रमवीजानीव वप्तुमत्र तनौ स्वहलं संचालितं भवेत् । कृषीवलो जलपरिप्लुत एव स्थाने हलं संचालयति ।[३१३]

कवेः सर्वो प्रयासो मन्मथं समुत्तेजयितुमेव प्रतीयते ।

जलक्रीडानिरतानां नितम्बिनीनां हृदयहारिणी मुद्रा तं विरमितुमेव न ददाति, भूयो-भूय-स्तदवस्थानामेव तासां चित्राण्यवतारयति :

सिन्धोरथोभयकराग्रनिपीडितोद-
माराद्र्र कुन्तलकलापमनोहराभिः ।
निर्धौतकज्जलजलौघकदर्थिताच्छ-
लावण्यकान्तिपरिपाण्डुरखण्डभाभिः ॥[३१४]
प्रेङ्खन्नखांशुनिकुरुम्बविडम्ब्यमान-
तोयोत्करस्रुतिकरस्थगितस्तनीभिः ।
गाढोच्छ्वसज्जघनलग्नजलच्छटार्द्र-
तन्वंशुकाहितगुरूद्धरणक्रमाभिः ॥[३१५]
बीचिच्छटापटलपङ्किलरत्नपट्ट-
सोपानपद्धतिपरिस्खलनाकुलाभिः ।

---

३०९. तदेव १८।९०.
३१०. तदेव १८।७३.
३११. द्रष्ट० हर० १८।५३, १८।८८.
३१२. लेखाः सीता बिभ्रती मध्यभाजः सुभ्रूरन्या कामकेदारभूमिः ।
आप्यायिष्ट प्रेयसो हस्तपद्मक्षिप्तैरम्भःशीकरैः सिक्तमूर्तिः ॥ (हर०१८।५५)
३१३. लावण्यकान्तिसलिलप्लुतमाप लक्ष्मीमालक्ष्यकान्तकरजक्षतराजि नार्याः ।
वप्तुं वपुर्ललितविभ्रमवीजमुष्टिमाकृष्टसीरमिव कामकृषीवलेन ॥ (१८।९७)
३१४. तदेव १८।९८.
३१५. तदेव १८।९९.

तत्कालसम्भ्रमनिलीनमनोज्ञदत्त-
हस्तावलम्बमुदतारि नितम्बिनीभिः ।।[३१६]

प्रसाधनम्

त्रयोविंशतितमे सर्गे प्रसाधनस्य वर्णनमस्ति । चन्द्रोदयानन्तरं प्रमदाः प्रसाधनविद्यावधानवत्योऽभूवन् । ताश्चण्डातक (श्लोकः ३)—यावक (४)–कांची (५)— चरणाभरणं (६) — हार (८, १०, ११, १२) — वलय (१३) — अधर–राग (१५) —ताम्बूल (१५, १६) —पत्रलेखा (१९, २०,२१,२२)— कर्णपूर (३१) — अञ्जन (३४) — कस्तूरिका–तिलक (३५) — चटुला-तिलक (३६) — केशपाश (३७, ३८, ३९)—अङ्गराग (४०, ४१, ४३)— प्रभृतिभिः प्रसाधनैर्विभूषिताः स्व प्रियतमान् प्रतिपालयामासुः ।

अत्र कविना स्व हृदयस्य सरसता प्रकामं प्रदर्शिता ।[३१७] मुद्रा अपि विविधा अत्र दर्शनीयाः । तासु काचिद् 'विकल्परचिताकृतिचित्तनाथगाढोपगूहनरसा'ऽतिष्ठत,[३१८] काचिल्लज्जया कमितुः स्फुटमदर्शनाद्दूयत,[३१९] काचिदुत्सुका च निःश्वासमारुतपरम्पराभिरखिद्यत ।[३२०]

अनन्तरं 'प्रियतम-प्रणिपात-परम्पराध्यायः' प्रवर्तते । स्पष्टागस्का अपि प्रेयांसः प्रियाभिः क्षम्यन्ते । रत्युपभोगविघ्नभूतस्य मानस्यापनोदो भवति । अंगना मन्मथसमाक्रान्ताः संजायन्ते । अस्य विलासाध्यायस्य समाप्तिश्चैवं भवति :

कृष्णायतानमितपार्श्वनितम्बचुम्बिवेणीलताननगतत्रिपताकपाणिः ।
साचीकृतभ्रु विनिमीलितलोचनाथ काचित्पुरः स्मररसात् कमितुर्जजृम्भे ।।[३२१]
अन्या पुनः सरभसोर्ध्वविविक्तभास्वदुत्तानकर्कटकरस्थितिबाहुयष्टिः ।
उत्क्षिप्तमूलकुटिलीकृतकुंचितभ्रूलेखातरंगितकराललाटपट्टा ।।[३२२]
प्रेंखन्नितम्बतटचुम्बिकरालकालवेणीलतोन्नमितपीनपयोधरश्रीः ।
दीर्घीभवत्तनुतरोदरलुप्तपार्श्वभागा विवर्तवलनं वपुषश्चकार ।।[३२३]

---

३१६. तदेव १८।१००.
३१७. द्रष्टव्याः २३।८, २६, २७, २९, ३४, ५५, प्रभृतयः श्लोकाः ।
३१८. हर० २३।५२
३१९. तदेव २३।५३
३२०. तदेव २३।५४
३२१. तदेव २३।५८
३२२. तदेव २३।६०
३२३ तदेव २३।६१

## पानगोष्ठी

षड्विंशे सर्गे पानगोष्ठ्या वर्णनमस्ति। नायकानामागमनानन्तरं 'सुरत-नाटकपूर्वरंग'[३२४] भूतायास्तस्याः (पानगोष्ठ्याः) प्रसंगप्राप्तत्वात्। मदिरायाः शीधु (श्लोक- सं० २०, २१, ४४, ५४, ७२) — सुरा (२२) — कपिश (३२, ४०) — मधु (५२, ७१, ७६) — मैरेय (७, ५६) — प्रभृतीनां भेदानां सूचीं ददता कविना काश्चन नूतना उद्भावनाः कृताः सन्ति याः काव्यसौन्दर्यं संवर्धयन्ति।[३२५] प्रतीयते यद्वयं पानगोष्ठयां तिष्ठामः। अत्र प्रेयांसः परितो वधूरासवं पाययन्तोऽवलोक्यन्ते।[३२६] क्वचिद् आवरव्यः[३२७] (मधुकलशिकाः), अपरत्र 'आलुकाः'[३२८] (मद्याधानपात्राणि)अन्यत्र, पार्यः[३२९] एकत्र करकाः[३३०] (मधुकलशाः), परत्र चषकाः [३३१] मधुपानगोष्ठीं मूर्तिमतीमिव कुर्वन्ति। सपत्नीनां दाहस्य कविनानेकशो वर्णनं कृतम्। तद्यथा :

प्रत्यक्षमन्ययुवतेः स्वकरोपनीत-
मैरेयगर्भचषकैस्तरुणीमपीप्यत्।
यन्नायको मदमवाप यथा च तेन
पीतेन न स्मयवता मधुना तथासौ ॥[३३२]

एवमन्यत्रापि।[३३३]

मदमत्तानां युगलानां का दशाऽभूदेतैरेभिः श्लोकैर्ज्ञातुं शक्यते :

आविर्भवन्मदनदोहदजृम्भमाण-
निश्वासमारुतविकम्पिपयोधरश्रीः।
विश्रम्य कापि कपिशं पिबति स्म चन्द्र-
बिम्बावतंसकुसुमस्तवकं नतभ्रूः॥[३३४]

---

३२४. हर० २६।९१

३२५. द्रष्टव्याः–२६।८, १२, १६, १७, २०, २३, २५, २७, ३०, ३७, ३९, ४३, ४७, ४९, ५७ ६२, ६५, ७३, ८३, ८४, ८६, ९१ प्रभृतयः श्लोकाः।

३२६. तदेव २६।१

३२७. तदेव २६।२

३२८. तदेव २६।२

३२९. तदेव २६।५, १८

३३०. तदेव २६।६

३३१. तदेव २६।४,१२, ३४ प्रभृतयः

३३२. तदेव २६।७२

३३३. द्रष्ट० २६।४,१८, ४८, ५०, ६१

३३४. तदेव २६।३२

निःश्वासधूततरलोत्पलयोपलक्ष्य-
विस्तारया दयितपीतविमुक्तयान्या ।
शोभां बभार मधुपाटलयाच्छरत्न-
शुक्त्या वधूर्ललिततारकया दृशा च ।।[३३५]
गण्डस्थली कपिशपानपरम्पराभि-
रारूढरागमदताम्ररुचिस्तरुण्याः ।
आवृत्तिचुम्बनकृतोत्सववल्लभोष्ठ-
ताम्बूलरागपरिणामवशादिवासीत् ।।[३३६]
शोभां बभार परिणामविरूढकान्त-
दन्तव्रणः सपदि पीतसुरासवायाः ।
चारुभ्रुवश्चषकबिम्बितचन्द्रबिम्ब-
मध्यावलग्नमलबिन्दुरिवाधरोष्ठः ।।[३३७]
निर्मृष्टपानलघुकानि मनांसि कुर्व-
ल्लज्जामपास्य विदधत्सुरताभिलाषम् ।
आलिगनान्यशिथिलानि दिशन्प्रियाणा-
विर्भवन्बहुमतो मदविभ्रमोऽभूत् ।।[३३८]
मानान्धकारमवधूय शुचौ प्रसाद-
चन्द्रेऽधिरोहति मनोम्बरमम्बुजाक्ष्याः ।
उज्जृम्भमाणसरसोत्कलिकासहस्रै-
रव्याहतो मकरकेतुरवाप वृद्धिम् ।।[३३९]
जग्राह वक्त्रकमलं हृदयं च रागो-
दृष्टिस्तनुश्च परिमन्थरतां प्रपेदे ।
चस्खाल कोमलपदं गमनं वचश्च-
चेतस्युपेयुषि मदं सुरसुन्दरीणाम् ।।[३४०]

---

३३५. हर० २६।३५
३३६. तदेव २६।४०
३३७. तदेव २०।८१
३३८. तदेव २६।७८
३३९. तदेव २६।८१
३४०. तदेव २६।८३

अनन्तरं च संगीत-गोष्ठी समायोजिता भवति। यत्र विविधवाद्ययन्त्राणि वाद्यन्ते।[341] संगीतसुखं च वर्धते। सर्वस्याप्यस्य सविधानकस्य परिणतिः सुरतवर्णने भवति।

एवंविधेषु रसप्लुतेषु स्थलेष्वन्यत्र च विस्तृतं वस्तुवर्णनं काव्यस्यास्य वैशद्यं द्योतयति।

३४१. तदेव २६।८४-९०.

## सप्तमोऽध्यायः

# हरविजये कलापक्षः

यद्यपि काव्ये पुरातनैराचार्यैः कलापक्ष-भावपक्षरूपेण काव्यस्य बहिरङ्गा-न्तरङ्गतत्त्वानां विभाजनं न कृतं तथाप्यद्यत्वे तथा प्रसिद्ध्यनुरोधादत्रानया दिशा विवेचनं क्रियते। इमौ पक्षौ वस्तुतोऽविभाज्यौ परमध्ययनसौकर्यान्तौ पृथक्-पृथङ्निरूप्येते। कलापक्षो वपुःस्थानीयः, भावपक्षश्चात्मस्थानीयः। कलापक्षे भाषा-शैली-छन्दोऽलंकार-वक्रोक्त्यादीनां विवेचनं समायाति। अनया दृशाऽत्र हरविजयस्य मूल्याङ्कनं क्रियते।

हरविजयं प्रौढमतीनां सहृदयानां कृते विरचितं महाकाव्यं वर्तते। अतस्त-द्रचनापि नितान्तं प्रौढा। भाषारीतिछन्दोऽलंकारवक्रोक्त्यादिष्विदमप्रतिमं वर्तते। यद्यप्यनेन महाकविना प्रयत्नपूर्वकं 'ग्रन्थग्रन्थिन्यासस्य' प्रतिज्ञा न कृतास्ति तथाप्यस्य महाकाव्यं ग्रन्थग्रन्थिभिः शून्यं नास्ति। ग्रन्थयोऽपि न सामान्या, अनेकस्थलेषु तु तस्य काव्यं पण्डितानपि निरस्तधैर्यान् विधत्ते। वागीश्वरस्यापि चमत्कारकारि तद्वचः।

रत्नाकरो भाषायाः समाडस्ति। यत्र यथेच्छति तथा भाषां परावर्तयति। सा तं वश्येवानुवर्तते। क्वचित्प्रसादगुणगुम्फिता, क्वचिन्माधुर्योपेता, क्वचिदो-जोगुणयुक्ता, क्वचिद्रसाप्लुता, अन्यत्रालंकारचाकचक्यवती, अपरत्र चित्ररच-नानिष्णाता स्वकीयं लोकातिशायिवैभवमनारतं प्रकाशयति। ध्वन्यात्मकता, चित्रात्मकता, लाक्षणिकता, प्रतीकात्मकता, सजीवता, बिम्बयोजनादयो ये गुणा आधुनिकैः समालोचकैः स्वीक्रियन्ते तेऽपि तत्र स्फुटं सुप्रतिष्ठिताः सन्ति।

रत्नाकरस्य भाषा विषयानुसारिणी वर्तते। गभीरा राजनीतिविवेचने, श्लक्ष्णा प्रकृतिवर्णने, स्फीता युद्धवर्णने, वक्रोक्तिमयी संवादेषु। समस्तमपि वस्तुवर्णनं कलापक्षस्योदाहरणरूपेण प्रस्तोतुं शक्यते। अत्रोदाहरणान्तराण्यपि प्रदीयन्ते। अन्धकपुरीवर्णने भाषा कियती सुबोधा प्रसादगुणयुक्ता प्रवाहशीला चास्ति :

किकासिकिंशुकच्छायाद्वनादिव विभावसोः ।
तत्क्षणापहृतान् पत्रशुकानैक्षत सव्यथः ॥
चन्द्रांशुगौरसत्पक्षबालभारान् सचेतसः ।
ददर्श बाहहंसांश्च चामरांश्च हृतानसौ ॥
चतुर्दिक्स्फटिकागारप्रभाक्षीरपरिप्लुतम् ।
ददर्श चौच्चैःश्रवसमुत्तिष्ठन्तमिवोदधेः ? ॥
त्रैलोक्यलक्ष्म्याः सा दधल्लीलादोलामिवाग्रतः ।
विलोलमुक्ताप्रालम्बव्याजेनैक्षत तोरणम् ॥
ददर्श तोरणामुक्ताश्चण्डीसिंहसटावलीः ।
उत्पातेन्दुकला‹ दैत्यप्रलयाशंसिनीरिव ॥
अदृश्यमानपर्यन्तानर्पणीयकरानसौ ।
ददर्श विविधान् राज्ञो दिग्विभागानिवागतान् ॥
उत्खातशेषमाणिक्यकण्ठकाशून्यकन्धरान् ।
रभसालिंगितस्वःस्त्रीस्तनवासाविलोरसः ॥
भर्तुः प्रसादलब्धानि देवयानानि सत्वरम् ।
निर्गत्यारोहतो दैत्यराजपुत्रान् ददर्श सः ॥[१]

गम्भीरविवेचनेषु तस्याः स्थितिस्तद्विधैवास्ति । तद्यथा राजनीतिप्रसंगे :

शंके समाप्य महतां हृदयेषु पूर्व-
मीषत्तदंशपरमाणुलवावशेषाम् ।
गम्भीरतां जलधिषु, स्थिरतां नगेषु,
विस्तीर्णतां च नभसि व्यधिताथ वेधाः ॥
प्रेक्षावतोऽप्यविहितौपयिकप्रयोग—
शून्यानभीक्ष्णमधिकुर्वत एव तीक्ष्णाः ।
चक्षुष्मतोऽपि चरणेष्ववधानवन्ध्यान्,
विन्ध्यन्ति कण्टकशिखा निशिता अवश्यम् ॥[२]

प्राकृतिक वर्णनेषु कामपि सान्द्रतां मन्दतां मधुरतां च निदधाना सावज्ञोक्यते । दिङ्मात्रं यथा :

स्थगयितुं प्रतिकूलविलोकनाः कुसुमिता ककुभो नु वियोगिनाम् ।
कमलधूलिमुदानयताधिकस्तवनतां वनतोऽनिलसंहृतिः ॥

१. तदेव ३२।३६–४३
२ तदेव ५०।१८, १९

रुचिरतन्यत निर्झरिणीतटैः शकुनिपादहतैर्गलिताम्बुभिः ।
नखपदाङ्कनिरम्बरसुन्दरीजघनजा घनजालतिरस्कृतौ ।।
कुसुममार्तवमुद्वहदुच्छ्वसन्मधुकरीरचितस्थिति काननम् ।
न नवमात्तवतां मधुपायिनामलसता लसतामभवत् क्वचित् ।।
प्रसृतमन्दसमीरहतिक्वणत्कणिशराशिशरज्जयघोषणाम् ।
चिरमिव व्यधितावनिमण्डलं सकलमं कलमन्द्ररवाकुलम् ।।[३]

युद्धवर्णनेषूत्साहप्रधानेषु च स्थलेष्वौजोडम्बरबद्धा च गौडी स्फुटं चकास्ति । दिङ्मात्रं यथा :

अद्यावस्कन्दलीलाचलितबलपरिस्यन्दखर्वीकृतोर्वी—
संरम्भोत्तम्भनास्थोन्नमितभरनमत्कन्धरासन्धिरास्ताम् ।
शेषोऽपि स्फारफुल्लत्स्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्ग—
स्फूर्जत्संदोहसन्देहितविकटशिखामण्डलीरत्नषण्डः ।।[४]

एवमन्यत्रापि ।[५]

हरविजयस्य भाषा नादसौन्दर्येण परिपूरितास्ति । शब्दानां नृत्यप्रायता तत्र मनो बलादाकर्षयतीव । कालमुसलस्य गंगाकावेर्योर्दर्शनावसरे कल्लोल-कोलाहल इव कर्णौ स्पृशति :

तेन स्खलत्खलखलामुखरा करालकैलासकूटविकटोर्मिघटासहस्रा ।
संक्रान्तकैटभनिसूदनपादपद्मप्रेंखन्नखच्छविरिवैक्षत जह्नुकन्या ।।[६]

यद्वा :

मीनावलीसरभसाप्लुतिघट्टितासुवीचीविलोलविरुवत्कुररीकरालम् ।
कावेर्यलक्ष्यत जलं दधती च तेन, निःशंकरकुंकुलसंकुलकूलकच्छा ।।[७]

क्रोधाभिव्यञ्जनायां तद्विधमेवानुरणनं शब्दानाम् :

कङ्कालसङ्कुलमशङ्कितकाककङ्कसङ्कतधाम रणवर्त्म शशाङ्कमौलेः ।
टाङ्कारिकार्मुकविटङ्कपटङ्कमस्तु टङ्काङ्कसङ्कटविशङ्कटकङ्कटं वः ।।[८]

एवमन्यत्रापि ।[९]

---

३. तदेव ३।६८–७०, ७३

४. तदेव १३।८३

५. तदेव ४५।५१–५८ । ४६।७४–८१ । ४८।१४४–४८

६. तदेव ३०।१७

७. तदेव ३०।

८ तदेव १३।७६

९. तदेव १।।३८, ३४।२०, ४१, ६५

पदलालित्यं सर्वत्रैव विराजते। एकमुदाहरणं पर्याप्तं स्यात् :

लीलाविलोलकलकण्ठविहंगकेलिकोलाहलाकुलकुलायकुलामलाङ्के।
कक्कोलकन्दकदलीलवलीलवङ्गमालाललामजलमञ्जुलकूलकच्छे ॥[१०]

वर्णनीयस्य चित्रमिव शब्दैराकृष्यते :

भ्रश्यन्माल्या, विश्लथत्केशहस्ता त्रुट्यत्तारास्फारहारावलीका।
प्रार्वातिष्टाकृष्टसम्भोगलक्ष्मी रम्भोरूणां मज्जनारम्भलीला ॥[११]

मुद्राचित्रणे कविरत्यन्तं पटुरस्ति। वह्निगर्भस्य भाषणकालिकी मुद्रा दर्शनीयास्ति :

बिभ्रद्विकासिपुटतारकदृष्टिपूर्णगण्डस्थलं शशिसितस्मितशोभिवक्त्रम्।
आधूय कोपशिथिलीकृतभोगिबद्धजूटं शिरोलुलितपिङ्गजटाकलापम् ॥
दन्तप्रभाधवलभासमनेकमार्गवृत्ति मनोहरपदोज्ज्वलवर्णहंसाम्।
गाम्भीर्यसिन्धुघटितां गिरमुज्जहार जह्नुर्भगीरथसुतामिव वह्निगर्भः ॥[१२]

एवमनेकत्र।[१३]

तस्य भाषायां वहवः शब्दाः अन्यत्राप्रयुक्ताः स्तोकप्रयुक्ता वा समायान्ति। तद्यथा — कासरः (महिषः), कुलिः (चटका), रसायुः (भृंगः), एकपिंगलः (कुबेरः), तालूरः (जलावर्तः), झंकरकः (तृणमयः पुरुषः), आवरवी (कलशिका), अम्बरीषम् (भ्राष्ट्रम्), मंखः (बन्दी), घनवर्त्म (आकाशः), रीढा (हेला), स्वरुः (वज्रः), खट्वङ्कः (मूर्खः), गृहचन्द्रः, आत्मदर्शः (दर्पणः), गाङ्गायनिः(गणपतिः), लडहः, लटभः (मनोज्ञः), शितिवर्त्म (खड्गः), ग्रहकल्लोलः, अभ्रपिशाचः (राहुः), वेल्लहलः (सुकुमारः), कूर्मगृहं (समुद्रः), चीनपिष्टम् (सिन्दूरम्), तोयेन्धनः (बडवानलः), प्रतिघः (प्रतिबन्धको हेतुः), अलिकम् (ललाटम्), सरिसुत् (सुरा), डामरः (शूरः), इषीकः (शाल्मलिः),कूर्चकेसरः (नारिकेलम्), मुखलांगलः (सूकरः), शौटीर्यं (मदः), पीलुः (हस्ती), द्रोणकाकः, काकोलः (वृद्धवायसः), मोहनं (सुरतम्), संस्थिताप्लवनम् (मृतस्नानम्), वामलूरः (वल्मीकः), चडुली (उल्का), डिम्बडम्बरः (बाहुयुद्धम्), शताश्रि (वज्रम्) घनाघनौघधाटिम् (मेघसाम्यम्), उड्डमरः (भीषणः), तरण्डः (प्लवः), सञ्चारिका (दूती), अयुगार्चिः (अग्निः), टिट्टिभः (मत्कुणः) जयज्योत्कारम्

१०. तदेव. ४।३५
११. तदेव १८।२३
१२. तदेव १०।१०,११
१३. द्रष्टव्याः—१५।३, ४, ५, ६, । १६।८२ । २३।२४, ६१, २५।४६, ५६, २८।११४ । ३४।२०, ४१, ४५ प्रभृतयः श्लोकाः।

(सजयजयकारम्), प्रकीर्णकः, गौरवालः (चामरम्), औरुबूकम् (एरण्डसम्बन्धि), रतगुरुः (कान्तः), पिचु (कार्पासम्), सुग्रीष्मः (वसन्तः), मत्तकाशिनी (प्रगल्भा योषित्), धूम्या (धूमसमूहः), स्फुलश्रीः (पटमण्डपशोभा), रली (गोष्ठी), विव्वोकिनी (योषित्), वैयात्यम् (धृष्टता), छातम् (कृशम्), उद्वोढा (पतिः), उषावतारः (प्रदोषः), करणिः (साम्यम्), गौरकरः, ग्रहभृत् (चन्द्रः), सपीतिः (सहपानम्), निबिरीसम् (निबिडम्), घृष्टि (सूकरः), कूवरी (रथः), झम्पा (अभिघातः), झषावचूलः (कामः), अपाश्रयः (पर्यंकः), शशांकातपः (ज्योत्स्ना), आकल्पकम् (अनंगकृतमस्वास्थ्यम्), नाडिन्धमः (स्वर्णकारः), प्रतिफालः (प्रतिघातः), उत्क्षेपनिर्ह्रासौ (उन्नमननमने), पिचुलः (अशोकः), खरूचिका (धनुष्मतामभ्यासोपयोगि शरव्यम्), आवसनकम् (रतिगृहम्), कार्यिकता (प्रयोजनापेक्षित्वम्), अवचूलम् (कटकम्), पारिहार्यः (कटकः), इन्दीरम् (अवश्यायः), अररिः (द्वारपट्कः), वासतेयी (रात्रिः), समंजसम् (उचितम्) शफरुकम् (आभूषणमंजूषा), विशिखा (रथ्या), रभसा (वांछा), संकसुकम् (अस्थिरम्), ऋक्षपतिः (शशी), विधानम् (हस्त्यन्नम्), दिण्डिः (महादेवः), हौताशनिः, बहुलासुतः (कार्तिकेयः), समवर्ती (यमः), आटः (पक्षी), पतद्ग्रहः (सौवर्णं निष्ठीवनपात्रम्), अर्कः (स्फटिकः), खेटः (अधमः), गूढपदः (सर्पः), क्षितिसुतः (नरकासुरः), विटंकः (कुटिलः), विशंकटः (विशालः), अकल्कः (निर्मलः), शौटीर्यम् (अभिमानः), अलगर्दः (जलसर्पः), डम्बरिकः (प्रपञ्ची), शालूकम् (उत्पलकन्दः), पिण्डेशूरः (गेहेशूरः), पुंगवः (गवेन्द्रः), उष्णवारणम् (छत्रम्), कदली (वैजयन्ती), सीतापटः (केतुपटः), आच्छोदनेच्छा (मृगयारसः), इली (छुरिका), कोटवी (नग्ना योषित्), संवननम् (वशीकरणम्), प्रमापणं (हिंसनम्), वाह्याली (तुरंगसंचारभूमिः), भोगावली (वन्दिनां पाठः), करुसी (श्मशानभूमिः), आभीलता (भीषणता), लौहितीकः (स्फटिकः), अश्वगर्भः (मरकतम्), आक्रीडम् (उद्यानम्), लडितम् (उल्लसितम्) — प्रभृतीनां पञ्चशतानां शब्दानां प्रयोगः कवेरपरिमितं शब्दभाण्डारं द्योतयति । त्रिशंकट-विटंक-प्रतिघ-पट्ट-छटा-कूट–प्रभृतयः शब्दा कवेरतीव प्रियाः, अनेकवारं प्रयुक्ताश्च ।

इत्थं रत्नाकरस्य भाषा नितान्तं प्रौढा प्रभावोत्पादिनी चास्ति । तस्या दुरवबोधतायामपि किमपि सौन्दर्यमस्ति । वैदर्भीगौडीपाञ्चालीप्रभृतयो रीतयः, ओजःप्रसादमाधुर्यादयो गुणा, व्यंजनादयः शब्दशक्तयश्च सम्भूय तस्याभिव्यंजनां सशक्तां सप्राणां च कुर्वन्ति ।

## अलंकारयोजना

निसर्गसम्यंच्यपि रमणीनामंगानि यथालंकारैर्विना नालम्भवन्ति प्रेक्षकाणां मनः समाक्रष्टुं तथैव मधुरमधुरापि शब्दरचनार्चिता काव्यवचनावली अलंकाररहिता न मनोहरति सहृदयानाम् । तथा चोक्तम् —'न कान्तमपि निर्भूषं विभाति वनिताननम् ।' सुवर्णं हि स्वर्णकारकरकौशलकलितालंकृति-सुसम्पन्नमेव वनितांगभूषासंवर्धकं भवति । इतस्तत उन्मुक्तरूपेण प्रकीर्णामिर्ल-तिकामि र्न शोभितं भवत्युपवनम् । कालायसमलीमसा अपि केशाः स्नेहप्रदानेन परिर्वाधितसुषमा कंकतिकया सुसंस्कृता एव बलादाकर्षन्ति दर्शकानां मनः । एवमेव कविताकामिनी कविसहृदयजनकौतुकाय तदैवालम्भविष्णुर्भवति यदा सालंकारैरलंकृता स्यात् । इत्थमलंकारैः शब्दार्थशरीरे काव्ये साक्षात्सम्बन्धेन बाह्यशोभा, परम्परासम्बन्धेन चान्तरिकशोभा सुतरां समुज्जृम्भते । यथा चोक्तम् :

उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् ।
हारादिवदलंकारास्तेऽनुप्रासोपमादयः ॥[१४]

अथवा :

शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।
रसादीनुपकुर्वन्तोऽलंकारास्तेऽङ्गदादिवत् ॥[१५]

अलंकारगुणयोरिदमेवान्तरं भवति (क) यदलंकाराः शब्दार्थशरीरस्य साक्षाद्धर्माः, गुणाश्चात्मनो रसस्य (ख) परम्परया चालंकारा आत्मानमपि परिष्कुर्वन्ति, गुणाश्च शरीरम् (ग) अलंकारा शरीरस्यास्थिरा धर्माः, गुणाश्च स्थिराः । (घ) विच्छित्तिजनकत्वं तूभयत्र समानमेव ।

ते चालंकारा शब्दार्थोभयात्मकाः । अनुप्रासादयः शब्दालंकारा, उपमाद-योऽर्थालंकाराः, पुनरुक्तवदाभासादयश्चोभयालंकाराः । रत्नाकरेऽलंकाराणां चमत्कारः सुतरां राजते । अत्र संक्षेपतस्तच्चर्चा कृता स्यात् ।

### (क) शब्दालंकाराः

अनुप्रासः— अनुप्रासस्य शतश उदाहरणानि काव्येऽस्मिन् सन्ति । पदलालित्या-दिषु दर्शितान्यपि । तथापि दिङ्मात्रमुदाह्रियते :

कम्पाकुलीभवदनेकपलोकपालपालीकपालदलनोत्पुलकं कपोलम् ।
एकोऽपि कोपकपिलं दधदुत्कृपाणपाणिः क्रणोमि करुणाकृपणोऽरिचक्रम् ॥[१६]

---

१४. का०प्र० ८।८८

१५. सा० द० १०।६५१

१६. तदेव ८।३२

यमकम्—यमकस्य विस्तरशो विचारश्चित्रालङ्कारप्रसङ्गे विधास्यते । अत्र प्रसन्नयमकस्यैकमुदाहरणं दीयते :

दधति यत्र पयोधरपंक्तयो गिरिशकण्ठरुचिं जलमन्थराः ।
स कृतपान्थवधूजनवेपथू रसमयः, समयः स विजृम्भते ॥[१७]

श्लेषः—श्लेषस्य सभङ्गाभङ्गरूपद्वयमपि काव्ये प्रौढ़तया प्रचुरतया चोपन्यस्तमस्ति । काव्ये श्लेषस्य शतश उदाहरणानि विराजमानानि सन्ति ।[१८] कदाचित्स्वतन्त्रतया कदाचिच्चालंकारान्तरैः साकं तस्य प्रयोगोऽस्ति कृतः । तेषु श्लेषेषु केचन प्रसन्नाः, केचन च कूटाश्चित्रकाव्यसीमानं स्पृशन्तोऽवलोक्यन्ते । 'शृंगारस्थितिरमणीयनर्मगर्भ......' (१७।२९), 'इति रसपोषयुक्तिमद्......' (२१।५७), 'तुङ्गं वपुः सकलहास्तिकभंगबद्धकक्ष्य......' (३१।३३), प्रभृतीनां श्लोकानां चर्चा पूर्वं कृतैवात्र 'अर्थत्रयवाची' श्लोकः समुद्ध्रियते :

कृतकामोऽथ गोभर्ता सव्यूढकमलासनः ।
भूतिधाम परं भेजे शम्भुः शम्भुरिवापरः ॥ (४३।२९२)

अस्य श्लोकस्यार्थाः शिव–विष्णु–ब्रह्मणां पक्षे लगन्ति । प्रथमः 'शम्भुः', शंकरस्य वाचको परश्च विष्णुब्रह्मणोः । तयोरपि शम्भुपदव्यवहार्यत्वात् ।

(१) शिवपक्षे – शम्भुः परम् = अत्यर्थम्, भूतिधाम = भूतेर्भस्मनो धाम= कान्तिं, भेजे = सिषेवे । किम्भूतः ? कृतकामः = कृतो हतः कामो येन तद्विधः । गोभर्ता = गोर्वृषभस्य स्वामी । सव्यूढकमलासनः=सवी=यज्ञवान्, यजमानमूर्तित्वात् । ऊढकमलासनः = कमलं = मृगः, तस्यासनं चन्द्रः, स ऊढो येन सः । अपरः = द्वितीयः शम्भुरिव = विष्णोर्ब्रह्मणश्चैव ।

(२) विष्णुपक्षे – कृतकामः = कृतकं = कृत्रिमं वराहादिरूपम्, अमति = गच्छति यः सः ('अम्' गतौ) । गोभर्ता =पृथ्वीधारकः । भूतिधाम = भू+ ऊतिः = भुवः=पृथिव्या ऊतिः =संरक्षणं तस्या धाम = स्थानम् । सव्यूढकमलासनः = धारितः कमलासनो ब्रह्मा येन तद्विधः ।

(३) ब्रह्मणः पक्षे – कृतकामः = पूर्णकामः । गोभर्ता = गोः = वाण्याः, भर्ता = पोषकः । व्यूढकमलासनः = विभिः = पक्षिभिर्हंसैः, ऊढं कमल-

---

१७. तदेव ३।४३

१८. द्रष्टव्याः–१।१, २।५३, ४।३८, ५।५, ६।१३४, ११।४५, १२।१–१३,७५, १३।७५, १४।२, ५, २४, २५, १६।७८, १८।१६, १९।६२, ६४, ६७, २८।३०, ३४, २८।५४, ८५, ७६ ७७, ८०, ८२, ८९, ९०, ९४, ९५, १०३, ३०।२३, ७७, ७८, ७९, ८०, ३१।२०–३२, ३७।१९, २२, २५, २७, ४४, ३८।११, १६, ३९।३५, ४२।३९, ४४।८, २२, २४, २७, ३१ ३९, प्रभृतयः श्लोकाः ।

मयमासनं यस्य तद्विधः । किंच भूतिधाम = भूतेः = उत्पत्तेः, धाम=विषयः, हेतुः ।

एवमेव :

> ससत्वशाली समदत्वमाप्तो निबद्धमूलः स्थिरभूतिचर्चः ।
> उत्सेधवानस्खलितः शुचित्वात्सन्नागराजश्रियमाप गुर्वीम् ॥[१९]

अयं श्लोकोऽर्थचतुष्टयवाची । अस्य शिव–हिमालय–शेषनाग–गजानां पक्षेऽर्थाः संयोज्यन्ते । अभंगश्लेषप्रधानत्वादयं श्लोकः सरलतरः विस्तृतव्याख्यानं विनापि च सहृदयैरूह्यः ।

## (ख) चित्रकाव्यं चित्रालङ्कारश्च

हरविजये चित्रकाव्यस्य चित्रालंकारस्य च बहुविधो विलासोऽवलोक्यते । चित्रकाव्ये चित्रालंकारे च को भेदः ? इत्याकाङ्क्षायां मनाग् विस्तरेणोच्यते—काव्यस्य हि उत्तममध्यमाधमरूपेण भेदत्रयं मम्मटाचार्यैः कृतम् । शब्दार्थयोर्गुणीभावेन रसादीनां च प्राधान्येन विरचितं काव्यमुत्तमं स्वीकृतम् । शब्दार्थयोः प्राधान्येन रसस्य चाप्राधान्येन मध्यमम्, सर्वथा व्यंग्यराहित्येन शब्दचित्रमर्थचित्रं चेत्युभयविधं तृतीयमधमं काव्यं भवतीति स्वीकृतम् ।

चित्रकाव्यं मम्मटानुसारं 'गुणालंकारयुक्तं' भवति । अत्र प्रश्नोऽयमुदेति यद् गुणास्तु रसस्य धर्माः, चित्रकाव्ये च रस–संस्पर्श–शून्यता भवति, तत्र कथं गुणानां स्थितिर्भवितुं शक्नोति ? अस्योत्तरे एतत्कथयितुं शक्यते यन्मम्मटोऽत्यन्तं क्षीणमात्रायां विद्यमानस्य रसस्य सद्भावं हृदि निधायैव गुणयुक्ततामाह यद्वा प्राचामाचार्याणां शब्दार्थगुणान् दृशि निधायैवमुवाच ।[२०]

कविराजो विश्वनाथोऽमुं तृतीयं भेदं न स्वीकरोति । तस्यायं तर्को यत् प्रधानगुणभावाभ्यामेव व्यंग्यस्य स्थितिर्भवितुं शक्नोति । काचित् तृतीया स्थितिर्न न्याय्या, अस्मान्न तृतीयः कश्चिद् भेदो भवितुं शक्नोति ।[२१]

अत्र विषये ध्वन्यालोककर्तुर्विचाराः स्पष्टतामापादयन्ति, अतो विस्तरतया दीयन्ते :

---

१९. हर० ४८।१२४

२०. रसगंगाधर का शास्त्रीय अध्ययन: डा० प्रेमस्वरूप गुप्तः, पृ० ७३–७४.

२१. केचिच्चित्राख्यं तृतीयं भेदमिच्छन्ति । तदाहुः :
'शब्दचित्रं वाच्यचित्रमव्यंग्यं त्ववरं स्मृतम् । तत्र यदि चाव्यंग्यत्वेन व्यंग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम् । ईषद्व्यंग्यमिति चेत्, किं नामेषद्व्यंग्यत्वम्? आस्वाद्यव्यंग्यत्वम्, अनास्वाद्यव्यंग्यत्वं वा ? आद्ये प्राचीनभेदयोरेवान्तःपातः, द्वितीये त्वकाव्यत्वम् । यदि चास्वाद्यत्वं तदा क्षुद्रत्वमेव क्षुद्रतायामनास्वाद्यत्वात् ।' (सा०द० लक्ष्मी टीका, पृ० २९१–९२)

"गुणप्रधानभावाभ्यां व्यंग्यस्यैवं व्यवस्थिते ।
काव्ये उभे ततोऽन्यद् यत् तच्चित्रमभिधीयते ।।
चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम् ।
तच्च किंचिच्छब्दचित्रं वाच्यचित्रमतः परम् ।।

व्यंग्यस्यार्थस्य प्राधान्ये ध्वनिसंज्ञितकाव्यप्रकारः गुणभावे तु गुणीभूत-व्यंग्यता । ततोऽन्यद् रसभावादितात्पर्यरहितं व्यंग्यार्थविशेषप्रकाशनशक्तिशून्यं क काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेणोपनिबद्धमालेख्यप्रख्यं यदाभासते तच्चित्रम् । न तन्मुख्यं काव्यम्, काव्यानुकारो ह्यसौ । तत्र किंचिच्छब्दचित्रम्, यथा दुष्करयमकादि । वाच्यचित्रं ततः शब्दचित्रादन्यद्व्यंग्यार्थसंस्पर्शरहितं, प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्यरहितमुत्प्रेक्षादि ।

अथ किमिदं चित्रं नाम यत्र न प्रतीयमानार्थसंस्पर्शः ? प्रतीयमानो ह्यर्थ-स्त्रिभेदः प्राक् प्रदर्शितः । तत्र यत्र वस्त्वलंकारान्तरं वा व्यंग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः । यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव । यस्मादवस्तुसंस्पर्शिता काव्यस्य नोपपद्यते । वस्तु च सर्वमेव जग-द्गतमवश्यं कस्यचिद् रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते, विभावत्वेन चित्त-वृत्तिविशेषा हि रसादयः । न च तदस्ति वस्तु किंचिद् यन्न चित्तवृत्तिविशेषमुप-जनयति तदनुत्पादनेन वा कविविषयतैव तस्य न स्यात् । कविविषयश्च चित्रतया कश्चिन्निरूप्यते ।

अत्रोच्यते — सत्यं न तादृक् काव्यप्रकारोऽस्ति यत्र रसादीनामप्रतीतिः, किन्तु यदा रसभावादिविवक्षाशून्यः कविः शब्दालंकारमर्थालंकारं वोपनिबध्नाति तदा तद्विवक्षापेक्षया रसादिशून्यतार्थस्य परिकल्प्यते । विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः । वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परि-कल्प्य चित्रविषयो व्यवस्थाप्यते । तदिदमुक्तम् :

रसभावादिविषयविवक्षाविरहे सति ।
अलंकारनिबन्धो यः स चित्रविषयो मतः ।।
रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा ।
तदा नास्त्येव तत्काव्यं ध्वनेर्यत्त् न गोचरः ।।"[२२]

पण्डितराजेनायं विषयोऽधिकं स्पष्टीकृतः । तेन (१) उत्तमोत्तम (२) उत्तम (३) मध्यम (४) अधमभेदाः काव्यस्य स्वीकृताः – (क) "शब्दार्थौ यत्र

२२. ध्वन्यालोकः, ३।४२, ४३

गुणीभावितात्मानौ कमप्यर्थमभिव्यंक्तस्तदाद्यम् । (ख) यत्र व्यंग्यमप्रधानमेव सच्चमत्कारकारणं तद्द्वितीयम् । (ग) यत्र व्यंग्यचमत्कारासमानाधिकरणो वाच्यचमत्कारस्ततृतीयम् । (घ) यत्रार्थचमत्कृत्युपस्कृता शव्दचमत्कृतिः प्रधानं तदधमं चतुर्थम् ।"[२३]

एवं चित्रकाव्यस्य विषये एतत्स्पष्टभूद् यद् यत्र कविः केवलमर्थमचत्कारे शव्दचमत्कार एव वा ध्यानं स्थापयति तच्चित्रकाव्यं भवति । पण्डितराजस्य विवेचनेनैतत्सुस्पष्टं भवति यत्सोऽर्थचमत्कारं शव्दचमत्कारं चैकस्यामेव तुलायां न तोलयति । "केचिदिमानपि चतुरो भेदानगणयन्त उत्तममध्यमाधमभावेन त्रिविधमेव काव्यमाचक्षते । तत्रार्थचित्रशव्दचित्रयोरविशेषेणाधमत्वमयुक्तमुक्तम् । तारतम्यस्य स्फुटमुपलब्धेः । को ह्येवं सहृदयः सन् 'विनिर्गतं मानदमात्ममन्दि-रात्……', 'सच्छिन्नमूलः क्षतजेन रेणुः' इत्यादिभिः काव्यैः 'स्वच्छन्दोच्छलद्' इत्यादीनां पामरश्लाघ्यानामविशेषं ब्रूयात् ? सत्यपि सारतम्ये यद्येकत्वं कर्स्तीह ध्वनिगुणीभूतव्यंग्ययोरीषदन्तरयोर्विभिन्नभेदत्वे दुराग्रहः ?'[२४]

एवं चित्रकाव्यस्यापि द्विविधा स्थितिरस्ति —(१) यत्रार्थचमत्कृत्युपस्कृता शव्दचमत्कृतिः प्रधाना (२) यत्रार्थचमत्कृतेरभावः, शव्दचमत्कार एवाक्रान्तं करोति काव्यम् ।

इयमपरा स्थितिरेव समीक्षकाणामालोचनाविषयोऽस्ति । इयमेव च चित्रालंकार उच्यते । अस्य स्वरूपविषये आचार्यरुद्रटेनोक्तम् :

भङ्ग्यन्तरकृततत्क्रमवर्णनिमित्तानि वस्तुरूपाणि ।
साङ्कानि विचित्राणि च रच्यन्ते तत्र तच्चित्रम् ।।[२५]

काव्यालंकार-व्याख्याता नमिसाधुरस्य भावं स्फोरयति — "यत्र काव्ये वस्तूनां चक्रादीनां रूपाणि=संस्थानानि रच्यन्ते=निबद्ध्यन्ते । तच्चित्रसा-दृश्यादाश्चर्याद्वा चित्रं नामालंकारः ।" नमिसाधोरस्या व्याख्याया अंशद्वयम्— (१) एकं, पद्माद्याकारे वर्णानां स्थापनम् (२) द्वितीयं चित्राकृतित्वाद् आश्चर्य-जनकत्वम् । इत्युभयमपि रूपं कवीनां काव्येषु प्राप्यते । रुद्रटेन स्वकाव्यालंकारे खड्ग-मुसल-धनुः- शर-शूल-शक्ति- हल-रथपद- तुरगपद-गजपद-प्रतिलोमानुलोम-अर्धभ्रम- मुरज - सर्वतोभद्र- अनुलोमविलोम- विपर्यस्ताक्षरपाठ- महाचक्रादीनां निरूपणं कृतमस्ति । रुद्रटोऽलंकारवादिनामाचार्याणां समर्थो विवेचकः । तस्य

---

२३. रसगंगाधरः, पृ० ११–२३
२४. रसगंगाधरः, पृ० २४
२५. काव्यालंकारः, रुद्रटः, ५।१

ग्रन्थे स्वपूर्ववर्तिनां ग्रन्थानामाचार्याणां च सिद्धान्तसारः समाहित इति सहज-तयानुमातुं शक्यते ।

वेदोपनिषत्तन्त्रागमपुराणेषु[२६] बीजरूपेण स्थितं 'चित्रं' प्रत्याकर्षणभावनो-त्तरवर्तिषु साहित्यशास्त्रीयग्रन्थेषु विशिष्टां स्थितिमभजत ।

रुद्रटानन्तरं चित्रालंकाराणां स्वरूपनिरूपणं भोजराजेन सरस्वतीकण्ठाभरणे कृतम् । वर्ण-स्थान-स्वर-आकार-गति-बन्धाख्याः षट्प्रकाराश्चित्रालङ्कारस्य तत्र निरूपिताः :

वर्णस्थानस्वराकारगतिबन्धान् प्रतीह यः ।
नियमस्तद् बुधैः षोढा 'चित्र'मित्यभिधीयते ।।

सत्यपि चित्रालंकारस्यापारे विस्तारे वैभवे च तत्त्वपरीक्षका आचार्या अस्या-लोचनामकार्षुः । ध्वन्यालोककारेण सर्वतः प्रागितो दृष्टिनिपेक्षः कृतः—'एतच्च चित्रं कवीनां विशृंखलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम् ।'[२८]

मम्मटाचार्येण रुद्रटस्येव चित्रस्य लक्षणं कृतम् — 'तच्चित्रं यत्र वर्णानां खड्गाद्याकृतिहेतुता ।'[२९] अस्मात्पूर्वं यमकस्य लक्षणं विधाय तस्य भेद-प्रभेदानां चर्चाया विनिवृत्तः स 'तदेतत् काव्यान्तर्गडुभूतमिति नास्य भेदलक्षणं कृतम्' इत्युक्त्वा चित्रालंकारविषये प्राह—'कष्टं काव्यमेतत् ।'

एवमेव विश्वनाथोऽप्यूचे — 'पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।' आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः । रस्य च तथाविधश्रोत्राकाशसमवाय-विशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम् । ...... काव्यान्तर्गडुभूततया तु नेह प्रपञ्च्यते ।'[३०]

अप्पयदीक्षितेनापि 'चित्रमीमांसाया'मेवंविधैव विमतिः प्रदर्शिता —'शब्द-चित्रस्य प्रायशो नीरसत्वान्नात्यन्तं तदाद्रियन्ते कवयः, न वा तत्र विचारणीय-मतीवोपलभ्यते ......... ।'[३१]

शब्दानामेतादृशीमैन्द्रजालिकतां प्रति स्वकीयं वैमत्यं प्रदर्शयन् पण्डितराजो

---

२६. विस्तारार्थं द्रष्टव्या–पं० रामरूपपाठककृतस्य 'चित्रकाव्यकौतुकम्' ग्रन्थस्य भूमिका, पृ० २१–३०.

२७. सरस्वतीकण्ठाभरणम् २।१०९

२८. ध्वन्यालोकः, तृतीयोद्योतः कारिका ४२–४३.

२९. का० प्र० ९।१२०

३०. सा० द० १०।१५

३१. चित्रमीमांसा, पृ० ३०

जगन्नाथ एतादृशानि चित्राणि काव्यस्य पञ्चमभेदे 'अधमाधमे'ऽपि समावेष्टुं नोद्यतः–'यद्यपि यत्रार्थचमत्कृतिसामान्यशून्या शब्दचमत्कृतिस्तत्पञ्चममधमाधममपि काव्यविधासु गणयितुमुचितम्, यथैकाक्षरयमकपद्मबन्धादि तथापि रमणीयार्थप्रतिपादकशब्दतारूपकाव्यसामान्यलक्षणानाक्रान्ततया वस्तुतः काव्यत्वाभावेन महाकविभिः प्राचीनपरम्परामनुरुन्धानैस्तत्र– तत्र काव्येषु निबद्धमपि नास्माभिर्गणितम्। वस्तुस्थितेरेवानुरोध्यत्वात्।'[32]

श्रीमदाचार्यब्रह्मानन्दशुक्लशब्देषु–"वास्तविकं चात्र तत्त्वमिदम्—प्रकाण्डपाण्डित्यप्रकर्षशालिनोऽपि, शब्दरचनानिपुणस्यापि, महाकवेर्मस्तिष्कं केवलं वर्णानां पदानां वा गवेषणे, संयोजने च संलग्नं भवति — आत्मनो रसस्य प्रतिपादने च शिथिलादरं जायते। सहृदयाः पाठकाश्च रसापरिप्लुततया, क्लिष्टकल्पनाजल्पनाजल्पनप्रचुरतया च नाल्पमप्यानन्दं विन्दन्ते, प्रत्युत 'पर्वतखनने मूषिकोपलब्धि'रिति लौकिकमाभाणकं हृदि निधायैवंविधकाव्याध्ययनाद्विरता भवन्ति। काव्यं तु तदेव सुकाव्यतया मन्यते यस्य श्रवणेन पठनेनैव च सहृदयानां हृदयं रसाप्लुतं भवति। यथाचोक्तं केनाप्यभियुक्तेन :

सा कविता सा वनिता यस्याः श्रवणेन दर्शनेनापि।
कविहृदयं, विटहृदयं सरलं, तरलं च सत्वरं भवति ॥

एवंविधे शुष्ककाष्ठप्राये काव्ये रसकणिकापि नोपलब्धा भवति। रसेहया यावन्तोऽपि काव्यकुसुमरसलिप्सवो भ्रमरायमाणाः सहृदयाः काव्यमन्दिरमनुधावन्ति, रसादिदाने पिहितद्वारं च तन्मन्दिरमालोक्य कीदृशं खेदमनुभवन्तीति त एव प्रष्टव्याः।"

इयं हि वस्तुस्थितिर्या समीक्षकान् सन्तुलितदृष्टिपरान् विदधाति स्म, सैव कवीन् चित्रप्रियान् व्यधत्त। चित्रकवीनामयमादर्श आसीत् :

सत्यं वल्गितमस्ति तत्रभवतोऽशक्तस्य कस्यापि ते,
द्राक्षामम्लतरां वदन्ति कृपणाः, श्रान्ताः, परास्तोद्यमाः।
शाब्दे ब्रह्मणि साधिकारवचसां, क्लिष्टक्रमाभ्यासिनां,
बन्धाली विजरीहरीति सुभगा विद्येश्वराणां मुदे ॥

'शाब्दे ब्रह्मणि साधिकारवचसाम्' एषामुद्घोष आसीत् :

'सर्वो धातुगणः क्रियादिविपुलो जिह्वाजिरे राजते,
विश्वास्तद्धितवृत्तयः प्रमुदिताः क्रीडन्ति कण्ठस्थिताः।

---

३२. रसगंगाधरः, पृ० २३–२४

कृत्संज्ञा विलसन्ति प्रत्ययघटाः स्वान्तान्तरालाम्वरे,
येषां ते विभवो भवन्ति कृतिनो बन्धोत्कटे कानने ।।[३३]

"एवंविधानां 'पण्डितकवीनां' काव्यानि तथाविधानामधिकारिणामेव कृते विरचितान्यभूवन्, न सर्वसाधारणानाम्" एवं मन्यमानाः केचनैवंविधानां काव्यानामौचित्यमपि प्रतिपादयन्ति । यद्वा-तद्वा भवतु, प्रकृतमनुसरामः ।

रत्नाकरात्पूर्वं, विशेषेण भारविमाघाभ्यामलंकाराणां भूयान् प्रयोगः कृत आसीत् । तत्पृष्ठभूमौ तस्य चित्रकाव्यरचनाकरणस्यौचित्यं वृद्धौ समायाति । अस्मिन् क्षेत्रे तस्यापारं पाण्डित्यम्, अनुपमो भाषाधिकारः, अद्भुता संयोजनाशक्तिश्च तस्यासाधारणचित्रकाव्यनिर्माणे समुल्लासे च हेतुः ।

प्राधान्येन यमकश्लेषौ विविधबन्धाश्च चित्रकाव्यस्याधारा भवन्ति । रत्नाकरस्य चित्ररचना आभिः सर्वाभिर्दृष्टिभिरप्रतिमल्ला ।

हरविजये भोजराजेन निर्दिष्टानि चित्रस्योक्तानि षड्रूपाणि, विन्दुच्युतकादीनि चान्यानि रूपाणि विशदतया प्राप्यन्ते । अत्र संक्षेपतस्तत्र विचार्यते ।

(१) वर्णचित्रम् - यत्रैकेन, द्वाभ्याम्, त्रिभिः चतुर्भिर्वा वर्णैः श्लोकरचना क्रियते तद् 'वर्णचित्रम्' । 'वर्ण' शब्देन चात्र स्वराणां पृथङ् निर्देशाद् व्यञ्जनान्येव गृह्यन्ते ।।"[३४] क्रमश उदाहरणानि - एकाक्षरं यथा :

तत्ताततितातोतिततुत्तितोतितोत्तेतितातीतितंतोत्तितुत्तिः ।
तातोऽतितोऽतुत्त तु तत्ततोऽत्ता तुतोत्ततातातिततिं तु तोत्तुम् ।।[३५]

तस्य भावस्तत्ता बलवत्ता तयाऽतिशयितस्तातः पूजनीयस्तत्ताततातः तुत्तिः=तुद् धातोः क्तिनि रूपम् । तोतिः गतिवृद्धिः । हिंसार्थकात् 'तु' धातोर्ण्यन्तात् क्तिनि रूपम्, तुत्तिश्च तोतिश्चेति द्वन्द्वः, अतिते निर्गते तुत्तितोति यस्माद् एवंभूतः - अतिततुत्तितोतिः=व्यथनपीडनरहितः । उन्दी क्लेदने धातोः क्तिनि उत्तिः 'तुद्' धातोः क्तिनि तुत्तिः, उत्तेस्तुत्तिः=उत्तितुत्तिः । आङुपसृष्टाद् 'इण्' धातोः क्तिनि एतिः, 'तायृ' धातोः क्तिनि तातिः एतिश्च तातिश्चेति एतितातीः–द्वन्द्वः । ताभ्याम् एतितातिभ्याम्, ईतेः = भयस्य तता=गता, उत्तितुति र्यस्मात्स एवंभूतः - 'एतितातीतिततोत्तितुतिः' । तोता=वृद्धिकर्ता, 'तु' धातोस्तृच् रूपम् । तातः=पूजनीयः । अतितः=अतितराम्, तद् राक्षसभावम्, अतुत्त=पीडितवान्, तुदेर्लुङ् । ततः=तदनन्तरन्, अत्ता='अद्' धातोस्तृनि रूपम्, पीडकः=राक्षसः, तनु धातोः क्तिनि ततिः, अतिशयिता

३३. चित्रकाव्यकौतुकम् - श्री स्वामीमहेश्वरनन्दसरस्वती -आशीर्वचनम्, श्लोक सं० ६, १६.
३४. सरस्वतीकण्ठा०, पृ० २६५
३५. हर० ४८।१२६

ततिः=अतिततिः, तातस्याततिः = तातातिततिः, तुदतीति तुत्, तस्य भावस्तुता=पीडा, तस्या उत्ता = तुत्तोत्ता, अधिका चासौ तातातिततिः - तुत्तोत्ततातातिततिस्ताम् तोत्तुम्=नाशयितुं, तु इयेषेति क्रियाध्याहारः।

सरलार्थस्त्वेवम् - वलस्य हेतुनात्यन्तंपूजनीयेन, व्यथारहितेन, आगमनेन पूजनेन च विगतभयेन तेन पूजनीयेन तातेन तस्य राक्षसभावस्य नितान्तं विनाशः कृतः, तदा स राक्षसः पीडादात्रीं तस्य पूजनीयतातस्य पद्धतिं नाशयितुमियेष।

द्वयक्षरं यथा -

सालांसः सलिलोल्लोललोलासिः सूल्लसोऽसंलः।
लीलालसं ललासाशौ सासौ साल्लालसासुलूः॥[३६]

प्रभञ्जनो नाम शिवगणोऽरिसेनासु चचार। असौ गणो लीलालसं कृत्वा ललास क्रीडितवान्। कीदृशः ? सालांसः=सालसमकन्धरः, सलिलोल्लोलललोलासिः = सलिलस्य उल्लोलानां तरङ्गाणामिवोल्लोलश्चञ्चलोऽसिर्यस्य सः, सूल्लसः=सुष्ठु उल्लसः=प्रमोदवान्, अंसलः=स्थामसम्पन्नः, सासः=असेन= आसेन धनुषा वा सह वर्तते यः सः सासः, असल्लालसासुलूः = असयो=दुष्टा लालसा येषा ते असल्लालसाः=शत्रवस्तेषामसून् लुनातीत्यसुलूः - एवंविधः।

यथावा :

मयमायामयायाममायी मममयो यमः।
येयो मायमियायामुममेययमयोमया॥[३७]

अमुम् वज्रबाहुं भगवान्, अमाय कृत्वा इयाय, कीदृशो भगवान्, मयमायामयायाममायी=मयदानवरस्य माया एव आमयो रोगस्तस्यायामं = विस्तारं मीनाति=नाशयति, पुनः किंविधः ? मममयः=अहंकारमयः। अमयः=अद्वितीयः। पुनः किंविधः ? अमेयमया=अपरिमिता यमनियमादयो यस्यास्तया, उमया=पार्वत्या येयः=प्राप्यो, युक्तो वा।

यद्वा :

गरागारोरगोग्रोरा गौरीरागी गुरुर्गिराम्।
गौरागुरुगिरीरागो गौररेगुंरुरोगरुक्॥[३८]

तं भगवन्तं त्रिशूलपाणिं केतुबाहो दैत्यस्य सैन्यमपश्यत्। स भगवान् कीदृश आसीत् ? गरागारोरगोग्रोरा=गरस्य=गरलस्य, आगाराणि गृहाणि, ये उरगाः =नागास्तैरुग्रमुरः=वक्षस्थलं यस्य सः। गौरीरागी=गौर्याः पार्वत्या रागी

३६. तदेव ४३।१९
३७. हर० ४३।२३०
३८. तदेव ४३।२३८

=प्रेमी। गिराम्=वाचाम् गुरुः। गौरागुरुगिरीरागो=गौरा गौरवर्णा ये अगुरवस्तरुविशेषाः, यासां तथाविधा गिरीराः=पर्वतभूमीर्गच्छतीत्येवविधः। अरेः=शत्रोः कृते। गौः=वज्र इव। गुरुरोगरुक्=भक्तानां गुरून् रोगान् रुजति विनाशयति यः स एवंविधः।

त्र्यक्षरं यथा :

सविसरासुरसारवसासवे मुरवरो विवरासुरसास्रवः।
स वरवीरवसावुरुवैरिसूरवसरे विरसं विररास सः॥[39]

स सुरवरो विष्णुस्तस्मिन्नवसरे विरसं=हृदयविदारकं, विररास=ध्वनिमकरोत्। कीदृशेऽवसरे ? सविसरासूरसारवसासवे=सविसरा प्रसरणशीला सुराणां वसा एव आसवं=पानं यत्र तस्मिन्। किञ्च वरवीरवसौ=वरैः श्रेष्ठैः, वीरैः, वसुभिश्च सह वर्तमाने (तस्मिन्नवसरे) उरुवैरिसूः=उरूणां महतां वैरिणां सूः प्रेरकः सन्। विवरासुरसास्रवः=विवरे = रसातले ये सुरास्तेषां कृतेऽपि सास्रवः=क्लेशदं (ध्वानमकरोत्)।

चतुरक्षरो यथा :

ततो ततीतितोत्तातीनाना नाना न नूनना।
स सुसांसो सुसासासिरिरारोरारिरैरिरत्॥[40]

ततस्तदनन्तरं, विद्याधरसैन्ये सुराणामन्तम् अतति = गच्छति सति सुमाली नाम दैत्यस्ततो रिपुसेनाम् ऐरिरत्=चिक्षेप। किंविधः ? ईतितोत्ता =अतिवृष्टिरनावृष्टिप्रभृतीनामीतीनां तोत्ता=विनाशकः, अतीनानाः=इनस्य स्वामिनोऽनः=रथम्, अतीत्य नानाविधम् स्थितः। नूनना=नूतनः, ना= पुरुषो न, अपितु पुराणः। पुनः किंविधः ? सुसांसः=सुष्ठ सह अंसाभ्यां स्कन्धाभ्यां वर्तते शक्तिमानित्यर्थः। असुसासासिः=असुसो=प्राणहारको आसः =शरासनमसिश्च यस्य सः। इरारोरारिः=इरा=पृथ्वी, तया रोरा=दरिद्रा अरयः यस्य सः।

हरविजये एकाक्षर-द्वयक्षर-त्र्यक्षर-चतुरक्षरादि श्लोकानां चमत्कारोऽवलोचकान् विस्मय-विस्फारित नयनान् विदधाति। अस्यां दिशि रत्नाकरेण सर्वेऽपि पूर्ववर्तिनः पश्चाद्वर्तिनश्च कवयो न्यक्कृताः। अत्रैवंविधानां श्लोकानामेका तालिका प्रदीयते :

---

३९ हर० ४६।५६
४० तदेव ४३।३

एकाक्षरः

| | | |
|---|---|---|
| | त | ४८।१२६ |

द्व्यक्षराः

| | | |
|---|---|---|
| १. | क — द | ४३।३४९ |
| २. | क — य | ४७।२८८ |
| ३. | क — र | ४३।५३ |
| ४. | क — र | ४८।१९ |
| ५. | क — ल | ४८।४४ |
| ६. | क — व | ४३।३३४ |
| ७. | ग — र | ४३।२३८ |
| ८. | ज — न | ४३।३ |
| ९. | ज — र | ४३।२७० |
| १०. | त — ज | ४८।१०७ |
| ११. | त — द | ४८।११५ |
| १२. | त — व | ४८।१३२ |
| १३. | त — म | ४८।१३६ |
| १४. | त — र | ४८।१४० |
| १५. | त — स | ४३।२५६ |
| १६. | द — न | ४८।२७ |
| १७. | द — र | ४३।२७८ |
| १८. | द — व | ४३।३१८ |
| १९. | ध — न | ४८।१०३ |
| २०. | न — क | ४८।११३ |
| २१. | न — ग | ४३।२६२ |
| २२. | न — घ | ४३।३०२ |
| २३. | न — द | ४३।२६६ |
| २४. | न — ल | ४३।१७६ |
| २५. | न — य | ४८।१३८ |
| २६. | न — र | ४८।१२१ |
| २७. | प — द | ४३।३७३ |
| २८. | प — र | ४८।१०५ |

| | | |
|---|---|---|
| २९. | प — ल | ४३।३७९ |
| ३०. | म — न | ४८।६० |
| ३१. | म — य | ४३।२५२ |
| ३२. | म — र | ४३।२४८ |
| ३३. | म — व | ४३।३२२ |
| ३४. | म — द | ४३। १९६ |
| ३५. | म — र | ४३।३५५ |
| ३६. | म — र | ४८।३५ |
| ३७. | म — य | ४३।२३० |
| ३८. | य — द | ४३।३६१ |
| ३९. | य — घ | ४३।२८४ |
| ४०. | य — न | ४८।१३८ |
| ४१. | य — स | ४३।३५९ |
| ४२. | र — च | ४८।१०९ |
| ४३. | र — घ | ४८।८८ |
| ४४. | र — न | ४३।५९ |
| ४५. | र — ल | ४३।१२० |
| ४६. | ल — त | ४३।१३६ |
| ४७. | ल — म | ४८।१११ |
| ४८. | ल — य | ४३।१४८ |
| ४९. | व — य | ४३।१८२ |
| ५०. | व — त | ४८।१३० |
| ५१. | व — घ | ४३।२३४ |
| ५२. | व — र | ४८।१३४ |
| ५३. | व — ल | ४३।३१६ |
| ५४. | श — क | ४३।४१ |
| ५५. | श — र | ४३।४५ |
| ५६. | श — व | ४३।२२० |
| ५७. | स — क | ४३।२९४ |
| ५८. | स — क | ४३।३१० |
| ५९. | स — त | ४८।१४७ |
| ६०. | स — द | ४८।१२३ |

| | | |
|---|---|---|
| ६१. | स — न | ४८।११९ |
| ६२. | स — भ | ४३।३२८ |
| ६३. | ल — य | ४३।९० |
| ६४. | स — र | ४३।२१४ |
| ६५. | स — र | ४८।१५ |
| ६६. | स — ल | ४३।१९ |
| ६७. | स — व | ४३।२९० |
| ६८. | स — श | ४३।७५ |
| ६९. | ह — न | ४८।१०१ |
| ७०. | ह — र | ४३।२७४ |

त्र्यक्षरः

| | | |
|---|---|---|
| ७१. | स — व — र | ४६।५६ |

चतुरक्षरः

| | | |
|---|---|---|
| ७२. | त — न — स — र | ४३।३ |

(२) स्थानचित्रम्—कैश्चित् स्थानविशेषैरेवोच्चार्यमाणा वर्णा यत्रोपनिबध्यन्ते तत् 'स्थानचित्रं' भवति । किरातार्जुनीय-शिशुपालवधयोरेवंविधौ श्लोकौ स्तः । दण्डिनापि निरौष्ठ्यवर्णानां प्रयोगः कृतः । रत्नाकरेऽप्यतालव्य-निरौष्ठयोरुदाहरणे प्राप्येते । तद्यथा :

(क) अतालव्यम् :

स्फुरत्कुण्डलरत्नौघतडित्किरणकर्बुरः ।
मेघनीलोऽथ संग्रामे प्रावृट्कालवद्बभौ ॥[४१]

(ख) निरौष्ठ्यम् :

निर्धौतकनकच्छायाः सच्छदा शीघ्रगामिनः*।
तार्क्ष्येण सदृशास्तस्य सायका रेजिरे रणे ॥[४२]

(३) स्वरचित्रम् :

यत्र ह्रस्वदीर्घस्वरा एवोपनिपबध्यन्ते तत्स्वरचित्रम् । यथा :

सामायामा माया मासा मारानायायाना रामा ।
यानावारारावानाया मायारामा मारायामा ॥[४३]

---

४१. हर० ४३।१९

* 'यायिनः' इति पाठ उचितः ।

४२. तदेव ४३।३४६

४३. दण्डी, काव्यादर्शः, ३।९१,

हरविजये एवंविधं चित्रं तु न प्राप्यते तत्र विविधपादेषु विभिन्नस्वराणां वर्णानां प्रयोगः समुपलभ्यते ।

### (४) आकारचित्रम् :

यत्र वर्णानां योजनया चतुःसप्ताष्टषोडशदलपद्मबन्धाकृतिः समुदेति तदाकारचित्रमिति कथ्यते । अष्टदलपद्मस्य चित्रमग्रे दत्तम् । एवं षोडशदलपद्ममस्यापि चित्रं प्राप्यते ।

### (५) गतिचित्रम् :

गतिचित्रस्य मुख्याधारो यमकम् । तत्र सहयोगी च श्लेषः । यमकस्य विषये भरतकालादेव बहु विचारो भवति । 'शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम्' इति भरतेन तल्लक्षणमुक्तम् । भरतनाट्यशास्त्रे यमकस्य दश भेदास्तेनोक्ताः ।

शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम् ।
पादान्तयमकं[४४] चैव, काञ्चीयमकमेव[४५] च ।।
समुद्गयमकं[४६] चैव, विक्रान्तयमकं[४७] तथा ।।
यमकं चक्रवालं[४८] च, संदष्टयमकं[४९] तथा ।।
पादादियमकं[५०] चैव, आम्रेडितमथापि[५१] च ।।

---

४४. चतुर्णां यत्र पादानामन्ते स्यात्सममक्षरम् ।
तद्धि पादान्तयमकं विज्ञेयं नामतो यथा ।।

४५. पादस्यादौ तथा चान्ते स्यातां यत्र समे पदे ।
तत्काञ्चीयमकं नाम विज्ञेयं सूरिभिर्यथा ।।

४६. अर्धेनैकेन यद्वृत्तं सर्वमेव समाप्यते ।
समुदगयमकं नाम तज्ज्ञेयं पण्डितैर्यथा ।।

४७ एकैकं पादमुत्क्षिप्य द्वौ पादौ सदृशौ यदा ।
विक्रान्तयमकं नाम तज्ज्ञेयं नामतो यथा ।।

४८. पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः ।
चक्रवच्चक्रवालं तद् विज्ञेयं नामतो यथा ।।

४९. आदौ यत्र पादौ तु भवेतामक्षरैः समौ ।
सन्दष्टयमकं नाम विज्ञेयं तद्बुधैर्यथा ।।

५०. आदौ पादस्य यत्र स्यात् समावेशः समाक्षरः ।
पादादियमकं नाम तद्विज्ञेयं बुधैर्यथा ।।

५१, पादस्यान्त्यं पदं यत्र द्विर्द्विरेकमिहोच्यते ।
पादान्ताम्रेडितं नाम विज्ञेयं निपुणैर्यथा ।।

चतुर्व्यवसितं[५२] चैव, मालायमकमेव[५३] च ।
एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम् ।।

भामहेन स्वकाव्यालंकारे यमकस्य– आदि– मध्यान्तपादाभ्यास– आवलि– समस्तपाद– रूपेण पञ्चभेदाः प्रतिपादिताः, भरतोक्तानां च यमकभेदानामत्रैवान्तर्भावः कृत ।

दण्डिना तु यमकस्य भूयान् प्रपञ्चो निरूपितः । अग्निपुराणानुसारम्'अव्यपेत' – 'व्यपेत'–भेदानामपि तत्र निरूपणं कृतम् । यत्रावृत्ता वर्णाः समीपस्था भवन्ति, तत्र 'अव्यपेतो' यमकः, यत्र च दूरस्था तत्र 'व्यपेतः' । यमक–विषये स एवमूचे :

अव्यपेतव्यपेतात्मा व्यावृत्तिर्वर्णसंहतेः ।
यमकं तच्च पादानामादिमध्यान्तगोचरम् ।।
एकद्वित्रिचतुष्पाद – यमकानां विकल्पनाः ।
आदिमध्यान्त–मध्यान्त – मध्याद्याद्यन्तसर्वतः ।।
अत्यन्तबहवस्तेषां भेदाः सम्भेदयोनयः ।
सुकरा दुष्कराश्चैव दर्श्यन्ते तेऽत्र केचन ।।[५४]

वामनेन शृंखला – परिवर्तक – चूर्णादिभिर्भेदैर्यमकं निरूपितम् । रुद्रटेनापि बहुधा व्याख्यातोऽयमलंकारस्तथाप्येकादशभेदा मुख्याः । भोजेन सरस्वतीकण्ठाभरणे आदिमध्यान्त्यवर्णानामावृत्याव्यपेतव्यपेताधारेऽस्य बहुविधं विवेचनं कृतमति ।

रुद्रटस्य मार्गमनुसरता मम्मटेन यमकस्यैकादश प्रमुखा भेदा निरूपिताः । ते च पादावृत्या, पादभागावृत्या च सम्भवन्ति — 'पादतद्भागवृत्ति तद्यात्यनेकताम् ।' प्रथमभागस्य द्वितीय-तृतीय-चतुर्थचरणेष्वावृत्तित्वाद् भेदत्रयम् । प्रथमपादस्य द्वितीयपादे आवृत्तत्वाद् (१) 'मुख' – संज्ञकम्, तृतीयपादे आवृत्तत्वाद् (२) 'सन्दंश' — संज्ञकम्, चतुर्थपादे आवृत्तत्वाद् (३) 'आवृत्ति'-नामकं यमकं भवति । द्वितीय पादस्य तृतीय –चतुर्थयोर्भेदद्वयम् । द्वितीयस्य तृतीये आवृत्तौ (४) 'गर्भाख्यं' चतुर्थे चावृत्तौ (५) 'सन्दष्ट' – नामकम् ।

---

५२. सर्वे पादाः समा यत्र भवन्ति नियताक्षराः ।
चतुर्व्यवसितं नाम विज्ञेय तद्बुधैर्यथा ।।

५३. नानारूपैः स्वरैर्युक्तं यत्रैकं व्यञ्जनं भवेत् ।
तन्मालायमकं नाम विज्ञेयं यद्बुधैर्यथा ।। (भरत० ना० शा०, १६)

५४. दण्डी; काव्यादर्शः ३/१–३.

तृतीयपादस्य चतुर्थे आवृत्तौ (६)'पुच्छ' नामक एको भेदः। प्रथमस्यावशिष्टेषु त्रिष्वपि भागेषु भ्रमणात् (७) 'पंक्ति' -- नामको भेदः। प्रथमपादस्य द्वितीये, तृतीयस्य च चतुर्थे आवृत्तत्वाद् (८) 'युग्मक' -- नामको भेदः। प्रथमस्य चतुर्थे, द्वितीये चावृत्तेरेको (९) 'परिवृत्ति' नामको भेदः। इत्थं पादावृत्या नव भेदा भवन्ति। श्लोकार्धस्यावृत्या एकः श्लोकावृत्या चैक इति द्वौ भेदौ मिलित्वा एकादश भेदा यमकस्य भवन्ति।

श्लोकवृत्तिरूपं भेदं विहाय, पादानां भागद्वय-विभाजने विंशतिभेदाः भागत्रयविभाजने त्रिंशत्, भागचतुष्टयविभाजने च चत्वारिंशद् भेदाः सम्भवन्ति। तथाच प्रथमपादादिगतान्त्यार्धादिभागस्य द्वितीयपादादिगते आद्यार्धादिभागे विभागकरणादाद्यन्त्यमध्यादिभेदाच्च प्रभूतभेदता।[५५]

हरविजये गतिचित्रापादकस्य यमकस्य भूयान् प्रपञ्चोऽवलोक्यते। विशेषतः ५, ४३, ४६, ४८ सर्गेषु। तृतीयसर्गस्य यमकं चित्रवर्त्मनि नैवागच्छति। रत्नाकरात्पूर्वं यमकस्योपरि महान् विचारोऽभूत्, तस्य भूयान् प्रभावस्तत्काव्ये वर्तते। तेन स्वपूर्ववर्तिनामाचार्याणामनुसारं स्वश्लोकान्तेषु यत्र-तत्र 'आवलि'-प्रभृतीनां यमकभेदानामुल्लेखः कृतोऽस्ति। स 'सन्दष्ट'-यमकस्य कुशलः प्रयोक्ता। शतश उदाहरणान्यस्य भेदस्य तत्र प्राप्यन्ते। पादभागवृत्ता यमकस्य भूयान्स एव भेदास्तत्रोपलभ्यन्ते। दिङ्मात्रमुदाह्रियते :

(१) सन्दंश यथा :

केदारयन्तं समदन्तमालमरातिलोकं शरलांगलानाम्।
के दारयन्तं समदं तमालनीलं हरिं जेतुमलंबभूवुः ॥[५६]

---

५५. ········· प्रथमो द्वितीयादौ, तृतीयश्चतुर्थे, प्रथमस्त्रिष्वपीति सप्त। प्रथमो द्वितीये, तृतीयश्चतुर्थे, द्वियीयस्तृतीये इति द्वे। तदेवं पादजं नवभेदम्। अर्धावृत्तिः श्लोकावृत्तिश्चेति द्वे।

द्विधा विभक्तिपादे प्रथमादिपादादिभागः पूर्ववत्, द्वितीयादिपादादिभागेषु अन्तभागोऽन्तभागेष्विति विंशतिभेदाः। श्लोकान्तरे हि नासौ भागावृत्ति त्रिखण्डे त्रिंशत्, चतुःखण्डे चत्वारिंशत्।

प्रथमपादादिगतान्त्यार्धादिभागो द्वितीय-पादादिगते आद्यार्धादिभागे यम्यते इत्याद्यन्वर्थतानुसरणेनानेकभेदम् अन्तादिकम् आद्यन्तिकम् तत्समुच्चयः मध्यादिकम् आदिमध्यम् अन्तमध्यम् मध्यान्तिकं तेषां समुच्चयः। तया तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वनियते च स्थाने आवृत्तिरिति प्रभूततमभेदम् ·········। (का० प्र०, नवमोल्लासः)

५६. हर० ४६।५६

(२) पुच्छः :

अवाप्य तैः कर्कशमार्गलाभं शमार्गलाभंगकृतिप्रगल्भैः ।
निन्ये न नूनं सरसातलाभै रसातलाभैकपरायणत्वम् ।।[५७]

(३) सन्दष्टयमकम् :

आभात्यसौ गजतया समरेष्ववाप्य, सारं भयानकतमेषु सदानयागः ।
श्च्योतन्मदार्द्रकटया कटकान्तरेषु, सारम्भया न कतमेषु सदानयागः ।।[५८]

यथावा :

अभ्येत्य काननमिदं हरति द्विरेफः सज्जातपक्षतितया न तमांसि चेतः ।
शक्तो निकुञ्जगहनेष्वभिहर्तुं मर्कः सज्जातपक्षतितया न तमांसि चेतः ।।[५९]

अस्य भूयांस्युदाहरणानि प्राप्यन्ते ।[६०]

(४) पंक्तिर्यथा :

सदानवानामवधीरितानाम्,
सदानवानामवधीरितानाम् ।
सदानवानामवधीरितानाम्,
सदानवानामवधीरितानाम् ।।[६१]

भाग-वृत्या यथा :

स मानयामास दृशा समानया समानया संयति भासमानया ।
समानयार्द्रः सुतया समानया, समानयातो विरहं समानया ।।[६२]

यथावा :

एष ससारससारस्तुलितश्रीः पीतवाससारस सारः ।
अनलससारससारससारः प्रकर्षमद्भिः परं ससार ससारः ।।[६३]

---

५७ तदेव ४८।७

५८. तदेव ५।६

५९, तदेव ५।१२

६०. तदेव ३।९१, ९४, ५।८, १६, १८, १८, २४, ३०, ३६, ३६, ४२, ४८, ५०, ५३ ५४, ६०, ६२, ६४, ६६, ६८, ७२, ७४, ७६, ७८, ८०, ८२, ८४, ८६, ८८, ९०, ९४, ९६, ९७, ९८, ९९, १००, १०१–१५१, (११०, १२०, १३४, १३५, १३७, १४०, १४१, १४२, १४८ श्लोकान् विहाय), एवं ४३, ४६, ४८ सर्गेषु बहुत्र ।

६१. तदेव १८।१२८.

६२. तदेव ४६।३७

६३. तदेव ५।२

(५) समुद्गयमकम् :

अविस्रसारे समदक्षयज्ञनार्मशिजपादानघनाकराभे ।
अविस्रसारे समदक्षयज्ञनार्मशिजपादानघनाकराभे ।।[६४]

एवमन्यत्र ।[६५]

(६) गर्भयमकम् :

रणभुवमधुना जयाशंसया दोर्द्रुमालम्बनो दारयन् विद्विषोऽत्यूर्जिता ।
ननु विकशलिता पदोसन्नया संगरक्षोभया नुत्तमोहेति भीरूढया ।।
ननु विकशलितापदोसन्नया संगरक्षोभया नुत्तमोहेति भीरूढया ।
किमिव बत भियेति भेरीरवैरभ्यधायीव कोणाहतिप्रस्तुतैर्युद्भुवा ।।[६६]

(७) महायमकम् :

सवपुषमुत्करहाय्कमक्षततिनिशासनागतालीनवनम् ।
समदनवशकलितातनुरसधवनागोत्करं जराजितसत्त्वम् ।।
सवपुषमुत्करहाटकमक्षततिनिशासनागतालीसवनम् ।
समदनवशकलितातनुरसधवनागोत्करंजराजितसत्वम् ।।[६७]

अवशिष्टानां (८) मुख (९) युग्मक (१०) आवृत्ति (११) परिवृत्तीनाम् - पुच्छा सन्दंशयुतान्येकत्रोदाराणानि भागावृत्या निम्नलिखितेषु श्लोकेषु प्राप्तुं शक्यन्ते। वस्तुत एषु भेदेषु बहूनामेकस्मिन् श्लोके सद्भावः सम्भवः । तद्यथा :

अस्य क्षितिर्नूतनकानना सा न काननासादितभंगुग्श्रीः ।
हरत्यहो वन्धुरतालताली रतालतालीभृति यत्र भृंगाः ।।[६८]

यथावा :

विगलितदानवसार्थं, भयशुष्ककरीन्द्रकरटदानवसार्थम् ।
चक्रेऽन्धितान्धकबलं, तया समीकं यमस्य बाहुकवलम् ।।[६९]

किञ्च :

नादिना दीननोदेन निदानोनेन नादिना ।
नादि नादौ न नुनुदे, नूनं नानौदिनादिना ।।[७०]

---

६४. तदेव ५।१३४

६५. तदेव ४३।३७, १५५, ४८।४१,४८,९७.

६६. तदेव ४६।७४

६७. तदेव ५।१४१, १४२

६८. तदेव ५।४

६९. तदेव ४६।७८

७०. तदेव १३।२६६

आवलिः : प्रतिवर्णावृत्तिः, प्रतिशब्दावृत्तिर्वा । प्रत्येकाक्षरवृत्तिर्यथा :

(क) शिशिररससरा राविविमिर्मंरारादममततरा राजिजित्सत्सरारा ।
ससववसुसुरारामम‌ध्वध्वरारा ततललददरारासससत्वत्वरारा ॥[७१]

(ख) प्रतिशब्दावृत्तिर्यथा :

समानानि समानानि, स संयति स संयति ।
सदाहानि सदाहानि, पलानि चपलानि च ॥[७२]

वर्णानामनुलोमप्रतिलोमपठनेन चित्रता । सापि च यमकेऽवाप्यते । तद्यथा :

राजति तटीयमभिहतदानवरासातिपातिसारावनदा ।
गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥[७३]

अत्र 'दानवरासातिपातिसारावनदा' इति पादस्यानुलोमप्रतिलोमाभ्यां पाठेन पादावृत्तियमकम् ।

एवं यमकस्य भेदप्रभेदा अस्मिन् काव्येऽतिमात्रायां प्राप्यन्ते ।

यमकातिरिक्तमपि वर्णानामनुलोमप्रतिलोमेन श्लोका निष्पद्यन्ते, तदपि महच्चित्रजनकम् । एतादृशी रचना — अर्धपादगता, पादगता, द्विपादगता, चतुष्पादगता वा भवति । दिङ्मात्रमुदाह्रियते :

अर्धपादगता :

अत्र स्निग्धं नलदविदलनप्राप्ताभिख्येऽतिबलफलवति ।
अक्ष्णां चक्रे नवनलिनवनच्छायां धत्ते विभुरमरभुवि ॥[७४]

पादगता :

व्याधश्रेणी नागकुम्भाग्रमङ्गस्थामासक्तामुग्धमुक्तासमास्था ।
आभात्यत्र स्त्रीषु चाटुप्रपञ्चे, कालीव्यक्तारम्भरक्ताव्यलीका ॥[७५]

यथावा :

इहङ्गाना का प्रमदं प्रियस्य, नाधादसंरम्भरसं दधाना ।
चेतःस्थिता कल्पलतानिकुंजे, हेलामतारब्धरतामलाहे ॥[७६]

---

७१. तदेव ५।१३५
७२. तदेव १३।३७५
७३. तदेव ५।१३७
७४. तदेव ५।१०
७५. तदेव ५।२८
७६. तदेव ५।४५

चतुर्षु पदेष्वपीदं चित्रमुपलभ्यते :

वारिशालिनासवातिवासनालिशारिवा,
सारभाविनीलिमाभ्रमालिनी विभारसा ।
सालतालकाननामुना न कालतालसा,
राजिता श्रियापरा दुरापया श्रिताजिरा ।।[७७]

एवमन्यत्रापि ।[७८]

(क) अन्यदपि चित्रमनेकरूपेष्ववस्थितम् । क्वचिदेकश्लोकस्य प्रतिलोम्येनान्यः श्लोक उदेति । तद्यथा :

भासितानुतिमांत्रासु सुन्यासैकरता सुता ।
नांगनाशर संस्थासु सा याता कृत्तिवाससा ।

अस्मादयं श्लोकः प्रातिलोम्येन प्रादुर्भवति :

सासवात्ति कृतायासा सुस्थासरशनांगना ।
तासु तारकसैन्यासु सुत्रामाति नुतासिभा ।।[७८अ]

अत्रार्थो भिन्नः । एवमन्यत्रापि ।[७९]

(ख) क्वचित् प्रातिलोम्येन स एवार्थो भवति । यथा :

हरिणैरिह साकं सा सायासा विगता गवि ।
विभुना भुवि सारासा तुंगा तु निहताहनि ।।[८०]

(ग) क्वचिद् यथेष्टं मात्रापहारदानाभ्यामेकस्मात् श्लोकाच्छ्लोकान्तरं प्रादुर्भवति । यथा :

तदा क्षणेन वर्यस्य समिदः सहतः पदम् ।
रेजेऽस्ततनयः साक्षान्नयवेदे क्षतामतिः ।।

अस्य श्लोकस्य शब्देषु मात्रापहारदानाभ्यामयं श्लोको भवति :

तदेक्षणेन वर्यस्य सामदः सहृतिः पदम् ।
रेजे स्तुतिनयः साक्षान्नयवादोक्षितामृतः ।।[८१]

---

७७. तदेव ५।१४०

७८. तदेव ५।६२, ११०, १२०, १४८ । ४३।२३, २५, ६७, १३४, १८४, २८२ । ४६।७६।४४८। १४२ प्रभृतयः श्लोकाः ।

७८अ, तदेव ४३।८५–८६

७९. तदेव ८४।५५–५६

८०. तदेव ४३।२१८

८१. तदेव ४।२२७, २८

(घ) क्वचित्कश्चित्पादः पादार्धो वा पूर्वार्धे गूढो भवति । यथा :

या हतारिगणाजस्रमवदाता न सुन्दरान् ।
यातागजमदानन्दहरिणास्रवतासुरान् ॥[८२]

अत्रोत्तरार्धं पूर्वार्धे गूढम् । एकैकमक्षरं पूर्वार्धं परित्यज्योत्तरार्धस्य पूर्वभाग-स्तदनु परित्यक्तान्यक्षराणि संयज्योत्तरार्धस्योत्तरभागः प्रकल्प्यते ।

(ङ) क्वचिदेकान्तरितद्वयक्षरः श्लोकोऽप्यवलोक्यते । यथा :

तारोत्तारतरी तीरतरुतारीतिरुत्तरा ।
तीरितारान्निरातोरु तरतारातिरुत्तिरः ॥[८३]

संक्षेपेण समप्रतिमानुलोमपाद –समप्रतिलोमानुलोमार्धपाद – प्रतिलोम-विलोमपाद – युक्पादप्रतिलोम-प्रतिलोमानुलोमचतुष्पाद-तवर्गवन्ध[८४] -सप्तव्य-ञ्जनवन्धा[८५]दीनां विविधानां गति-चित्राणाम् अक्षरच्युतक[८६]-बिन्दुच्युतक[८७]-मात्रा-च्युतक[८८]भाषासमावेशा[८९]दीनामन्येषां चित्राणां च विलासेनेदं महाकाव्यं विद्यो-ततेतराम् ।

(६)बन्धचित्रम्–यत्र वर्णानां संयोजनैवं क्रियते येन खड्गाद्याकृतयः प्रादुर्भवन्ति तद् 'बन्धचित्र'मभिधीयते । हरविजये, समुपलब्धेषु महाकाव्येषु, सर्वतोऽधिकं बन्धचित्राणि सन्ति तासामेका तालिकाऽधो दीयते :

| | | |
|---|---|---|
| १. | अर्धभ्रमकम् | ४३।११३ |
| २. | आवलिबन्धः | ५।१३५, ४३।३७५ |
| ३. | काञ्चीबन्धः | ४३।१३८ |
| ४. | काञ्चीगोमूत्रिकामुरजजालबन्धाः | ४३।३७ |
| ५. | खड्गबन्धः | ४३।१३८ |

८२. तदेव ४३।७१
८३. तदेव ४३।१०७
८४. तदेव ४८।८२
८५. तदेव ४८।१३
८६. तदेव ४८।३३
८७. तदेव ४८।७१
८८. तदेव ४८।७१
८९. तदेव ४।३५, ४८।५८

| | | |
|---|---|---|
| ६. | गोमूत्रिकाबन्धः | ४३।६३ |
| ७. | गोमूत्रिकामुरजस्वस्तिकबन्धाः | ४८।११५ |
| ८. | चतुरंगाश्वपदपूरणश्लोकः | ४३।१४६ |
| ९. | तूणीबन्धः | ४३।२७६ |
| १०. | प्रस्तारश्लोकः | ४३।१४५ |
| ११. | मुरजबन्धः | ४३।१२६ |
| १२. | मुसलबन्धः | ४३।१५६ |
| १३. | शक्तिबन्धः | ४३।१५२ |
| १४. | शरबन्धः | ४३।३० |
| १५. | शूलबन्धः | ४३।२३२ |
| १६. | षोडशदलपद्मबन्धः | ४६।८० |
| १७. | सप्तदशाक्षरपद्मबन्धः | ४३।६१ |
| १८. | सर्वतोभद्रः | ४३।१०२ |

एतेषु क्वचित्वनेके बन्धा युगपदेवोपनिबद्धाः। तद्यथा :

स व्यधादक्षताशस्ता सन्नयोधामहासिना।
सव्यधा दक्षताशस्ताः सन्नयोधा महासिना॥[९०]

अस्मिन् श्लोके समुद्गयमक–काञ्ची–गोमूत्रिका–मुरज–जालबन्धाः सहैव विनिवेशिताः।

यथावा

सा रराससरारासा सारारासससरारसा।
साररा ससरारासासारा राससरा रसा॥[९१]

अत्र समुद्गयमक–प्रतिलोमानुलोम–गोमूत्रिक–मुरज–स्वस्तिक–शक्त्यादि-बन्धाः सममेव समुपनद्धाः।

केषाञ्चिद् बन्धानां स्वरूपमद्यत्वे समुपलब्धानां लक्षणग्रन्थानामनुसार न प्राप्यते, प्रतीयते यत्तानि तदानीं प्रचलितं कञ्चिद् ग्रन्थमनुसरन्ति। यानि सम्प्रति प्रचलितशास्त्रानुसारीणि सन्ति, तेषां चित्राण्यग्रतः स्वरूपविवेचनपुरस्सरं दीयन्ते :

---

९०. द्रष्ट० ४३। ३७
९१ तदेव ४३।१५५.

# सर्वतोभद्रम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | रा | भा | वि | वि | भा | रा | सा |
| रा | जि | ता | ग | ग | ता | जि | रा |
| भा | ता | जि | ते | ते | जि | ता | भा |
| वि | ग | ते | न | न | ते | ग | वि |
| वि | ग | ते | न | न | ते | ग | वि |
| भा | ता | जि | ते | ते | जि | ता | भा |
| रा | जि | ता | ग | ग | ता | जि | रा |
| सा | रा | भा | वि | वि | भा | रा | सा |

**साराभाविविभारासा राजितागगताजिरा।**
**भाताजिते ते जिताभा विगतेन नते गवि ।। (हर०४३।१०२)**

**लक्षणम् :**

'तदिष्टं सर्वतोभद्रं भ्रमणं यदि सर्वतः।' (काव्यादर्शः, ३।८०)

अस्मिन् बन्धे पूर्वं श्लोकस्य चत्वारः पादा आनुपूर्विकया लिख्यन्ते, तदनन्तरं ४, ३, २, १ इति विपरीतक्रमेण। पुनश्च सर्वतः श्लोको वाच्यते। एवं चतुष्षष्टिप्रकोष्ठेष्वस्य बन्धो भवति।

# अर्द्धभ्रमकम्

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| अ | द | भ्र | भी | ति | दे | नि | न्द्ये |
| द | क्ष | मा | न | च्छ | सा | दि | नि |
| भ्र | मा | ग | त | ग | मा | सा | दे |
| भी | म | त | त्व | म | ग | च्छ | ति |
| ति | च्छ | ग | म | त्व | त | म | भी |
| दे | सा | मा | ग | त | ग | मा | भ्र |
| नि | दि | सा | च्छ | न | मा | क्ष | द |
| न्द्ये | नि | दे | ति | भी | भ्र | द | अ |

अदभ्रमीतिदेऽनिन्द्ये दक्षमानच्छसादिनि ।
भ्रमागतगमासादे भीमतत्त्वमगच्छति ।। (हर०४३।११३)

लक्षणम् :

'प्राहुरर्धभ्रमं नाम श्लोकार्धभ्रमणं यदि ।' (काव्यादर्शः,३।८०)

अस्य सन्निवेशप्रकारोऽयम् : प्रथमं चतुष्षष्टिसंख्यानि कोष्ठानि अष्टपंक्तियोग्यानि लेख्यानि। पश्चात् प्रथमपंक्तिचतुष्टये क्रमेण चतुर्णामपि पदानां वर्णा विनिवेश्याः, तत उत्तरमधोलिखितपङ्क्तिचतुष्टये चतुर्थतृतीयद्वितीयपादा विपरीतक्रमेण लेख्याः । एवंस्थितावर्धभ्रमेऽधः पङ्क्तिचतुष्टये परावृत्त्या, सर्वतोभद्रे च परावृत्त्या समावृत्या वा चतुर्थादिपादविन्यास इति विशेषः ।

(काव्यादर्श, श्रीनृसिंहदेवटीका, पृ० २५८-५९)

# गोमूत्रिकाबन्धः

**वादिता तरसा भीमा भेरीणां सकला ततिः ।**
**सादिता तत्र सायामा सारीणां सकला गतिः ।।**
(हर० ४३।६३)

लक्षणम् :

गतिरुच्चावचा यत्र मार्गे मूत्रस्य गोरिव ।
गोमूत्रिकेति तत्प्राहुर्दुष्करं चित्रवेदिनः ।।
(सरस्वतीकण्ठाभरणम्, २।११५)

अस्मिन् बन्धे पूर्वार्धोत्तरार्धयोरेकैकमक्षरं परित्यज्य पठ्यते । गोमूत्रस्याकृतिहेतुत्वाद् गोमूत्रिकाबन्ध एष उच्यते ।

यथावा :

**स व्यधादक्षताशस्ताः सन्नयो धामहासिना ।**
**सव्यधा दक्षताशस्ताः सन्नयोधा महासिना ।।**
(हर० ४३।३७)

| | |
|---|---|
| सा | वा |
| दि | दि |
| ता | ता |
| त | त |
| त्र | र |
| सा | सा |
| या | भी |
| मा | मा |
| सा | भे |
| री | री |
| णां | णां |
| स | स |
| क | क |
| ला | ला |
| ग | त |
| तिः | तिः |

# मुरजबन्धः

नुत्तया सेनया तत्र यातया नुत्तया तनुः ।
नुत्तयात्तरयान्विष्टपातया सेनयेक्षिता ।। (हर०४३।१२६)



पङ्क्तिचतुष्टयेन लिखितस्याधः क्रमेण यथाक्रमं प्रथम-द्वितीय-तृतीय-चतुर्थानूर्ध्वक्रमेण पञ्चम-षष्ठ-सप्तमाष्टान् वर्णान् गृहीत्वा प्रथमः पादः । द्वितीयात् प्रथमं, प्रथमाद् द्वितीयतृतीयौ, द्वितीयाच्चतुर्थंपञ्चमौ , प्रथमात्, षष्ठसप्तमौ द्वितीयादष्टमं गृहीत्वा द्वितीयःपादः ।तृतीयात् प्रथमं, तुर्याद्द्वितीयतृतीयौ, तृतीयात्तुर्यपञ्चमौ, तुर्यात् षष्ठसप्तमौ, तृतीयादष्टमं गृहीत्वा तृतीयः पादः । पादचतुष्टयस्योर्ध्वक्रमेण प्रथम-द्वितीय-तृतीय-चतुर्थाः नधःक्रमेण पञ्चम-षष्ठ-सप्तमाष्टान् गृहीत्वा चतुर्थः पादः । इत्येवं मुरजसिद्धिः ।
(सा०द० लक्ष्मीटीका, पृ० ६४६)

तथा च लक्षणम् :

अत्र पादचतुष्केऽपि क्रमशः परिलेखिते ।
श्लोकपादक्रमेण स्याद् रेखासु मुरजत्रयी ।।

(सरस्वतीकण्ठाभरणम्)

# पद्मबन्धः

सारतारहिताध्यासा सा ध्याता क्षतसाध्वसा ।
साध्वसाधर्म्यधीरा सा, साराधीतिरता रसा ।।

(हर० ४३।६१)

अस्मिन् सप्तदशाक्षरे पद्मबन्धे केन्द्रे प्रारम्भिको वर्णः स्थाप्यते, दक्षिण-हस्तेन वर्वत्रयस्य परावृत्तिवर्भति । प्रतिदलपूर्तिः केन्द्रीयाक्षर एव भवति । पद्मबन्धस्य बहवो भेदा भवन्ति, तेष्वयमन्यतमः ।



# शूलबन्धः




उदाहरणम् :

तत्र सुर्मण्डलीबन्धै-
स्तस्मिंश्चरति तद्भटाः ।
ते कृपापाकृते ध्यानि-
निध्याते निर्दितार्दिनि ॥
(हर० ४३।२३२)

लक्षणम् :

मध्येऽधस्ताद् द्वे पदे
ह्यनुलोमविलोमतः ।
उपर्यधो मध्यतोऽपि
चोर्ध्वान्मध्ये त्रिशूलके ॥
(चित्रबन्धकाव्यम्, पृ० ३७)

त्रिशूलबन्धे श्लोकस्य चरणद्वयं मूलान्मध्यं यावल्लिख्यते, उत्तरार्धस्याद्यक्षरमुपरि केन्द्रेऽवशिष्टांशश्चानुलोमप्रतिलोमेन यथा पठ्यते, तथा स्थाप्यते ।

# मुसलबन्धः




उदाहरणम् :

स्थिराजिरप्यस्थिणराजिसाराप्रतिमया रुचा ।
चामुण्डा बद्धवैरा सा जितारातिर्मृधे बभौ ॥
(हर० ४३।१५६)

लक्षणम् :

ऊर्ध्वादधस्ततश्चोर्ध्वे ह्यनुलोमविलोमतः ।
मध्यवर्णत्रयं ज्ञेयं बन्धेऽत्र मुसलाभिधे ॥
(चित्रबन्धकाव्यम्, पृ० ३५)

अस्मिन् बन्धे उपरिष्टादक्षराणि निधीयन्ते, मध्ये चाचानुलोमविलोमतः पठ्यमानं वर्णत्रयं स्थाप्यते । यथा च चित्रे प्रदर्शितम् ।

# शक्तिबन्धः




ससार पूतना नाना
धुनानारिससाहसा ।
सतर्जनगुणास्फोट-
धीरयोधगणासुरी ॥
(हर० ४३।१५२)

लक्षणम् :

मध्यतोऽधस्ततो मध्ये
ततश्चोपरितो भ्रमन् ।
पुनर्मध्ये समाप्तः स्याद्
बन्धे शक्तिसंज्ञके ॥
(चित्रबन्धकाव्यम्, पृ० २८)

बन्धेऽस्मिन् बन्धस्य मध्यादक्षर-सन्निवेशं कुर्यात्, ततश्चाधस्तादुन्मुखतां व्रजेत्, तत्र भ्रमणं कृत्वा पुनर्मध्य एव विश्रान्तिं गृह्णीयात् । परमत्र लक्ष्ये उपरिभाग एव विश्रान्तिर्भवतीति विशेषः ।

# काञ्चीबन्धः




उदाहरणम् :

शातटङ्काः प्रमादेन हीयमाना रणाजिरे।
चापटङ्कारनादेन साभिमाना रराजिरे ।।
(हर० ४३।१३८)

काञ्चीवत्स्थापनादयं 'काञ्चीबन्धः'। अत्रोभयपार्श्वयोः शंकुलाखण्डवत् 'जिरे' 'जिरे' इत्यस्यैव वैशिष्ट्यम् ।

(ग) अर्थालंकाराः – येऽलंकाराः शब्दाश्रितास्ते शब्दालङ्कारा ये चार्थाश्रितास्तेऽर्थालंकाराः। शब्दपरिवृत्त्यसहत्वं शब्दालंकाराणां, शब्दपरिवृत्तिसहत्वं चार्थालङ्कारणां मूलम्। अर्थालंकाराः सादृश्यमूलकाः, आरोपमूलकाः, अध्यवसायमूलकाः, गम्यौपम्याश्रिताः, विरोधमूलकाः, शृंखलाबन्धनमूलकाः, तर्कन्यायमूलकाः। वाक्यन्यायमूलकाः, लोकन्यायमूलकाः, गूढार्थप्रतीतिमूलकादिभिभेदैः साहित्याचार्यैर्विभाजिताः।

हरविजये प्रभूतमात्रायामर्थालंकाराणां चमत्कारः सहृदयाँश्चमत्करोति। अत्र केषाचिन्नामान्युदाहरणानि च दीयन्ते। अलङ्काराणां लक्षणानि तु प्रसिद्धतया, कलेवरवृद्धिभिया च न दत्तानि।

(१) उपमा – अनेकविधानां, विशेषतः श्लिष्टोपमानां शास्त्रीयानामुपमानां च 'हरविजयम्' भाण्डारः। दिङ्मात्रमुदाह्रियते :

सन्मात्राच्युतकं तस्य सम्प्रहारमहीतलम्।
स्पष्टान्धकश्रियं बिभ्रत्क्रीडाकाव्यमिवाबभौ॥[६२]

यद्वा :

जह्रुर्मनांसि सरलोन्नतचारुनासा वंशाःपयोधरमृङ्गभृतस्तरुण्यः।
दोलायमानमणिकुण्डलकांस्यतालाः सङ्गीतभूमय इव स्मरलासकस्य॥[६३]

यद्वा :

आपीतपाटलसितेतरकुन्दगौरदेहत्विषो ललितनर्तनविभ्रमस्थाः।
भ्रेम्रुर्गणाधिपतयोऽभिनयक्रियासु, मूर्ता रसा इव परिष्कृतरङ्गपीठाः॥[६४]

एवं शतशः स्थानेष्वन्यत्र।[६५]

(२) रूपकम् :

कमलमुकुलपंजरोदरेषु प्रतहतिरोषविधूतकेसराणाम्।
प्रतिदिशमुदजृम्भतां प्रणादो मधुकरकेसरिणां विनिद्रितानाम्॥[६६]

---

६२. हर० ४३।२२१

६३. तदेव २३।४४

६४. तदेव २।२२

६५. द्रष्टव्याः-हर० १७।२६, १८।१६, २४, २६, ३७, ४४, ७६, १०१, १०८, २३।२०, २६, ४४, ३१।३२, ३७। ३२।१, ५, ७, ६, ११, १५।१६, १८, १६, २०, २२, २३, २५, २६, २७, ४८, ५६, ७३, ७४, ८६, ६०, ४१.८। ५०।३१ प्रभृतयः श्लोकाः।

६६. तदेव २८।३८

तथा चान्यत्र ।[९७]

(३) अनन्वयः :

दैत्या दैत्या इवोद्दामदोर्दण्डबलशालिनः ।
सुराः सुरा इवान्योन्यं व्यतिजघ्नुर्महाहवे ॥[९८]

(४) उत्प्रेक्षा :

अस्तावलम्बिरविबिम्बतयोदयाद्रिचूडोन्मिषत्सकलचन्द्रतया च सायम् ।
सन्ध्याप्रनृत्तहरवाद्यगृहीतकांस्यतालद्वयेव समलक्ष्यत नाकलक्ष्मीः ॥[९९]

एवमन्यत्र शतश उत्कृष्टेषूदाहरणेषु ।[१००]

---

९७. तदेव २।३१ ८।४७, ४८ । १०।३ । १३।६० । १८।५५, ५८, ९७, ११३ । १९।१, ११, ५४ । २०।१, २३, २८ । २१।२१ । २३।५, १९ । २७।१२, १८, १०२ । २८।१२, ५७, ७४, ९७ । २९।२४ । ३०।६३ । ३२।५३, १३, ३६। ४०। १६, ४२।२४, १५, ३४, ३६ । ४४।८, २१, २४, ३५, ४४, ४८, ५२। ४९।५५ प्रभृतयः श्लोकाः ।

९८. हर० ४३।८ ९९. तदेव १९।५

१००. हर० १।१७, ४२, ५०, ६२।२।६, २५।४।७, ७।५२, ५५।८।३, ४५।, ९।६५ । १३।५५ । १७।१६, ३२ । १८।१, ५, ११, १९, २६, ३०, ३६, ४२, ५८, ६७, ७२, ७५, ७७ । १९।२, ३, ५, ६, ८, ९, १०, १२, १३, २४, २५, २९।, ३०, ३१, ३९, ४३, ४९।, २०।१८, २६।, २१।२, ३, ४, ५, ६।, २२।४२, ४८।, २३।२९, ४४, ५०, ५१।, २४।२६।, २६।४९, ६२।, २७।११, २४, २६, ३०, ३२, ३७, ३८, ४३, ४४, ६२, ९५, १०२।, २८।१५, १६, १८, २५, ३१, ३५, ४५, ४७, ५१, ५२, ५५, ५६, ५८, ५९, ६०, ६३, ६४, ६५, ६९, ७२, ७८, ७९, ८०, ८४, ८५, ८६, ९१, ९२, १०६, १०७, १०८।, २९।२, ३, ४, ५, ८, ९, १३, १५, १६, २२, २८, २९, ३०, ३३, ३४, ३६, ३८, ३९, ४२, ४४, ४८, ५३, ५४।, ३०।५, १५, १६, २१, २३, ३६, ४०-६९, ७८।, ३१।१०, ११, १७, १९, २०, ४५, ५३, ६१।, ३२।२८, ३३, ३४, ३८, ३९, ४०, ४७, ५४, ५६, ७५, १११।, ३३।४, ७, ८, १६।, ३४।२, ३, ५, १३, १५, १८, ४२, ४३, ४४, ६६।, ३५।१२, ३४, ३७, ३८, ४०।, ३७।२८।, ३८।३८, ४३, ४९, ५२, ५५, ६१, ६३, ६४, ६६, ७५, ७६, ७९, ८२, ८३।, ३९।५, ९, १०, १२, १५, १६, १७, २५, २८, ३२, ३७, ३९, ५४।, ४०।५, ६, ७, ८, ९, १३, १७, २१, २२, २३, २४, २५, ३६, ४०, ४८, ५४, ६०, ६१।, ४१।९, ११, १९, २१, २२, २५, ३१, ४७, ६२, ६३।, ४३।७, १०, १२, १९, २१, २३, २५, ३३,

(५) अपह्नुतिः

अथ लम्भितसत्कारं तमुवाचान्धकासुरः ।
दन्तज्योत्स्नाच्छलेनारियशःपीतमिवोद्गिरन् ॥[१०१]

(६) अर्थश्लेषः

प्रथितप्रपञ्चरसभाववर्जितः क्वचिदेव किञ्चिदपि कर्तुमक्षमः ।
अवपुर्गतः करणवृत्तिशून्यतां प्रकृतेरहो नु सदृशोऽसि कामुकः ॥[१०२]

(७) समासोक्तिः

स्थितिगधुर्मधुरामवलम्बितस्तवकस्तर्पणपल्लवपाणयः ।
सतिलकोज्वलपत्रलता गिरेरवनयो वनयोगकृतश्रियः ॥[१०३]

(८) निदर्शनाः

ज्याकृष्टिमण्डलितकार्मुकमुक्तहेमनाराचराजिविकरालशिराः करीन्द्रः ।
दध्रे तटान्तरिततिग्मकरोर्ध्वरश्मिरेखावकीर्णशिखरोदयशैललीलाम् ॥[१०४]

यद्वा :

या पादानामुज्ज्वला श्रीरमीषामम्भोजानां सा कुतोऽभ्येति मुग्धाः !
मंजीरौघो मंजुना शिंजितेन प्रीत्येतीव व्याजहाराथ हंसान् ॥[१०५]

(९) अतिशयोक्तिः (दिङ्मात्रमुदाहरणद्वयम्)

श्यामत्वमेति सहसैव ममाततायि—
लोकस्य कुन्दकलिकाधवलं यशः प्राक् ।
श्च्योतन्ति कज्जलपरागमलीमसानि
पश्चाद्विलोचनजलानि नितम्बिनीनाम् ॥[१०६]

यथावा :

---

३६, ३८, ४३, ४७।, ४४।३, १८, २३, २६, ३६, ३७, ४४, ४८।, ४६।६, ४४, ५१, ५३, ५४, ५५।, ५०।३६ प्रभृतयः श्लोकाः ।

१०१. तदेव ३२।६० तथाच १७।१०. २८।२३, ३१।६१ प्रभृतयः श्लोकाः ।

१०२. तदेव ६।१६

१०३. तदेव ३।४ तथा च १६।२१। २०।६, ६५, ७१, ७२।, २२।४६, २८।७६। २७।४६ । ३६।१ । ४०।४२।४१।६१ ।

१०४. तदेव ४४।६

१०५. तदेव १८।१३ तथा १८।४२, २७।२८, ४१।६१ प्रभृतयः श्लोकाः ।

१०६. हर० ३७।२१

नैशान्धकारनिकरेण सहाविरुद्धमेकत्र साधु यदि सन्निविशेत तेजः ।
बद्धास्पदा मृगदृशः शशिलेखया तदासादयेत्सदृशतां कचहस्तभूमिः ॥[१०७]

(१०) दृष्टान्तः

कल्याणीं गिरमुत्स्रष्टुं विरला एव जानते ।
सत्यां रेखां विलिखितुं चित्रकर्मविदो यथा ॥[१०८]

(११) व्यतिरेकः

ज्योत्स्ना चन्द्रक्रमेणैव क्षीयते वृद्धिमेति च ।
शूराणां च रणे कीर्तिर्गता न विनिवर्तते ॥[१०९]

(१२) आक्षेपः
(१३) अर्थापत्तिः
(१४) असम्भवः

गुणांस्तव गिरां नाथो वक्ति तेनाथवाप्यलम् ।
सन्धोस्तटेषु सिकताकाणान् गणयितास्ति कः ॥[११०]

(१५) विभावना :

व्रजसीश ! पादरहितो गृहीतृतां प्रतिपद्यसे करविनाकृतोऽपि सन् ।
अवलोकयस्यनयनोऽप्यकर्णकः सकलं शृणोषि न च वेत्सि, वेत्सि च ॥[१११]

(१६) विशेषोक्तिः

क्रूरेऽपि मार्दवोपेता वामाचारेऽपि दक्षिणाः ।
पापेऽपि शुद्धमतयस्त्वादृशा भुवि दुर्लभाः ॥[११२]

(१७) यथासंख्यम्

नतानामनतानां च समं व्यवजहार सा ।
निनायौर्जित्यमेकेषामन्येषां जीवितं क्षयम् ॥[११३]

(१८) अर्थान्तरन्यासः

किं साम्प्रतं तरलदूतवचःप्रपञ्चै-
रेभिः किलाकुलितसत्वधियः स्थ दैत्याः ।
सम्भाव्यते शिखरिणां नहि मुग्धपत्रि-
शब्दश्रुतिक्षुभितकेसरिकंदरत्त्वम् ॥[११४]

एवमधिकाशांसु सूक्तिषु शतशः ।[११५]

---

१०७ तदेव ३२।३७
१०८. तदेव ३२।७०
१०९. तदेव ३२।१०१
११०. तदेव ३२।७७
१११. तदेव ६।४३
११२. तदेव ३२।७६
११३. तदेव ३२।१०३
११४. तदेव ३५।११
११५. द्रष्टव्यम् — परिशिष्टम् २.

(१६) काव्यलिङ्गम्

य: सज्जनो जगति यश्च खलैकवृत्ति-
र्द्वावप्यलीकवचसावभिदध्महे तौ ।
एको गुणानसत एव यतः परस्य-
वक्तीतरः किल सतोऽपि विनिह्नुते तान् ।।[११६]

(१६) हेतुः

बिम्वाधराञ्चितरुचा मधुना तदाथ
पीतेन पक्ष्मलदृशोऽच्छकपोलभागे ।
आसीन्मदः प्रकटितारुणराग एव
कार्यं हि कारणसदृग्भवतीति सत्यम् ।।[११७]

(२१) विरोधः

सहस्रधा विभज्यापि स्थितमात्मानमाहवे ।
निनाय पञ्चतामेव द्विषं मायाशताकुलम् ।।[११८]

एवमन्यत्र ।[११९]

(२२) स्वभावोक्तिः

इति विहितमृगव्यैर्मुक्तपर्याणपट्टा
ववलुरवनिपीठे सादिभिः क्रुष्टवल्गाः ।
श्रमजलकणजालाश्लिष्टजाम्बूनदोर्वी—
विधुतवनपरागालिंगितांगास्तुरंगाः ।।[१२०]

(२३) सहोक्तिः

स्तनस्रजा सार्धमवाप्तशोभां साकं गलन्तीं नयनाम्बुपूरैः ।
दग्धां सहालीजनचित्तवृत्त्या वियोगसंतापदशानुबन्धैः ।।[१२१]

(२४) विनोक्तिः

इत्थं रुषेन्धनविनाकृतमप्यधूममूर्ध्वेक्षणं स्मररिपोरिव दग्धकामम् ।
जज्वाल दानवसदः प्रलयार्कबिम्बदुर्दर्शघोरघटितानलतारकं तत् ।।[१२२]

११६. तदेव ३८।१२
११७. तदेव २६।४१
११८. तदेव ४३।७६
११९. तदेव ३।१४ ६।४९, १६७, १८१ । १७।२८ । १८।५३ । ३०।५५ । ३१।३१ । ३२।८०, ४०।३५ । ४५।४
१२०. तदेव ४१।३१
१२१. तदेव २५।५४
१२२. तदेव ३४।६०

(२५) पर्यायोक्तम्

तस्याधिपाणि सुरयौवतवक्त्रपद्मविस्पष्टहासघटना चतुरार्कविम्वम् ।
द्रष्टासि कैटभरिपोरसुरेन्द्रकण्ठपीठेषु चक्रमचिरात्परिवर्तमानम् ।।[123]

(२६) समुच्चयः

विभ्रती सुभटेनोच्चैराकल्पस्थितिचारुताम् ।
आलिग्यत रणे कीर्तिः स्वर्गनारी च तत्क्षणम् ।।[124]

(२७) परिकरः

इत्यर्धदेहरचितस्थितिमुत्तमाङ्ग-
गङ्गाभ्यसूयनपरां गिरिशस्य गौरीम् ।
नाथोऽधिगम्य सरितामथचन्द्रधाम–
सम्मूर्च्छितः क्रुध इवक्षुभितस्तदाऽऽसीत् ।।[125]

(२८) असंगतिः

त्वया विलुप्तावसरो नतांग्याः शरैः शरीरं कृशतां नयद्भिः ।
भिनत्ति तस्या निशितैरनङ्गः क्षतिस्तु मे चेतसि गाढगुर्वी ।।[126]

(२९) तद्गुणः

आसन्नवर्तिदनुजेन्द्रशरीरकान्तिकलमाषिता तनुरदृश्यततस्य गौरी ।
स्वच्छात्मतास्फुटतरव्रतपीतकुक्षिभागस्थधूमपटलेव सभातलस्थैः ।।[127]

(३०) मीलितम्

नालक्ष्यतात्ममणिभाजनमध्यगंयत्
सावर्ण्यतः स्फुटमलं प्रतिमेन्दुबिम्बम् ।
उत्क्षिप्यमाणमिव सोत्पलसिन्धुवार–
पुष्पावतंसरुचि तन्मधुनाविरासीत् ।।[128]

(३१) स्मरणम्

अभ्युन्मिषत्कनकपट्टमरीचिपिङ्गमुत्खातरत्नविसमुन्मदहंसमालम् ।
मन्दाकिनीतटमवेक्ष्य सनीलकण्ठमूर्च्छोऽस्मरद्धृतकपालशिखामणीन्दोः ।।[129]

---

१२३. तदेव ३३।३८
१२४ तदेव ४३।१०५, तथा च २५।६८, ४०।५२ । ४४।२ श्लोकेषु ।
१२५. तदेव २२।१
१२६ तदेव २५।११
१२७. तदेव ३३।४
१२८. हर० २६।२६
१२९. तदेव ३१।७

(३२) भ्रान्तिमान्

विस्पष्टलक्ष्मणि सशीधुतरंगरत्न-
पारीतलप्रतिमिते शशिनि प्रियायाः ।
गण्डस्थले च विकचोत्पलकर्णपूर-
कल्माषभासि विभिदे न जनस्य दृष्टिः ॥[१३०]

(३३) सन्देहः

शेषः किमेष न किमस्य फणाम्सहस्र–
मालोक्यते हिमगिरिर्नंनु निश्चलः किम् ?
इत्याहवाभिमुखमिन्दुकलावतंस-
मायान्तमीक्ष्य समशेरत दैत्ययोधाः ॥[१३१]

(३४) भाविकम्: समस्तेऽपि षोडशे सर्गे ।

(३५) उदात्तम्: वस्तूनां सम्पद्वर्णने, विशेषतः पुरीवर्णनेषु ।

(३६) संसृष्टिः

अक्षुण्णा बत शतमन्युता तवेयं साश्चर्या सुभग ! विनिर्ममे विधात्रा ।
निश्शङ्कं विदधत एव गोत्रभेदं वज्रस्ते निवसति वाचि यन्न पाणौ ॥[१३२]
तिलतण्डुलन्यायेनात्र श्लेष–व्यतिरेकौ-शब्दाऽर्थालंकारौ स्थितौ ।

(३७) सङ्करः

नीर- क्षीरन्यायेनालंकाराणां स्थितौ संकरः, स च त्रिविधः- (क) अंगाङ्गिभावसंकरः (ख) सन्देहसंकरः (ग) एकाश्रयानुप्रवेशसंकरश्च । क्रमशः उदाहरणानि :

(क) राजति तटीयमभिहतदानवरासातिपातिसारावनदा ।
गजता च यूथमविरतदानवरा सातिपाति सारा वनदा ॥[१३३]

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पाददृयगते परस्परापेक्षे ।[१३४]

(ख) संग्रामसीम्नि मयि गर्जति तारनादमुज्झत्यवश्यमभिमानमरातिलोकः ।
शब्दः स केसरिण एव भयङ्करेण येन श्रुतेन विमदीभवतीभयूथः ॥[१३५]

अत्रार्थान्तरन्यास-काव्यलिंग-दृष्टान्त-हेतूनां सन्देहः ।

---

१३०. तदेव २६.२०
१३१. तदेव ४६।२०
१३२. तदेव १७।८३
१३३. हर० ५।१३७
१३४. का०प्र०, अंगागिभावसंकरप्रकरणे, दशमोल्लासे ।
१३५. हर० ३७।४६

(ग) स्पष्टोल्लसत्किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकमथो दिवसारविन्दम् ।
श्लिष्टाष्टदिग्दलकलापमुखावतारबद्धान्धकारमधुपावलि सङ्कुकोच ॥[136]
अत्रैकपदप्रविष्टौ रूपकानुप्रासौ ।[137]

इत्थमर्थालङ्कारेषु केषांचित् स्थालीपुलाकन्यायेन प्रदर्शनमिह मनाक् कृतम् । एषूदाहरणेष्वनेकत्रानेकालङ्काराणां संसृष्टिः सङ्करश्चापि भवितुं शक्नोति तच्च विशिष्य न दर्शितम् । सहृदयैः स्वयमूह्यम् । एतावतैवास्यालङ्कारसम्पदनुमाप्या ।

छन्दांसि-हरविजये बहुप्रचलितानामिन्द्रवज्रोपेन्द्रवज्रोपजाति-मालिनी-अनुष्टुब्-द्रुतविलम्बित-वंशस्थ-पुष्पिताग्रा-वियोगिनी-प्रहर्षिणी - स्रग्धरा- शार्दूलविक्रीडितप्रभृतीनां; विरलप्रचलितानां स्रग्विणी-मंजुभाषिणी-मालभारिणी-रथोद्धता रुचिरा-प्रभृतीनां च २७ छन्दसां सुप्रयोगः कृतो वर्तते । पंचमे सर्गे नानावृत्तानां प्रयोगः प्राप्यते, परं तदीया काव्यसुषमा तु 'वसन्ततिलका' – माध्यमेनैव भवति । सुवृत्ततिलके तदीया वसन्ततिलका क्षेमेन्द्रणैवं प्रशंसिताऽस्ति :

वसन्ततिलकारूढावाग्वल्ली गाढसंगिनी ।
रत्नाकरस्योत्कलिका चकास्त्याननकानने ॥

वक्रोक्तिरुक्तिवैचित्र्यं वा तस्य संवादेषु सूक्तिषु[138] वा प्रचुरतया मिलति । कुन्तकेन वक्रोक्तेः (१) वर्णविन्यासवक्रता (२) पदपूर्वार्धवक्रता (३) पदपरार्धवक्रता (४) वाक्यवक्रता (५) प्रकरणवक्रता (६) प्रबन्धवक्रता - इति षड् भेदा निरूपिताः । ते साकल्येन काव्येऽस्मिन् विराजन्ते । विस्तृतिभयात्तेषां विस्तरशो निरूपणमकृत्वैव वक्रोक्तिसामान्यस्य लक्षणानुसारं केषाञ्चित् स्थलविशेषाणां चर्चा क्रियते । वैदग्धीभंगीभणितिर्हि वक्रोक्तेः सामान्यं लक्षणम् । तत्र 'प्रसिद्धप्रस्थानव्यतिरेकिता' सुस्पष्टं राजते । 'सहृदयाह्लादकारिस्वस्पन्दसुन्दरोऽर्थ'स्तस्या उपनिषद् ।

नीतेर्वैयर्थ्यं प्रतिपादयतोऽन्धकासुरस्य कथने कीदृशी वक्रता वर्तते :

और्जित्यमुज्झितवतां बत वीतशंकं
कार्यं करिष्यति च नीतिविषूचिका वः ।
वन्ध्यासुतः शशविषाणधनुर्विधाय
मोक्ष्यत्यवश्यमचिरेण स नाकबाणान् ॥[139]

एवमेव शंकरस्तुतिप्रसंगे भगवतः कृपापात्रस्य स्थितिर्विशिष्टवक्रिमायुक्तेन

१३६. तदेव १९।१
१३७. का०प्र०, संकरप्रकरणे
१३८. द्रष्टव्यम् – द्वितीयं परिशिष्टम् ।
१३९. हर० ३५।५८

मार्गेण प्रतिपादितास्ति :

अपि नाथ विध्यति मणि निरीक्षणस्तमनङ्गुलिर्नयति बोधितस्त्वया ।
प्रतिमुञ्चति स्म तमकन्धरोऽपि सन्परिपूजयत्यरसनस्तदद्भुतम् ।।[१४०]

'अट्टहास बभाषे' — इति सामान्यमर्थं कविर्वक्रोक्तिमयं कृत्वा प्रस्तौति :

स भारतीं वाङ्मयकल्पपादपस्फुरत्प्रतापोज्ज्वलरत्नमञ्जरीम् ।
निनाय निर्यद्दशनांशुकेसरां सभाङ्गनायाः शुचिकर्णपूरताम् ।।[१४१]

वक्रोक्तेः सुन्दरं रूपं द्वात्रिंशे सर्गेऽन्धकासुर-कालमुसलयोः संवादे प्राप्यते :

अथ लम्भितसत्कारं तमुवाचान्धकासुरः ।
दन्तज्योत्स्नाच्छलेनारियशःपीतमिवोद्गिरन् ।।
गौरीविग्रहसन्धानसमासादितनिर्वृतेः ।
गणेश ! कुशलं कच्चिदव्याहति पिनाकिनः ।।
चिरेण बत केनापि हेतुना स्मृतिगोचरम् ।
आगच्छाम वयं शम्भोर्येनेह त्वां व्यसर्जयत् ।।
जयलक्ष्म्योपगूढस्य पुरा जितमरुत्वतः ।
न ममाङ्गेषु सञ्जातस्तादृशः पुलकोद्गमः ।।
निर्व्याजप्रीतिपिशुनः शशिशेखरशासनात् ।
ईयुषि त्वयि सौहार्दरसस्यन्दिनि यादृशः ।।
इमे वज्रकणा हर्षस्फुटद्व्रणमुखोत्थिताः ।
रोमाञ्चोद्गमकार्कश्यमङ्गेष्वधिकयन्ति मे ।।
सप्तलोकाधिपत्येन न तथोन्नतिमागताः ।
यथाविष्कृतसद्भावभवसम्भाविता वयम् ।।
कर्त्तव्यं तन्न पश्यामि कृतकृत्योऽपि धूर्जटिः ।
यच्चेतसि निधाय त्वां प्राहिणोदस्मदन्तिकम् ।।
तदावेदय संदेशमिन्दुमौलेर्विवक्षितम् ।
कुतूहलि ददात्यस्मान्मनो नोदासितुं यतः ।।[१४२]

एतस्योत्तरे कालमुसलस्य या वक्तृतास्ति तस्यामुक्तिवैचित्र्यं वक्रोक्तिश्च खेलति ।[१४३]

एवमन्यत्रापि पात्राणां चरित्रचित्रणेषु । संवादसंयोजनायां, वर्णनान्तरेषु

१४०. तदेव ६।४७
१४१. तदेव १२।१७
१४२ तदेव ४३।६०–६८
१४३. तदेव ४३।४६–११७

चेदं वैशिष्ट्यं समुज्ज्वलतया विद्योतते।[१४४]

संक्षेपेण रत्नाकरशैली विचित्रमार्गभव्याऽऽकर्षणकरी च। विचित्रमार्ग-स्वरूपं च :

प्रतिभाप्रथमोद्भेदसमये यत्र वक्रता।
शब्दाभिधेययोरन्तः स्फुरतीव विभाव्यते॥
अलंकारस्य कवयो यत्रालङ्करणान्तरम्।
असन्तुष्टा निबध्नन्ति हारादेर्मणिबन्धवत्॥
रत्नरश्मिच्छटोत्सेकभासुरैर्भूषणैर्यथा।
कान्ताशरीरमाच्छाद्य भूषायै परिकल्प्यते॥
यत्र तद्वदलंकारैर्भ्राजमानैर्निजात्मना।
स्वशोभातिशयान्तःस्थमलङ्कार्यं प्रकाश्यते॥
यदप्यनूतनोल्लेखं वस्तु यत्र तदप्यलम्।
उक्तिवैचित्र्यमात्रेण काष्ठां कामपि नीयते॥
यत्रान्यथाभवत्सर्वमन्यथैव यथारुचि।
भाव्यते प्रतिभोल्लेखमहत्त्वेन महाकवेः॥
प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।
वाच्यवाचकवृत्तिभ्यां व्यतिरिक्तस्य कस्यचित्॥
स्वभावः सरसाकूतो भावानां यत्र बध्यते।
केनापि कमनीयेम वैचित्र्येणोपबृंहितः॥
विचित्रो यत्र वक्रोक्तिवैचित्र्यं जीवितायते।
परिस्फुरति यस्यान्तः सा काप्यतिशयाभिधा॥
सोऽतिदुःसञ्चरो येन विदग्धकवयो गताः।
खड्गधारापथेनेव सुभटानां मनोरथाः॥[१४५]

नूनं रत्नाकरः खड्गधारापथेनेव दुःसञ्चरेण मार्गेण सुसुखं चलति।

१४४. द्रष्टव्याः—१।२।१४–१७ । १४।७ । २७।११४ । २६।१११ । ३५।१३ । ३७।१५, २१, ३०, ३७, ६३, ६८, ७६। ४६।६, १४ ।, ५० । ६१, ६२ प्रभृतयः श्लोकाः ।

१४५. वक्रोक्ति० १।३४–४३.

## अष्टमोऽध्यायः

# हरविजये भावपक्षः

विवेचिते कलापक्षे भावपक्षस्य न्यायप्राप्तत्वात् सम्प्रति तद् विविच्यते। रसादीनां विमर्शो भावपक्षे समायाति। अयमेव पक्षः काव्यस्य जीवातुः। काव्यं हि 'लोकोत्तरवर्णनानिपुणकविकर्म' इत्युच्यते। 'लोकोत्तरता चाह्लादजनकज्ञान-गोचरता'। लोकोत्तरत्वं चाह्लादगतश्चमत्कारत्वापरपर्यायोऽनुभवसाक्षिको जातिविशेषः। कारणं च तदवच्छिन्नो भावनाविशेषः पुनःपुनरनुसन्धानात्मा।[1] आनन्दोऽयं लौकिकानन्दाद् व्यतिरिच्यते। लौकिकी प्रतीतिः 'ममैवेते, शत्रोरेवैते, तटस्थस्यैवेते' एभ्यो भावेभ्यो विनिर्मुक्ता न भवति। शब्दान्तरेषु सा ह्यनुभूतिः 'अविशुद्धिक्षयातिशययुक्ता' भवति। तस्यां ह्यनुभूत्यां जीवस्य मलिनांशस्य भूयस्कता भवति। सत्वोद्रेकमयी च रसानुभूतिः। यतः 'पुत्रस्ते जातः', 'धनं ते दास्यामि'इति वाच्यार्थधीजन्यरूपाह्लादकस्य च लोकोत्तरत्वम्। अतो न तस्मिन् वाक्ये काव्यत्वप्रसक्तिः। इत्थं च चमत्कारजनकतावच्छेदकं तत्त्वम्, स्वविशिष्टजनकतावच्छेदकार्थप्रतिपादकतासंसर्गेण चमत्कारवत्त्वमेव वा काव्यत्वमिति फलितम्।[2]

स च लोकोत्तरवर्णनानैपुणीसमुद्भूतः काव्यानन्दः समुचितविभावादि-योजनाबलेनैव प्रादुर्भवति। यथाह भरतः—'विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिः।' के विभावानुभावव्यभिचारिण इत्यपेक्षायामुच्यते — लौकिक-भाषायां यान्येव कार्यकारणनिमित्तकारणानि कथ्यन्ते तान्येव काव्यशास्त्रीय-भाषायां विभावानुभावव्यभिचारिपदैरभिधीयन्ते।[3] तैर्विभावादिभिरनादिकालाद्

१. रसगंगाधरः, पृ० ५, निर्णयसागरः, पंचमं सं०।

२. स एव, पृ० ५-६,।

३. कारणान्यथ कार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥
विभावा अनुभावास्तत्कथ्यन्ते व्यभिचारिणः।
व्यक्तः स तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः॥ (का०प्र०, ४।२७, २८)

वासनारूपेण संस्थितः स्थायिभाव एव रसरूपतां धत्ते 'विभावेन विभावितः, अनुभावेनानुभावितः, संचारिणा संचारितः, सहृदयानां हृदयेषु विद्यमानः स्थायीभावो दध्यादिन्यायेनानुकूलां परिस्थितिमवाप्य रसरूपतां धत्ते'। इति निर्गलितोऽर्थः । अस्मिन्विषये विविधाचार्याणां व्याख्या विलसन्ति तासां विवेचनस्य नेदं स्थानमिति कृत्वा केवलं माणिक्यचन्द्रस्य शब्दाः प्रस्तूयन्ते :

न वेत्ति तस्य गाम्भीर्यं गिरितुङ्गोऽपि लोल्लटः ।
तत्तस्य रसपाथोधेः कथं जानातु शंकुकः ?
भोगे रत्यादिभावानां भोगं स्वस्योचितं ब्रुवन् ।
सर्वथा रससर्वस्वममांक्षीद् भट्टनायकः ।।
स्वादयन्तु रसं सर्वे यथाकामं कथञ्चन ।
सर्वस्वं तु रसस्यात्र गुप्तपादा हि जानते ।।

कवेः सर्वापि चातुरी विभावादीनां समुचितसंयोजन एवास्ति । 'यथाहि नानाव्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिर्भवति, यथाहि गुणादिद्रव्यैर्व्यञ्जनैरोषधिभिश्च षाडवादयो रसा निर्वर्तन्ते तथा नानाभावोपगता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति ।[४]

यथा नानाव्यञ्जनसंस्कृतमन्नं भुञ्जानाः पुरुषा विविधान् रसानास्वादयन्ति तथैव विभावादिभिरुद्बुद्धं स्वस्मिन् स्थितमेव रसमनुभवन्ति सहृदयाः । भावानां परिष्कारः, शुभवृत्तीनां विस्तारः, अन्तःकरणस्य च प्रसादो रसानुभूतिपरक एव । यथा चोक्तम् :

यथा बीजाद् भवेद् वृक्षो, वृक्षात्पुष्पं फलं तथा ।
तथा मूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः ।।[५]

श्रीमदभिनवगुप्तानुसारमत्र बीजं कविनिष्ठो रसः, वृक्षः काव्यम्, अभिनयादिरसव्यापारः पुष्पाणि, फलं च सहृदयानां रसास्वादः । सम्यक्कृतो भावोद्बोधो बोधहेतुः ।

न भावहीनोऽस्ति रसो, न भावो रसवर्जितः ।[६]

स्वहृदये भावानामुद्बोधनम्, उद्बुद्धानां च तेषामपरहृदयेषु सफलतया सम्प्रेषणमेव कलाकर्तुः कौशलम् । इदमेव हि कलायाः सर्वस्वं येनासाधारणा अपि भावाः साधारणतां प्राप्नुवाना तत्तदनुकूलां परिस्थितिमवाप्यास्वादविषया भवेयुः ।

४. भरतनाट्यशास्त्रम्, ६।३२-३३ श्लोकयोर्मध्ये गद्यम् ।
५. तदेव, ६।३९.
६. भरतनाट्यशास्त्रम्, ६।३७.

कवेरन्तर्गता भावा यदा वैयक्तिकतां परित्यज्य निर्वैयक्तिकतां बिभ्रति, व्यष्टिसम्बद्धतां विहाय विश्वजनीनतां धारयन्ति, संकोचं परिहाय विस्तारं भजन्ते, तदैव कवयितुः कृतकृत्यता सम्पद्यते । तदा रस-सृष्टिस्तदधीना भवति :

अपारे काव्यसंसारे कविरेकः प्रजापतिः ।
यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥
शृंगारी चेत् कविः काव्ये जातं रसमयं जगत् ।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत् ॥[७]

हृदयस्य हृदयेन संवादः, आत्मनाऽऽत्मनः साक्षात्कारः, बद्धावस्थाया मुक्तावस्थायां विलय एव रसास्वादफलम् । यथाह मम्मटाचार्यः — 'लोके प्रमदादिभिः स्थाय्यनुमानेऽभ्यासपाटववतां काव्ये नाट्ये च तैरेव कारणत्वादिपरिहारेण विभावनादिव्यापारवत्त्वादलौकिकविभावादिशब्दव्यवहार्यैं 'ममैवेते, शत्रोरेवैते, तटस्थस्यैवेते' — इति सम्बन्धविशेषस्वीकारपरिहारनियमानध्यवसायात् साधारण्येन प्रतीतैरभिव्यक्तः, सामाजिकानां वासनात्मकतया स्थितः स्थायी रत्यादिको नियतप्रमातृगतत्वेन स्थितोऽपि साधारणोपायबलात् तत्कालविगलितपरिमितप्रमातृभावोन्मिषितवेद्यान्तरसम्पर्कशून्यापारिमितभावेन प्रमात्रा सकलसहृदयसंवादभाजा साधारण्येन स्वाकार इवाभिन्नोऽपि गोचरीकृतश्चर्व्यमाणतैकप्राणो विभावादिजीवितावधिः, पानकरसन्यायेन चर्व्यमाणः, पुर इव परिस्फुरन्, हृदयमिव प्रविशन्, सर्वांगीणमिवालिङ्गन्, अन्यत्सर्वमिव तिरोदधत्, ब्रह्मास्वादमिवानुभावयन्, अलौकिकचमत्कारकारी शृंगारादिको रसः' ।[८]

सत्वोद्रेकादखण्डं स्वप्रकाशानन्दचिन्मयं, वेद्यान्तरसम्पर्कशून्यं ब्रह्मास्वादसहोदरं, लोकोत्तरचमत्कारप्राणममुं रसं केचन पुण्यवन्त एव स्वाकारवदभिन्नत्वेनानुभवन्ति । अखण्डस्यापि रसस्य विभागकरणं यद्यप्यनुपपन्नं तथापि भावानमनेकरूपत्वाद्व्यावहारिकदृशा तेषां भेदाः कृता एवाचार्यैः । नाट्ये शान्तं विहायाष्टौ रसाः स्वीकृताः,[९] काव्ये च प्रायेण नव । केचन वत्सलाख्यं दशमपि रसं प्राहुः । अन्ये 'भक्ति'मपि रसरूपतयाङ्गीकुर्वन्ति । अप्रासङ्गिकत्वात् तच्चर्चां परित्यज्य प्रासङ्गिकं प्रस्तूयते ।

दृश्यकाव्येषु विभावादियोजना सरलतरा, परनिर्वृतिरपि तत्र सद्योलभ्या, परं श्रव्यकाव्येषु कवेरुपरि, महदुत्तरदायित्वमायाति । यत्र विना दृश्यमेव सोऽन्तः-

७. ध्वन्यालोकः, तृतीयोद्योतः, ४२.

८ का०प्र० चतुर्थ उल्लासः

९. शृंगारहास्यकरुणा रौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ (नाट्यशास्त्रम् ६।१६)

करणमुद्वेलयितुं सर्वमपि संरम्भं कुरुते । 'कविचेतसि प्रथमं च प्रतिभाप्रतिभासमानम् अघटितपाषाणशकलकल्पमपि प्रख्यमेव वस्तु विदग्धकविविरचितवक्रवाक्योपारूढं शाणोल्लीढमणिमनोहरतया तद्विदाह्लादकारि काव्यत्वमधिरोहति ।[10] शाब्दिकाः, पण्डिताः, विवेचका एवान्तःस्थं तत्वं साक्षात्कर्तुं कारयितुं च न क्षमाः संजायन्ते, ते केचनान्य एव सौभाग्यशालिनो येऽपूर्ववस्तुनिर्माणक्षमया प्रज्ञया जगन्मोहयन्ति । 'प्राक्तनाद्यतनसंस्कारपरिपाकप्रौढा प्रतिभा काचिदेव कविशक्तिः ।'[11] तस्या विशेषो रसावेशवैशद्यसौन्दर्यनिर्माणक्षमत्वम् । नहि प्राकृतसामर्थ्यशालिनो जना एवंविधामपूर्वां सृष्टिं कर्तुं प्रभवन्ति ।

'रस्यते=आस्वाद्यते' इति व्युत्पत्या भावादीनामपि संग्रहोऽभीष्टः । ततश्च रस-भाव-रसाभास-भावाभास-भावोदय-भावसन्धि-भावशबलता- भावप्रशमादिषु कस्यापि प्रधानतया वर्णने काव्यं सहृदयमनोरमं भवतीति सुस्पष्टमाख्यातुं शक्यते ।

रत्नाकर एतादृशेष्वेव सौभाग्यशालिषु कविष्वस्ति यस्य काव्ये कविसृष्टिस्तदधीना चकास्ति ।

हरविजयस्यांगीरसो वीरः । हास्यं विहायान्ये रसाश्चाङ्गम् । अत्र काव्येऽस्मिन् रसाभिव्यञ्जनामुद्दिश्य विचारः करिष्यते ।

## वीररसः

वीररसस्य स्थायीभाव उत्साहः, नायकश्चोत्तमप्रकृतिकः, आलम्बनविभावो विजेतव्याः, विजेतव्यादेश्चेष्टाद्याः उद्दीपनविभावाः, सहायान्वेषणादयोऽनुभावाः, धृतिमतिगर्वस्मृतितर्करोमाञ्चादयः सञ्चारिणश्च भवन्ति । महेन्द्रो देवता, हैमश्च वर्णो भवति । स च दानवीर-दयावीर-युद्धवीर-धर्मवीरभेदाच्चतुर्विधः । "वस्तुतस्तु बहवो वीररसस्य शृङ्गारस्येव प्रकारा निरूपयितुं शक्यन्ते । तथाहि—"सपदि विलयमेतु राजलक्ष्मीरुपरि पतन्त्वथवा कृपाणधाराः । अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैतु सत्यात् ।" इति चरमपदव्यत्यासे पद्यान्तरतां प्रापिते सत्यवीरस्यापि सम्भवात् । न च सत्यस्यापि धर्मान्तर्गततया धर्मवीररस एव तद्वीरस्याप्यन्तर्भाव इति वाच्यम् । दानदययोरपि धर्मवीरात् पृथग्गणनानौचित्यात् ।[12]

उत्साहस्यानेकविधत्वात् पाण्डित्यवीरादयोऽनेके भेदाः सम्भवन्ति । परं परम्परायामिमे चत्वार एव भेदाः प्रतिष्ठिताः । हरविजये मुख्यतया वीररस-

---

१०. कुन्तकः, वक्रोक्ति०, ७

११. रसगंगाधरः पृ० १६.

१२. रसगंगाधरः पृ० १६.

स्यैव प्राधान्यम्, युद्धं च धर्मरक्षाया हेतोरेवाभूदिति धर्मवीरोऽपि प्रतिपादयितुं शक्यते ।

अत्र हि भगवान् शङ्करो नायकः, अन्धकः प्रतिनायकः, विजेतव्यादीनां-चेष्टादय उद्दीपनविभावाः, रोमाञ्चादयोऽनुभावाः, धृतिमतिगर्वस्मृतितर्कादयः सञ्चारिणः । उत्साहस्य तरङ्गाः सर्वत्र काव्यमिदमुद्वेलयन्ति । शिवगणानां वक्तव्येषु, अन्धकासुरव्याहारेषु, वज्रबाहुविस्फूर्जिते, सैन्यसम्भारे, सैन्यसरम्भे, समरोद्घातवर्णने, चित्रयुद्धवर्णने, गजाश्वसम्मर्दवर्णने, सुभटसन्दीपने, चण्डिकाः समराक्षेपवर्णने सुरासुरविमर्दे, देवदेवप्रतिष्ठाननाम्नि च सर्गे वीररसस्य निर्भरः परिपाकोऽवलोक्यते ।

कविर्वीररसानुरूपपृष्ठभूमिनिर्माणे किंच तदभिव्यञ्जनचणेऽभिव्यक्तिमार्ग-निष्पादनेऽतितमां प्रवीणोऽस्ति । एषु स्थानेषु तस्य डम्बरबद्धा वाग्धारा सर्वान-प्याप्यायितान् कुर्वन्ती प्रतीयते । सैनिकानामुत्साहः, शस्त्राणां झाङ्कारः, योद्धृ-णामहमहमिकया संग्रामवेद्यामुत्सर्गः, सुभटसन्दीपनं, म्रियमाणेष्वपि स्फूर्तिमाधा-तुमलम् ।

वीरवेषे भगवतः शङ्करस्य चित्रणं मनागवलोकनीयम् :

शीतांशुमौलिरपि केसरिचक्रवालयोक्त्रीकृताहियतिभोगसहस्रभीमम् ।
अध्यारुरोह रथमग्निशिखापिशङ्गमायोधनानुगुणवेषपरिग्रहश्रीः ।।
उष्णीषभोगिफणफूत्कृतिवातघातपुञ्जीकृतत्रिपथगाजलवेणिशुभ्रम् ।
तस्योष्णवारणमधार्यत भागलग्नमाणिक्यखण्डरवचितोन्नतहेमदण्डम् ।।[१३]

सैन्यसम्भारे वीररसानुरूपाया करालकाल्या मूर्तिर्दिङ्मात्रमुदाह्रियते :

कालि च कोकिलकलापरुचिः कराल-
दंष्ट्राङ्कुरैति समरोत्कलिकाकुलैषा ।
निर्दग्धकालकलिकालकङ्कलकेतु-
रुद्भिन्नरत्नकलिकेव विदूरभूमिः ।।[१४]

भगवतः शूलपाणेः सैन्यबलेन धरित्री चकम्पे । शेषश्च तां कथमपि दधार :

स्थगितसकलदिक्कानेकसंख्यानसेना-
जनितगुरुभरोच्चैरन्वभूद्भूरि शम्भोः ।
क्रमविधुतविमुक्तोद्दामिनिःश्वासताम्य-
त्फणिपतिफणदोलान्दोलनं भूतधात्री ।।

१३. हर० ४०।४४-४५
१४. तदेव ३९.५२

करिहरिरथपत्तिव्रातनिर्धूतधूलि-
प्रकरजनितकार्श्यामन्ववध्नादधस्तात् ।
लघुविदलनभीतिव्याकुलात्मा कथञ्चित्,
फणनिगडसहस्रेणाहिनाथो धरित्रीम् ॥[१५]

रणक्षेत्रस्य वर्णनमवलोक्य प्रतीयते यद् रत्नाकरेण स्वयमुपस्थितेन भूत्वा-नेकशो रणभूमिरवलोकिताऽऽसीत्, । गजाश्वसम्मर्दस्य सजीवं चित्रणमवलोक-नीयमस्ति :

रुधिरारुणैर्निशितखड्गहता, नवमौक्तिकैर्द्विरदकुम्भतटाः ।
युधि दाडिमैः सदृशविभ्रमतां स्फुटितैर्दधुः प्रकटबीजशतैः ॥[१६]

किञ्च :

वल्गत्प्रवीरविनिपातितखड्गयष्टिधारानिकृत्तकरनिर्गतरक्तवर्तिः ।
धातुच्छटारुणितनिर्झरवारिपूरसञ्चारलग्नगिरिविभ्रममाप नागः ॥[१७]

कश्चिद् वीरः समवर्तिनः=यमस्य पादपीठद्वयमिव प्रतिस्पर्धिकरिकुम्भयुगल-मुत्प्लुत्य भीषणप्रहारसम्पादितमूर्छस्यारातेरुत्तमाङ्गमच्छिनत् :

मातंगकुम्भयुगलं समवर्तिपादपीठद्वयानुकृति निशातकृपाणपट्टः ।
उत्प्लुत्य कश्चिदहितस्य गुरुप्रहारमूर्च्छाकुलस्य सुभटोऽच्छिनदुत्तमाङ्गम् ॥[१८]

वीरा रणक्षेत्रे रोषं न तत्यजुः, न दर्पाच्च्युता अभूवन्, न युद्धे मरणाद्भयं प्राप्ताः, असि-सहाया अपि 'कथमस्माभिरयं स्वरक्षार्थं गृहीतः' इति मत्वा शौर्यातिरेकादलज्जन्त । ते युद्धे प्राणपणैरेव व्यवहारं चक्रुः। शस्त्राशस्त्रि युद्धत्सु तेष्वर्कमण्डलं तिरोहितमभूत् । तेष्वसमो विद्रवः पदं लेभे :

मन्युं व्यनेषत न संयति नापिदर्पा-
दच्योषताजिहत नाजिहतेश्च भीतिम् ।
शौर्यात्तथात्रपिषत स्फुरतासिनापि,
नाकद्विषो पणिषतासुभिरेव संख्ये ॥
अन्योन्यमाजुहुवुषां विषमेषु धैर्य-
बन्धाद्विशृङ्खलमचस्खलुषां च तेषाम् ।
प्रावर्ततातिरभसेन तिरोहितार्क-
तारापथः सशपथो रणसम्प्रहारः ॥

---

१५. तदेव ४१।१०, ११
१६. तदेव ४२।६
१७. तदेव ४४।५
१८. हर० ४४।४०

योधाः परस्परमपारपरम्पराक-
पर्याकुलाः शरपरम्परया तदानीम् ।
कम्पानुकम्प्यभयकातरसम्पराय-
पारायणप्रणयिनस्त्वरया परीयुः ॥[१९]

वल्गतां वाजिनां, चलतां रथानां, धावतां च कुञ्जराणां सम्मर्दादुत्थितेनधूलिराशिना देवनद्यपि सान्द्रजला बभूव ।

वल्गत्सु वाजिषु चलत्सु रथेष्वमन्दं, धावत्सु कुञ्जरकुलेषु सुरापगासीत् ।
निर्धूतनिर्दलितमेरुनितम्बधूलिसान्द्रीभवत्कनकवालुककूलकच्छा ॥[२०]

स्फुरतां शस्त्राणा, रथानां, केतूनां च सकाशात् संग्रामभुवः शोभा विचित्रैवाभूत् :

संग्रामभूः स्फुरितखड्गतरङ्गभङ्गवल्गन्निरर्गलतयोद्धतवाहिनीका ।
आपाण्डुकेतुवसनामलनिर्झराङ्कविस्तारिकूबरिकुलाचलमण्डलासीत् ॥[२१]

कविरुत्तेजनाप्रदानां व्यंग्योक्तीनां, कटूक्तीनां च रचनायां विशेषतया पटुः । भगवन्तं शङ्करं दृष्ट्वान्धकस्येदं कथनम् :

तिष्ठाधुना क्व नु बटो ! मम दृष्टिमार्गाद्
गन्तासि पुष्पविशिखोऽस्मि न मन्दवीर्यः ।
कालोऽथवा न कृपणः कृमिकीटजन्तु–
र्जीवापहारचतुरो न गजासुरो वा ॥
अन्या हि नृत्तरभसोत्थितदत्तताल–
वेतालमालिततला पितृमन्दिरोर्वी ।
संग्रामभूमिरपरा भटचण्डचक्र–
दोर्दण्डदर्पनिकषोपलपट्टिकाश्रीः ॥[२२]

सुभटसन्दीपनार्थं कृतमुत्तेजनं कायराणामपि रक्तमुष्णं विधातुमलम् । समग्रेऽपि पञ्चचत्वारिंशे सर्गे वीररसस्य प्रोत्साहना-तरंगिण्यः समुच्छलिता इव लक्ष्यन्ते । अनेकैस्तर्कैर्युक्तिभिश्च युद्धात् पराङ्मुखान् स्ववीरान् प्रत्यावर्तयितुं दैत्याधिपतिस्तेषामुत्साहाग्निसन्धुक्षणं करोति :

१९. तदेव ४४।४०-४२
२०. तदेव ४४।४५
२१. तदेव ४६।४१
२२. हर० ५०।६१, ६२

सेना विलोकयति जिह्ममसौ सहासमायोधनात्सपदि वः प्रपलायमानान् ।
शूलायुधेन कृतसन्निधिरप्यभीक्ष्णमारादखण्डपरशूरचिताञ्चितश्रीः ॥[२३]

रत्नाङ्गदैः समुपेता इमा भुजा भारभूता एव यदि विपक्षवक्षोदलनेऽतिदक्षा नेमाः ।[२४] कालरात्रिभुजसंहतीरिव, प्रेतनाथपुरपद्धतीरिवेमा गदा धारयन्तोऽपि युद्धपराङ्मुखाः सन्तः किमिति लज्जां न धारयथ ? गम्भीरर्गजितनिनादितशैलकुंजः सिंहो हस्तिभिर्निकारं कथं सहते ?[२५] पृष्ठेष्वङ्कितान् व्रणान् स्वदयिताभ्यः प्रदर्शनकाले भवतां मनांसि विरूढलज्जाभरमन्थराणि यदा भविष्यन्ति तदा तानि भवन्तः कथं शक्ष्यध्वे ?[२६] शस्त्राणां व्रणैः शून्या भवतां बाहुदण्डा भवत्प्रेयसीनामुपधानतां कथं यास्यन्ति ? :

हेतिव्रणाभरणशून्यविशङ्कटांसकूटाः कथं नु भवतां बत बाहुदण्डाः ।
गण्डोपधानपदवीं दयिताजनस्य, नीता भवेयुरधुना बहुमानपात्रम् ॥[२७]

सत्त्ववतां कृते बहुसाधनानामपेक्षा न भवति, ते प्राप्तैः साधनैरेव साध्यं साधयितुं क्षमन्ते; सप्तभिः शिखाभिरेव प्रलयकाले दहनो जगन्ति दहति :

प्रायेण कार्यकरणं प्रति विस्फुरन्ति, तेजस्विनो न बहुसाधनसव्यपेक्षाः ।
लोकान् विनिर्दहति सप्तभिरेव सप्त संहारकालमुदितो दहनः शिखाभिः ॥[२८]

कदाचिदपि भूषणैर्विरहितं रूपं मलिनं न भवति । श्रेष्ठचारित्र्ययुक्ता जना वीरत्वभावसम्भृतं यश एव निष्कलङ्कं भूषणं कथयन्ति ।

क्लिष्टं मलेन न कदाचिदहेमबद्धमावन्ध्यताविरहितं स्पृहणीयरूपम् ।
निर्व्याजमाहुरिह भूषणमार्यवृत्ताः शौर्यप्रतापजनितं यश एव पुंसः ॥[२९]

जनास्तावदेव विस्फुरिताः सञ्जायन्ते यावत्तेषां यशः प्रसृतं भवति । विकसितपुष्पेऽपहृते सति वृन्तमात्रस्यादरं कः करोति ?[३०] यथा मदवर्षिभ्यो गजेभ्यः केसरी मनागपि भीतो न भवति तथाऽऽजौ निहन्यमाना अपि वीरा युद्धाद् विमुखा न भवन्ति । तरंगभंगा बडवाग्निभिर्दह्यमाना अपि ततो विमुखा

२३. तदेव ४५।६
२४. तदेव ४५।७
२५. तदेव ४५।१०
२६. तदेव ४५।११
२७. तदेव ४५।१२
२८. तदेव ४५।१३
२९. तदेव ४५।१५
३०. तावद् व्रजन्ति गुरुतां यशसैव यावदध्यासिता हिमविपाण्डुरुचा महान्तः ।
लूने विकासिकुसुमे च शिखाग्रभागाकस्यादरो भवति शंसत तस्य वृन्ते ॥ (४५।१५)

न भवन्ति ।[३१] तेजस्विनः शक्तिस्तीक्ष्णे मृदौ च — सर्वत्राप्रतिहतप्रसारा भवति । कल्पाग्निर्वडवाग्निना साकमेव जलनिधिं विनिर्दहति ।[३२] पौरुषहानेरपेक्षया न किंचिदपि दुःखम् । यदि कातरत्वमवलम्ब्यते तर्हि तु वीरवेषधारणमेव व्यर्थम् । अयमेव मार्गो येन शत्रूणां विजयश्रियोऽवरोधः कृतः स्यात् ।[३३] तेजस्विनो जनस्य मार्गे व्याघातमुत्पादयितुं काचिदपि शक्तिर्नालम् । एकाकिनी सत्यपि वडवाग्निशिखाऽपारं समुद्रं विनिर्दहत्येव ।[३४] अद्य भवतां निस्त्रिंशधारासु कथमियमनास्था संवृत्ता ?[३५] मृत्योर्भयात्संग्रामात्पलायन एव भवद्भिर्मरणं प्रतिपन्नं, तन्मरणमितो मत्वा पुनरुक्तं न स्यात्तथाचरणीयम् । रणक्षेत्र एव प्राणान् जुहुथ ।[३६] किं न पश्यथ ? :

वार्ताभङ्गः प्रथयति यथा मूर्च्छनामिन्द्रियाणां–
सान्द्रोऽप्येवं न खलु सुभटप्रेरितोऽस्त्रप्रहारः ।
त्यक्ताः प्राणैर्भृशमशुचितां नैवमायान्ति काया–
यद्वद् व्रीडां गुणमणिखनिं लङ्घयन्तो लघीयः ।।
अद्याप्येतासुगन्धद्विरदकुलनगोद्दण्डगण्डोपलेभ्यो
निर्यान्तीषु प्रलीनभ्रमरशितिसरोजन्मखण्डास्वखण्डम् ।
दानाम्भोनिम्नगासु प्रकटितविकटासक्तयो वः कृपाणाः
कुर्वन्तूद्वृत्तकृष्णोरगकुलवलनाडम्बराणां विडम्बम् ।।[३७]

---

३१. न प्राप्नुवन्ति हि पराङ्मुखतामुदारसत्वा रिपो रणमुखेष्वपि हन्यमानाः ।
दह्यन्त एव जलधेर्वडवानलेन तस्य व्रजन्त्यभिमुखं च तरंगभंगाः ।।(४५।१६)

३२. तेजस्विनोऽतिमहतः क्वचनापि नूनं, तीक्ष्णे मृदौ च न विहन्यत एव शक्तिः ।
उत्थाय नागनगराद्वडवाग्निनैव सार्धं विनिर्दहति सिन्धुपतिं क्षयाग्निः ।। (४५।२५)

३३. दुःखं न किंचिदपरं पुरुषत्वहानेर्युद्धं मुधा समुदयोऽत्र चमूचराणाम् ।
मार्गोऽयमेव भवतां ननु शान्तिहेतुर्योऽरेर्जयश्रिय इव क्रियतेऽवरोधः ।। (४५।३२)

३४. तेजस्विनो न खलु काचिदपीह शक्तिराप्नोति कार्यकरणे क्वचनोपघातम् ।
एकापि सास्ति न शिखा वडवानलस्य या निर्दहत्यनिशमेव न सिन्धुतोयम् ।। (४५।३३)

३५. संग्रामकाननतमाललतावलीषु, सेनाकलिन्दतनयाजलवेणिकासु ।
संवर्तकालरजनीषु भयानकासु, निस्त्रिंशयष्टिषु कथं भवतामनास्था ? (४५।३४)

३६. अभ्यागमान्मरणसंभ्रमतः किलाशु यूयं पलायनपरायणतामुपेताः ।
तच्चोष्मणा विरहितैः प्रतिपन्नमेव युष्माभिरित्यपुनरुक्तमिदं कुरुध्वम् ।। (४५।३७)

३७. हर० ४५।५०, ५१

तदनन्तरं दैत्यसंघैर्वीरानुरूपमाचरितम्, यत्फलमभवत् :

क्रन्दत्संक्रन्दनानां प्रमथमथनकृन्मत्तदैत्याधिपानां
विद्राणैरावणानामशरणवरुणारब्धदिक्संग्रहाणाम् ।
ग्लानिग्राहिग्रहाणां ग्रहणरणधरानिश्चरत्खेचराणां
सैन्यं दैत्यासुराणामनिशमशरणं दैत्यचक्रेण चक्रे ॥

पीलूनां खड्गलूनैर्बहुत्रहुमकरैः कीर्णमन्तः करौघै-
र्वाहानां शस्त्रघातस्थपुटितवपुषां नक्रवद् व्याप्तमङ्गैः ।
लब्धास्थैः स्थूलमत्स्यैरिव हतपतितैर्युद्धभाजां भुजौघै-
रस्त्रस्रोतस्विनीनामजनि कुलमथाकुण्ठकं कण्ठदघ्नम् ॥[३८]

वीररसोचितानामनुभावानां विनिबन्धने कविः परमं प्रावीण्यं भजते । उत्साहव्य-ञ्जकानि चित्राण्यनेकशो विराजन्ते । अन्धकासुरसमाक्षोभे वीराणामुत्साहो-ऽनुभावमुखेनैव प्रकाशितः । तद्यथा :

आसन्नसम्मुखतया सुमनीबभूवुरुच्चैस्तरां जहसुराहसतांसकूटान् ।
हारांश्च चुक्षुदुरुदस्थुरथासनेभ्यो मृत्योरपि क्षतभियो न शशङ्किरेऽन्ये ॥[३९]

समरोद्यतानां शिवसैनिकानामुत्साहव्यञ्जिकाश्चेष्टा एकत एकमधरीकुर्वाणा इव प्रतीयन्ते :

बिभ्रज्जटाः कपिशशूकशिखापिशङ्गीराकाशयानगुरुवेगविलोलबन्धाः ।
वैकुण्ठनाभिसरसीरुहकेसराग्रसंक्रान्तधूलिकपिला इव दैर्घ्यभाजः ॥[४०]

यथा वा :

निश्शेषशात्रवकुलप्रलयाग्निधूमदण्डायमानकरकृष्टकृपाणपट्टाः ।
विद्याधराधिपतयः शिबिरं विशन्ति पारिप्लवश्रवणकुण्डलगण्डभागाः ॥[४१]

एवंविधा अनेका अनुभावपरम्परा बहुषु स्थलेषूपलभ्यते ।[४२] वीरोचिता उक्तयः सर्वत्र प्रसृताः सन्ति । यत्सत्यं स्वनुपमैर्वीरघोषैरिदं काव्यं साहित्यजग-त्युपमानशून्यमेव संवृत्तम् । वीरप्रकृतिकं काव्यमिदं वीरत्वघोषणामिव कुर्वत् स्ववैजयन्तीमिव धूनानोऽवालोक्यते ।

---

३८. तदेव ४७।५४, ५५.

३९. तदेव ३४।५७

४०. तदेव ३९।५

४१. तदेव ३९।२९

४२. उदाहरणार्थम् ३३।२, ३८।९१, ३९।१०, २०, २३, ३०।४८।१, ८५, ५०।५३ प्रभृतयोऽनेके श्लोकाः ।

## शृङ्गाररसः

मन्मथोद्भेदादपरपर्यायाच्छृंगादागमनहेतुत्वादयं शृङ्गार उच्यते । अयं प्रायेणोत्तमप्रकृतिको भवति । रतिः स्थायीभावः । परोढामननुरागिणीं वेश्यां च परित्यज्य मुग्धा, मध्या, प्रगल्भादिका नायिका आलम्बनं भवन्ति, दक्षिणादयो नायकाः । एकान्ताद्युद्दीपनम् । कटाक्षपातादयोऽनुभावाः । औग्र्यमरणालस्यजुगुप्सादिकं परित्यज्य प्रायेण सर्वे व्यभिचारिणोऽत्र भवन्ति ।[४३] सम्भोगविप्रलम्भभेदादयं द्विविधः :

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योन्यं सम्भोगोऽयमुदाहृतः ॥[४४]

चुम्बनपरिरम्भादीनामनेकविधत्वादस्य भेदप्रभेदानां गणना न सम्भवाऽस्मादस्यैक एव भेदः स्वीकृतः :

संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् ।
अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः ॥
तत्र स्याद् ऋतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः ।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ॥
अनुलेपनभूषाद्या वाच्यं शुचि मेध्यमन्यच्च ॥[४५]

हरविजये शृङ्गारस्य पूर्णं रूपं दृश्यते । तत्र संयोगशृङ्गारस्य वर्णनं सप्तविंशतितमे सर्गे विहितं वर्तते । तस्य पूर्वपीठिकारूपे जलक्रीडा–दिवसावसान–चन्द्रोदय–समुद्रोल्लास–प्रसाधन–पानगोष्ठी–प्रभृतीनां वर्णनं क्रमशः १८, १९, २०, २२, २३, २६ सर्गेषु प्राप्यते । विभावानुभावव्यभिचारिणां संयोजनमियत्या चारुतया कृतमस्ति यत्तदासेचनकदृष्ट्याऽवलोकनीयं भवति । शृङ्गारस्य

---

४३. शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढां वर्जयित्वा तु वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्दक्षिणाद्याश्च नायकाः ॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्तितः ॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्साव्यभिचारिणः ।
स्थायिभावो रतिः, श्यामवर्णोऽयं, विष्णुदैवतः ॥
(सा० द० ३/१८३–१८६)

४४. स एव(३/२१०)

४५ सा० दर्पणः ३/२११, २१२.

सर्वाश्चेष्टाः, समग्रं रूपं, निखिलो विलासस्तत्र समुज्जृम्भमाणां विलोक्यते। क्वचिदुपवनविहारः, एकत्र जलकेलिकौतुकम्, अपरत्र प्रसाधनविलासः, अन्यत्रापानकोत्सवः — सर्वमपीदं लोकं मदयति।

शृङ्गारोचितानामनुभावानां परम्परेवाक्ष्णोः समन्तादवतरन्ती समवलोक्यते-
निःश्वासावधुतपयोधरा विहारव्यापाराद्वनभुवि मम्लुषी तदानीम्।
स्वेदाम्भःकणनिकरं मुमोच सुभ्रूः शेफाली पवनहतेव पुष्पवर्षम्॥
प्रम्लानाञ्चितपुटतामरालकेश्या विभ्राणा निपतिततारकाभिरामा।
अन्यस्या विपिनविहारविक्रमेण श्रान्ताया दयिततमं जहार दृष्टिः॥[४६]

'अवहित्थाया' इदमुदाहरणमवलोकनीयम् :

रोमाञ्चालीमञ्चितां कम्पमूर्वोः शीतव्याजात्सीत्कृतं चाधितोयम्।
काचित्प्रेयः कामरागोत्थमेव प्रत्यग्रोढा स्पष्टमह्नोष्ट सख्याः॥[४७]

रतिमग्नानां नायिकानां विकल्पानां चित्रमसकृद् बलादाकर्षयतीव :

काचिद्विकल्परचिताकृतिचित्तनाथगाढोपगूहनरसस्तुतधर्मलेशैः।
लावण्यकान्तिजलमज्जनलग्नबिन्दुवृन्दानिवाभृत तनुं स्फुटरोमहर्षाम्॥[४८]

कस्या अपि मनःस्थितिर्निभालनीया :

भीता वधूरभिमुखं न शशाक भर्तुरुद्वीक्षितुं यदचिरोढतया कथञ्चित्।
पृष्ठागतस्य वदनं श्वसिताहतेऽथ पश्यन्त्यदूयत तदस्फुटमात्मदर्शे॥[४९]

सम्भोगशृङ्गारस्य सुस्पष्टं चित्रमेभिः श्लोकैः प्राप्तुं शक्यते :

स्थूलाभोगैः कृष्यमाणा नितम्बैस्तोयस्यान्तस्ताः स्तनैश्चातितुङ्गैः।
कृच्छ्रत्वलाम्यन्मध्यदोःकन्दलीकाः सम्प्लुत्याराद्वल्लभानालिलिङ्गुः॥[५०]

समग्रेऽपि सप्तविंशतितमे सर्गे सम्भोगशृङ्गारस्य मूर्तं रूपं विराजमानमवलोक्यते। दिङ्मात्रमुदाह्रियते :

समदमदनसाध्वसत्रपास्ताः किमपि रसान्तरमन्तराविशन्त्यः।
चिरमपहृतचेतसोऽपि चित्रं दयिततमानुपचेरुरञ्जिताक्ष्यः॥
सुखानुबन्धाद्विनिमीलिते मुहुः, प्रियाननालोकनकातरे मुहुः।
अवापतुर्मन्थरतां विलोचने निमीलनोन्मीलनविभ्रमैस्तनोः॥[५१]

४६. तदेव १७।१००, १०१
४७. तदेव १८।४०
४८. तदेव २३।५२
४९. तदेव २३।५३
५०. तदेव १८।६०
५१. तदेव २७।७४-७५.

किञ्च :

रोमांचकण्टकितकम्पिकपोलभित्तिरन्योन्यसंवलिततारकलोचनश्रीः ।
रागावसानकुलिता मिथुनस्य दृष्टिरन्यैव निस्तिमितकालकलाविरासीत् ।।[५२]

परां काष्ठां प्रापितोऽयं सम्भोगशृङ्गारोऽवलोक्यते :

निविडजघनरोहकाण्डयुग्मा तरलविवर्तिततारकेक्षणश्रीः ।
दृढतरपरिरम्भविभ्रमासीत् कमलदृशां सुरतावसानलीला ।।[५३]

विप्रलम्भशृङ्गारस्य वर्णनं चतुर्विंशतितमे पंचविंशतितमे च सर्गे प्राप्यते । एकत्र साक्षादपरत्र परम्परया । पूर्वरागमानप्रवासकरुणभेदैर्विप्रलम्भश्चतुर्धा भवति। अत्र करुणं विहाय सर्वे भेदाः प्राप्यन्ते । वस्तुतोऽयं विरहो नातिगम्भीरस्तथापि पूर्वरागोचितानामभिलाषचिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापादीनां दश कामदशानामुपनिवन्धनं प्राप्यते । युद्धवर्णनप्रसङ्गे वीरानवलोक्याप्सरसां ये मनोभावाः सन्ति ते 'पूर्वराग' — कोटौ समायान्ति । तत्रोक्तानां दशानां सुन्दरं चित्रणं प्राप्यते । तद्यथा :

(क) पुलकं दधौ सघनघर्मजला, धृतवेपथुर्मुहुरजृम्भत च ।
भटमीक्ष्य खे नहि तदस्ति न यद् विदधेऽप्सराः स्मरमयं ललितम् ।।[५४]

(ख) रोमांचपीनतनुता च सकम्पता च दाढ्यार्नुवन्धि च सखीष्वपि लोडनत्वम् ।
स्वेदोदविन्दुनिकरश्च समन्मथाया दृष्टे वभूव सुभटे सुरलोकनार्याः ।।[५५]

(ग) मूर्छापरीतं रभसाज्जिघृक्षुः सुराङ्गना सङ्गरमूर्धिन धीरम् ।
उज्जीवयन्तं करशीकरौघैरमर्षजिह्मं गजमालुलोके ।।[५६]

एवमन्यत्रापि ।[५७]

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशता रुचिः ।
अधृतिः स्यादनालम्वस्तन्मयोन्मादमूर्छना: ।।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ।।[५८]

---

५२. हर० २७।१०६
५३. तदेव २७।११०
५४. तदेव ४२।२७
५५. तदेव ४६।४०
५६. तदेव ४८।१०४
५७. द्रष्टव्याः-४२।१६, ३६। ४४।२। ४६।४१। ४८।३३।४८।४६।४६।३६।५०।२४ प्रभृतयः श्लोकाः ।
५८. सा०द० तृ०प०

इत्युक्ताः स्मरदशा यथास्थानमुपवर्णिताः समवलोक्यन्ते । तद्यथा :

(१) अंगेष्वसौष्ठवम्

स्थूलाश्रुधारापतनानुबन्धप्रमृष्टिसञ्जातभयेव तन्व्याः ।
गण्डार्पिते सम्प्रति पाणिपद्मे न भाति लग्नागुरुपत्रवल्ली ॥[५९]

(२) तापः

त्वद्विप्रयोगानलदाहतप्ते म्लानीकृताम्भोरुहिणीपलाशे ।
अच्छिन्नपाताः कुचकुम्भपृष्ठे तस्याश्छमित्यश्रुकणाः पतन्ति ॥[६०]

(३) पाण्डुता

धृतारविन्दच्छदसौकुमार्ये हस्ते च पुष्पास्तरणे च तस्याः ।
विपाण्डुरत्वं दधती नितान्तं कपोलभित्तिश्च तनुश्च तस्थौ ॥[६१]

(४) कृशता

स्मरकार्मुकयष्टिविभ्रमं कुटिला चान्द्रमसी कलावहत् ।
दधति स्म तदीरिताः शरा इव तन्व्यास्तदभीषवो व्यथाम् ॥[६२]

(५) अरुचिः

विकल्पजालाकुलितं तदीयं चेतः परिभ्राम्यति निर्व्यवस्थम् ।
विनिष्पतन्मन्मथमार्गणौघपतत्त्रवातैरिव नुद्यमानम् ॥[६३]

(६) अधृतिः

चन्द्रोदयारम्भविजृम्भितेन व्यधायि तस्या मकरध्वजेन ।
वेलातटोर्व्या इव नेत्रशुक्तिमुक्ताश्रुबिन्दुस्फुटमौक्तिकत्वम् ॥[६४]

(७) अस्थिरता

बिम्बायमानाधररागलक्ष्मीकदर्थनाखेदभयादिवाच्छाम् ।
अश्रुधुतिं जर्जरतां नयद्भिः श्वासानिलैर्दत्तकुचाग्रकम्पा ॥[६५]

---

५९. हर० २५।२१
६०. तदेव २५।२४
६१. तदेव २५।२
६२. तदेव २४।२
६३. तदेव २५।३२
६४. तदेव २५।४
६५. तदेव २५।३६

(८) तन्मयता

अनेकसङ्कल्पविकल्पगाढां दशां वहन्त्या विरहे त्वमेव ।
स्वप्नेऽपि जाग्रच्चरिते च तस्याः सुखस्य दुःखस्य च हेतुरेकः ।।[६६]

(९) उन्मादः

व्यर्थो हारो मृणालैश्चितमपि शयनं धिक्किमम्भोरुहैर्वा,
कर्पूरं दूर एव क्षिपत हिमशिलाशर्कराभिः किमाभिः ?
मिथ्या मैवातिखेदं भजत गुरुतरः कोऽपि दाहज्वरोऽस्याः ।
इत्यन्योऽन्यं तदाल्यः सुभग ! परिगदन्त्यश्रुपूरप्लुताक्ष्यः ।।[६७]

(१०) मूर्च्छा

दयिते चिरयत्यनुक्रमाद् वियदास्कन्दति चन्द्रमण्डले ।
भृशमुत्कलिकाकुला मुहुर्मुमुहुर्मूढमनोरथाः स्त्रियः ।।[६८]

(११) मरणम्

तदेहि यावन्न भजत्यवाच्यां दशां सखी मे तव विप्रयोगात् ।
सञ्चारिकाया वचसेतिदूरमुत्साहितः सत्वरमेत्य कश्चित् ।।[६९]

वस्तुतो वीररसानन्तरं शृङ्गार एव स रसो यस्याभिव्यञ्जनायां कविना महदवधानं दत्तम् ।

## हास्यम्

हास्यस्य प्रयोगोऽस्मिन् काव्ये नास्ति । रत्नाकरसदृशस्य गम्भीरप्रकृतिकस्य पुरुषस्य कृते कदाचिदिदमुचितमेवासीत् । केवलमेकमेवोदाहरणमुत्तमकोटिक-हास्यस्यावलोक्यते यत्र विदूषकाख्यस्य नर्मसुहृदो भूमिकामनुकुर्वन् भुजगारि-केतुः (कार्तिकेयः) शशाङ्कचूडस्य शशाङ्कलेखामाकृष्य कुटिलदण्डमग्रे चकार । तस्येमां चेष्टां च निरीक्ष्य भगवती पार्वती जहास :

आलोकितस्तुहिनशैलभुवा सहासमाकृष्य शेखरशशाङ्ककलां स्मरारेः ।
नृत्यन् विदूपकभुवं भुजगारिकेतुरग्रे चकार कुटिलोन्नतदण्डकाण्ठम् ।।[७०]

## करुणः

शोकस्थायिभावस्य करुणस्य परिपाकोऽपि नावलोक्यते । वस्तुतो रत्ना-

---

६६. हर० २५।९
६७. तदेव २५।४०
६८. तदेव २५।३६
६९. तदेव २५।४१
७०. तदेव २।५८

करस्य जीवनदर्शने करुणस्य तदनुभावानां दैवनिन्दाभूपातक्रन्दितादीनां, वैवर्ण्योच्छ्वासनिःश्वासस्तम्भप्रलयनादीनां च, निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमविषादजडतोन्मादचिन्तादीनां च व्यभिचारिणां स्थानमेव नासीत् तथापि द्वित्रिषु स्थलेषु करुणस्य दर्शनं प्रतीयत एव। यथैकचत्वारिंशत्तमे सर्गे मृगयावसरे :

द्रुततरमपि नष्टा सादिसैन्यात्नमर्दा-
त्तनयमनवलोक्य क्वापि तत्रैव यातम्।
पुनरसुनिरपेक्षं कृष्णसाराङ्गनाऽगात्,
पदमिह न विपत्तेः कस्य तृष्णाथवा स्यात्?[७१]

अत्र हरिणशिशुरालम्बनं, तदनिष्टशङ्कोत्पन्नः शोकः स्थायीभावः, तदनवलोकनमुद्दीपनविभावः, असुनिरपेक्षं गमनं तदनुभावश्चिन्ता च व्यभिचारिभावः। किञ्च :

विकटगुरुविषाणादभ्रभाराण्यवाञ्चि,
प्रसभमभिहतानामुत्तमाङ्गानि पूर्वम्।
गिरिभुवि हरिणानामाशु पश्चाद् वपूंषि,
स्रुतरुधिरलघूनि व्योममार्गान्निपेतुः।[७२]

स्पष्टमेवैतादृशेषु स्थलेषु करुणभावस्य विगलितहृदयताया एव प्राधान्यम्।

रौद्ररसः

क्रोधो रौद्रस्य स्थायिभावः, रुद्रोऽधिष्ठाता, अरय आलम्बनम्, तेषां चेष्टा उद्दीपनम्, मुष्टिप्रहारादिभी रसस्योद्दीप्तिः प्रत्यक्षीक्रियते। भ्रूभङ्गौष्ठदंशनबाहुस्फोटादयोऽनुभावाः, उग्रतावेगरोमाञ्चादयः सञ्चारिणः।[७३]

अस्य रसस्य परिपाको हरविजये सुतरां सञ्जातः। शिवपरिषदि, अन्धकसभायां, दूतप्रतिगर्जिते, युद्धवर्णने रौद्रस्यैतावत् समुज्ज्वलं रूपमवलोक्यते यत्तेन काव्यस्य भूयान् भाग आक्रान्त इवाभाति। न केवलमेकस्मिन्नेव पद्येऽपितु श्लोकानां परम्पराभी रौद्ररसोचिता अनुभावादयो व्यज्यन्ते। शिवपरिषदो वर्णनमेव रौद्ररसस्य भूमिकारूपेण भवति :

---

७१. तदेव ४१।२०
७२. तदेव ४१।२४
७३. रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः।
आलम्बनमरिस्तस्य तच्चेष्टोद्दीपनं मतम्॥
मुष्टिप्रहारपातनविकृतच्छेदावदारणैश्चैव।
संग्रामसंभ्रमाद्यैरस्योद्दीप्तिर्भवेत्प्रौढा॥

क्रूरक्रुधामथकराभिहतांसकूटमुल्लासितभ्रुकुटिदन्तविघट्टितौष्ठम् ।
तेषामनेकविधघोरविकारचेष्टमाताम्रदृष्टि सदसि स्फुरितं तदासीत् ।।
विन्यस्तपादभरकम्पितकुट्टमाग्रमाघट्टिना विघटितामलमौलिबन्धम् ।
क्रोधः सभां न्यविशताङ्गदकोटिलग्नविस्रस्तकोमलदुकूलदशं स्मरारेः ।।[७४]

रौद्ररसानुरूपाणां सर्वग्रासिनीनां मुद्राणां चित्रणे कविर्नितरां प्रवीणः। एवंविधानां मुद्राणां परःशतानि चित्राणि काव्येऽस्मिन् राजन्ते। दिङ्मात्रं तूदाह्रियते :

छायां किरन्नलिनिताम्बरदिग्विभागामाविर्भवद्भ्रुकुटिभङ्गभयानकेन ।
वक्त्रेण कालमुसलः सकलाखिलोकसंहाररात्रिघटनामिव कर्तुमैच्छत् ।।[७५]

वीरभद्र मेघनील- त्रिमूर्ति वज्रमुष्टि- नडकूबर- क्रोधेश्वर- चण्डेश्वर- तालकेतु- सुनन्दक-दिण्डि-आमर्दक-तार-अट्टहास-अभ्रकेतु-काली-प्रभृतीनां क्रोधपूर्णा मुद्रा दर्शनीया एव प्रतिभान्ति ।[७६]

रौद्ररसानुरूपा पदावली वर्णनेषु सजीवतामापादयति :
आमर्षहर्षभरपार्षदपार्ष्णिपाणिलीलाभिघातविधुरा धरणी रराण ।
पातालतालुनि ससम्भ्रमनागभीरुगर्भप्रगल्भविनिपातनघोरघोषम् ।।
केयूरचक्रनिकरैस्त्रिदशाधिपानामंसावमर्दपतितैर्मणिकुट्टिमोर्वी ।
रेजे पुरन्दरकरेरितवज्रपातविच्छिन्नपक्षतिपुटैरिव भूधराणाम् ।।[७७]

रौद्रस्य परिपाकोऽन्धकासुरसभायां कालमुसलस्य निर्भीकभाषणानन्तरं भवति। तत्रत्यं वर्णनं यातुधानानां क्रोधस्य सजीवं चित्रमवतारयति ।[७८] दैत्यराजस्येयं श्लाघा तस्य प्रच्छन्नममर्षं द्योतयति :

---

भ्रूविभंगोष्ठनिर्दंशब हुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ।।
अनुभावास्तथाक्षेपक्रूरसन्दर्शनादयः ।
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।
मोहामर्षादयस्तत्र भावाःस्युर्व्यभिचारिणः ।। (सा०द०, तृ०प०)

७४. हर० ७।१, २

७५. तदेव ७।४

७६. द्रष्टव्यः — सप्तमः सर्गः

७७. हर० ७।५१–५२

७८. तदेव ३५।३–६.

निर्जित्य संयुगमुखे सुरराजचक्र-
मध्यात्मसाज्जगदकारि यदैव दैत्यैः ।
क्वासौ तदा समभवत्कथयेन्दुमौलिः
स्कन्दोऽथवा क्व नु गणाः, क्व नु ते, क्व नन्दी ? ।।[७९]

इत्थं रौद्रस्य पूर्णा प्रतिष्ठाऽत्र काव्ये समवलोक्यते ।[८०]

भयानकः

भयस्थायिभावको भयानको रसो भवति । अस्याधिष्ठाता कालो भवति । कृष्णश्चास्य वर्णः। भयकारणमालम्बनम् । तदीयाश्चेष्टाश्चोद्दीपनम् । वैवर्ण्यगद्गदभाषणप्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयोऽनुभावाः, जुगुप्सावेगसम्मोह-संत्रासग्लानिदीनताशंकापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणो भवन्ति ।[८१]

भयानकरसस्याभिव्यक्तिः शिवसेनया चण्डिकया च हतानां राक्षसानां वर्णनेऽवलोक्यते :

(क) निस्त्रिंशघातविनिकृत्तभटोत्तमाङ्गपीनांसचक्रचितास्पदपीनजंघाः ।
चक्रुः कृतान्तपुरुषा इव तत्र भीतिमावृत्य सैनिकजनस्य रणे कबन्धाः ।।[८२]

(ख) दैत्याधिपास्तत्र युयुत्सवो ये सरोषदष्टाधररौद्रनेत्राः ।
क्षताभिमानास्तरसा तयाथ ते वीततृष्णाः समरे बभूवुः ।।[८३]

(ग) द्विरदः क्षणादसिविलूनतलान् प्रतिहारिणः करिकरानवनौ ।
भयपुञ्जितान् सपदि पत्रिपतिर्भुजगानिव व्यदलयत् समरे ।।[८४]

भयानकस्यान्यद् वर्णनं शिवगणानां मृगयाप्रसङ्गेऽवलोक्यते, यत्र दर्शिता-

---

७९. तदेव ३५।१६

८०. द्रष्टव्याः – ७–१६, ३२–५० सर्गाः

८१. भयानको भयस्थायिभावो कालाधिदैवतः ।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ।।
यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम् ।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ।।
अनुभावोऽत्र वैवर्ण्यगद्गद्स्वरभाषणम् ।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ।
जुगुप्सावेगसम्मोहसंत्रासग्लानिदीनताः ।
शंकापस्मारसंभ्रान्तिमृत्य्वाद्या व्यभिचारिणः ।। (सा०द०, तृ०परि०)

८२. तदेव ४९।३४

८३. तदेव ४८।३६

८४. तदेव ४२।४२

च्छोदनेच्छैः = दर्शिता आच्छोदनस्य = आखेटस्य, इच्छा यैस्तैः शिवसैनिकैः सन्धानं प्रापिताः पशवः भयाक्रान्ता सन्तोऽवलोक्यन्ते :

अथ शशधरमौलेः सैनिकाः सानुदेशे,
दिशि-दिशि विचरन्तः कल्पितैर्वाजिसैन्यैः ।
प्रतिभयतरलाक्षं दृश्यमाना मृगौघैः
स्थितिरिति चिरमासन् दर्शिताच्छोदनेच्छाः ॥
सरभसमनुविद्धा केनचित्सादिनोच्चैः
स्फुरिततरलतारा श्यामलांशुच्छटाभिः ।
व्यवधिमिव विधातुं भीतिपारिप्लवाक्षी
हरिणयुवतिरैच्छत्संभ्रमादात्ममूर्तेः ॥[८५]

भयानकस्यान्यद् रूपं युद्धावसरे संजातानामपशकुनानां वर्णनावसरे भवति :

(क) दैत्यासुरस्य न चचाल रथोऽपि यन्तृ--
संचोदितः किमपि भावि भियेव पश्यन् ॥[८६]

(ख) गृध्रः परेतपतिदूत इव ध्वजाग्र--
मध्यास्त तस्य रभसादरुणोत्तमाङ्गः ।[८७]

(ग) वज्राभिघातपरुषं पिशिताशिनश्च
चक्रुर्महाप्रलयशंसिनमट्टहासम् ॥[८८]

एवमन्यत्रापि ।[८९]

इत्थं भयानकस्य पूर्वः परिपाकोऽस्मिन् महाकाव्ये प्राप्यते ।

## बीभत्सः

बीभत्सस्य जुगुप्सा स्थायिभावः । वर्णो नीलः । महाकालो देवता । दुर्गन्धमांसरुधिरादय आलम्बनम् । कृमिपाताद्युद्दीपनम् । निष्ठीवननेत्र-नासिका-संकोचादयश्चानुभावाः, अपस्मारावेगव्याधिमरणादयश्च व्यभिचारिणो भवन्ति ।[९०] अस्यान्यनेकान्युदाहरणानि युद्धादिवर्णनेषु प्राप्यन्ते । तद्यथा :

---

८५. तदेव ४१।१८, १९

८६. तदेव ५०।१६

८७. तदेव ५०।१७

८८. हर० ५०।१९

८९. द्रष्टव्याः ३४।६१–६६ श्लोकाः ।

९०. जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥

संग्रामसीम्नि पतितः सुभटप्रहारमूर्च्छाकुलः सपदि रात्रिमटो मुमूर्षुः ।
खड्गावकृत्तनिपतत्करिकर्णतालवृन्तानिलेन समवीज्यत यातुधान्या ॥[६१]

यद्वा :

तद्वक्षः कटकादसंनिपतितं सान्द्रं कपालोदरे
पीत्वा तत्परिणामपाटलमिवाताम्रं वपुर्बिभ्रती ।
चामुण्डाङ्गुलिकोटिभागमलनात्तद्वीर्यबीजांकुरा–
नुच्छिन्नाखिलसन्ततीन्सरभसं चक्रे प्रतिच्छन्दकान् ॥[६२]

एवमेत्रानेकत्र वीभत्सवर्णनं प्राप्यते । क्वचित् प्रकृतिवर्णनसदृशे सुरुचिरे स्थलेऽपि वीभत्सदर्शनं भवति ।[६३]

अद्भुतः

विस्मयोऽस्य स्थायिभावः । लोकातिक्रान्तं वस्त्वालम्बनम् । गुणोत्कर्ष उद्दीपनमस्य स्तम्भस्वेदरोमांचगद्गदादयोऽनुभावाः, वितर्कावेगहर्षाद्याश्च सञ्चारिणः ।[६४]

अस्मिन् काव्येऽद्भुतसन्निवेशो मुख्यतया वीरताजन्य एव । 'वीराच्चैवोद्भुतोत्पत्ति'[६५]रित्यभियुक्ताः । शिव-चण्डी-वर्णनेष्वपि लोकातिक्रान्ततया अद्भुतरसस्य परिपाकोऽनुभूयते ।

योधा युद्धे कृतधियो रभसेन वल्गुसंवादिफल्गुनमफल्गुफलं ववल्गुः ।
पाणिस्थिताक्रपक्रपाणनिपातपीतमत्तद्विपाक्रपक्रपाणक्रपीटपट्टाः ॥

दुर्गन्धमांसरुधिरमेदास्यालम्बनं मतम् ।
तत्रैव क्रमिपाताद्युद्दीपनमुदाहृतम् ॥
निष्ठीवनास्यवलननेत्रसंकोचनादयः ।
अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ॥
मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः । (सा० द०, तृ०परि०)

६१. हर० ४६।३३
६२. तदेव ५०।८८
६३. तदेव २८।२३
६४. अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः ।
पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ।
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः ।
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमाः ।
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः ॥
वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः ॥ (सा०द०, तृ०परि०)
६५. नाट्यशास्त्रम् ६।४०

संग्राममङ्गलमुपेत्य जगुः सकम्पहस्ताङ्गुलीशिथिलकोणहताः विपञ्चीः ।
शम्भोर्विलोकननिरर्गलजृम्भमाणपीनध्वजाः सरसमप्सरसो दधत्यः ।।[९६]

अत्र योद्धार आलम्बनम्, तेषां लोकातिशायि शौर्यविस्फूर्जितमुद्दीपनम्, तद्यशोगानादिकमनुभावः, सरसत्वादिकं व्यभिचारिः । एवमन्यत्रापि बहुशः ।

शान्तः

शमस्थायिभावकः शान्तः । अयमुत्तमप्रकृतिः । संसारस्यानित्यता परमात्मस्वरूपं वा तस्यालम्बनं भवति । पुण्याश्रमतीर्थसत्संगादय उद्दीपकाः, रोमाञ्चाद्या अनुभावाः, निर्वेदहर्षस्मरणमत्यादयश्च सञ्चारिणः ।

शैवागमसिद्धान्तानुसारं संसारस्यानित्यता त्वालम्बनरूपेण स्वीकर्तुं न शक्या, परं परमात्मस्वरूपं सर्वथालम्बनत्वेन प्रतिष्ठापितम् । षष्ठे सर्गे शिवस्तुतौ सप्तचत्वारिंशत्तमे च सर्गे चण्डीस्तुतावत्र शान्तो[९७] रस आत्मानं प्लावयत्येव । दिङ्मात्रमुदाह्रियते :

प्रतिपद्य शङ्कर ! भवन्तमव्ययं सुखदुःखमोहपरिहीणचेतनः ।
व्यतिवृत्ततन्तुमयबन्धनाष्टको भगवन् भवानिव भवत्यणुः स्फुटम् ।।[९८]

अत्र भगवान् शङ्कर आलम्बनम् । तदीया अव्ययत्वादयो गुणा उद्दीपकाः । सुखदुःखमोहपरहीणचेतनत्वमादिका अनुभावाः निर्वेदस्मरणमत्यादश्च सञ्चारिणः । तेषां संयोगात् शमः स्थायिभावो रसरूपतां धत्ते ।

यथा चोक्तं प्राग् यत् 'रस्यते इति रसः' इति व्युत्पत्या रस–परिवारे रसरसाभास-भाव-भावाभास–भावोदय- भावसन्धि- भावशवलता- भावप्रशमानामपि ग्रहणं भवति । अत्र संक्षेपतोऽनया दृशापि चर्चा समुचिता स्यात् ।

अनौचित्यप्रवृत्तत्वम् आभासो रसभावयोः ।[९९] इति शास्त्रवचनानुसारं यत्र

---

९६. ५०।२३, २४

९७. शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ।।
अनित्यत्वादिनाशेपवस्तुनिःसारता तु या ।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ।।
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसंगाद्यास्तस्योद्दीपनरूपिणः ।।
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।
निर्वेदहर्षस्मरणमतिभूतदयादयः ।। (सा०द०, तृ० ५०)

९८. हर० ६।१७०

९९. सा०द०, तृ०

रसभाव-विषयकमनौचित्यं भवति तत्र रसाभासो भावाभासश्च कथ्यते। तिर्यग्गादिगतशृङ्गारस्य वर्णने शृङ्गाराभासो भवति। एतादृशानि वर्णनानि प्रायेण पञ्चमसर्गेऽन्यत्रापि च प्राप्यन्ते। तथा हि :

पपीतरां प्रियतमया समं मधु प्रतिक्षपं दलशयनेष्वशेत यः।
रसायुषः शशिधर ! तस्य साम्प्रतं समञ्जसं सह कुमुदेन बन्धनम् ॥[100]

अत्र रसायुषः=भ्रमरस्य एव प्रियतमया सह शृङ्गारोपनिबन्धनं 'शृङ्गाराभास' कोटावेव समायाति। शिव- चण्डीस्तुत्योः कविनिष्ठभगवद्विषयकरतिभावः स्पष्ट एव। भावाभासस्तु भगवत्प्रबोधननाम्नि सर्गे भगवतः शङ्करस्यास्मिन् वर्णने वर्तते :

इति गिरमुपकर्ण्य प्रेयसीबाहुबन्ध-
व्यतिकरकृतरत्नावापकव्यक्तचिह्नम्।
असकलशशिमौलिः कण्ठपीठं दधानः-
सुरभिपरिपलाङ्कं हेमपर्यङ्कमौज्झीत्॥[101]

अस्मिन् श्लोके कविनिष्ठभगवद्विषयको रतिभावोऽनौचित्यतया प्रवर्तमानो भावाभासश्रेण्यामेवागच्छति। एकस्य भावस्य स्थाने भावान्तरस्योत्पत्तिर्भावोदयः—"भावोदयो भावस्योत्पत्तिः"[102] इति तल्लक्षणात्। केनापि नायकेन सपत्न्या नयनयोर्यः पुष्पपरागः फूत्कृतैर्दूरीकृतस्तेनैव समीपस्थितायाः प्रतियुवतेर्नयनयुगलं कालुष्यं दूरीचकार, रक्तवर्णतां प्रपेदे :

कान्तायाः कुसुमरजो विलोचनस्थं यत्प्रेयान् वदनसमीरणैर्निरास्थत्।
तेनैव प्रतियुवतेः समीपभाजः कालुष्यं युगलमनायि दूरमक्ष्णोः॥[103]

अत्र प्रियतमेन सपत्न्या विलोचनयो रजोदूरीकरणमुद्दीपनविभावः, स्वनयनयोः कालुष्यस्यापनयनमनुभावः, रोषो व्यङ्ग्यः। अत्र प्रेम्णः स्थाने रोषस्योदयाद्भावोदयोऽयम्। यद्वा :

दयितमतिरुषा विलोकन्त्याः सरसविपक्षनखक्षताङ्कितानम्।
अभवदरुणिताक्षिण तत्र नूनं निवसति चित्तभुवः प्रतापवह्निः॥[104]

---

१००. २६।३१
१०१. २६।६३
१०२. रसगंगाधरः, पृ० १२३
१०३. हर० १७।८७
१०४. तदे। २८।६८

अत्रापि पूर्ववद् रोषोदयः। भावसन्धि-भावशवलतयोर्मनोहारि चित्रणं चत्वारिंशे सर्गे युद्धप्रयाणोन्मुखानां सैनिकानां प्रियतमानां चित्रणे समुपलभ्यते। विस्तृतमप्युद्धरणं विच्छित्त्यतिशयादधस्ताद्दीयते :

तावत्प्रतीतमनसि प्रधनोत्सवाय,
दर्पाद्विनिर्जितरिपौ भटचक्रवाले।
वालाजनो बलवदाकुलतां जगाम,
तत्कालसम्भ्रमविलोलविलोचनश्रीः ॥
संस्तम्भिता अपि तु मङ्गलभङ्गभीरो-
र्भीरोर्विषादवशशून्यधियस्तदाक्षाः ।
निर्धौतकज्जलविधूसरिता निरीयु-
रिन्दीवरान्मधुकरा इव बाष्पलेशाः ॥
आधीयमानमतिसंभ्रमवेपमान-
वित्रस्तबाहुलतया बुबुधेऽन्तरायम् ।
प्रस्थानमङ्गलविधानमपि प्रवीरः
संग्रामरागरभसोल्लसचित्तवृत्तिः ॥
बद्धस्पृहं दयितया करवालयष्टि-
रालोकिता भटजनस्य करप्रतिष्ठा।
प्राप्ता शितित्वमधिकं तदपाङ्गभासा-
धौतेव तत्क्षणमराजत विस्फुरन्ती ॥
पत्यौ रणाय चलिते गुरुशोकवृत्ते-
र्वामभ्रुवः सपदि कार्श्यदशां व्रजन्त्याः ।
माणिक्यकम्बुरवनौ पतितः कराग्रा-
ल्लावण्यचन्द्रपरिवेष इव व्यराजत् ॥
वक्त्रं विलोकयितुमूढरसा चिराय-
पत्युर्वधूर्निहितमङ्गलरोचनार्द्रान् ।
दोदूयमानहृदया सविशेषमेव-
सिद्धार्थकान् रचयति स्म ललाटपट्टे ॥
आलिङ्ग्य गाढमपरा परिचुम्बतोऽथ-
वक्त्रं प्रियस्य समराय विनिर्यियासोः ।
उष्णोष्णनिःश्वसिततत्क्षणगाढशुष्क-
ताम्बूलपङ्करसमोष्ठयुगं चकार ॥

गुप्तिस्तनोरिति कृतादरबन्धमादौ,
स्पर्शामृतव्यवधिरित्यपि साभ्यसूयम् ।
भावद्वयाश्रयिमनाः परिरम्भ इत्थ–
मैक्षिष्ट नर्मदयितस्य वधूः पिनद्धम् ।

भावशान्तिर्यथा :

चुम्बत्यपोढरसविभ्रममाननेन्दु–
मुत्तानितं हठकचग्रहणेन कान्ते ।
उत्सार्यमाण इव निश्श्वसितानिलेन–
मानः क्षणान्निरगमद् हृदयात्पुरन्ध्रेः ।।[१०५]

कविः साहित्यशास्त्रस्य पण्डितोऽस्ति । अस्मादेव स स्थाने-स्थाने स रसाभिव्यञ्जनविषयिणीं विच्छित्तिमभि सङ्केतं करोति । एकत्र[१०६] 'रसभाव–सङ्करोऽभूत्' इति कथयता तेन रसपद्धतिं प्रति सङ्केत कृतः ।

रस-विरोध-परिहारस्य 'रसान्तरेणान्तरितो नैरन्तर्येण यो रसः'[१०७] इति यः प्रकारः साहित्याचार्यैर्निदिष्टस्तस्य प्रशस्तान्युदाहरणानि चतुर्दशसर्गस्य ४१–४६ श्लोकेषु प्राप्यन्ते । एषु श्लोकेषु बीभत्स-शृङ्गारयोरन्तरे वीररसः महता कौशलेन सन्निवेशितोऽस्ति । पुष्पहासो ब्रूते :
वीराणां जयघोषणा रिपुस्त्रीणां स्तनतटाहतिपुरस्सरं क्रन्दितेन भवति, प्रहारेण चोत्थितैः रेणुभिरङ्गरागो विधीयते (१४।४१)खड्गकर्तितमुण्डालाभिः हारावल्यो विरच्यन्ते, प्रचण्डपवनास्फालितैर्गृध्रपक्षपवनैश्च पवनान्दोलितानि (४२), प्रहारेण मूर्छितस्य भटस्याननरुधिरेण ताम्बूलरचना क्रियते, समूहबद्धानां शृगालीनामालिङ्गनेन प्रियतमानामालिङ्गनसुखानि प्राप्यन्ते (४३), शोकेन हेतुना दैन्यपूर्वकं रोदनाश्रुबिन्दुभिराह्लादजन्या बाष्पजलबिन्दवः, प्रेतसैनिकजनानामानकानां=पटहानाम्, आरवैः, जयघोषपरायणानां दुन्दुभीनां स्वरा अनुभूयन्ते (४४), शवानामुपरि भ्रमतां पक्षीणां पक्षपुटानां छायया छत्रधारणक्षणोऽनुभूयते, फेरूणां= शृगालानामाननेष्ववलम्बिनीभिर्मन्त्ररज्जुभिश्च जय–मङ्गलस्रजः पिनध्यन्ते (४५), नीलकमलानुकारिभिर्बाणैः कामविलासानामनुभूतिः क्रियते, वार्णैर्भिन्नकुम्भानां गजानां मुक्तावलिभिश्चाननविकासो भवति (४६), संग्रामजन्यस्वेदबिन्दुभिर्मोहनकालिकाः = सुरतकालिकाः, वारिविप्रुषस्तुल्यन्ते,

१०५. हर० २७।३८
१०६. तदेव २७।२३
१०७. काव्यप्रकाशः, ७।६४

शस्त्रैश्छिन्नानां भटानां रुधिरेण हरिचन्दनचर्चा क्रियते (४७), संस्थिताप्लववारिसंचयैः=संस्थिताप्लवनं = मृतस्नानं, तस्यार्थं संचितैर्जलैरभिषेकः, शत्रूणां दुःखदैन्याक्रन्दपरिपूर्णैः शब्दैर्माङ्गलिकमृदङ्गानां ध्वनयोऽनुभूयन्ते (४८), शस्त्राणां प्रहारेण संजातया दीर्घनिद्रया = मूर्छया प्रातःकालिकबोधविभ्रमस्य =स्वापस्यानुभवः क्रियते, वैरिबन्दिनां सस्वरैर्निगडैः स्वदयितानां नूपुराः सस्वराः प्रतिभान्ति (४९) ।[१०८]

रत्नाकरस्य रसाभिव्यञ्जनक्षमतां स्थालीपुलाकन्यायेन वीक्ष्यैतन्निश्चप्रचततया कथयितुं शक्यते यत्स रससिद्धः कवीश्वरोऽस्ति । अयं प्रश्नः पृथगस्ति यत्तेन यत्र क्वचिदङ्गभूतानां रसानामतिविस्तृततया वर्णनं कृतमस्ति परमत्र तात्कालिककाव्यकलाया आदर्श एव दोषभाक् । एतादृशी असन्तुलिताऽवस्था प्रायेण शृङ्गाररसेन साकमेवास्ति । अंगस्यापि सतस्तस्य वर्णनमतिविस्तृतया कृतम् । तत्पृष्ठभूमिरूपेण वर्णनान्तराणि यथा कृतानि तेषां सङ्केतो विगध्याये कृतोऽस्ति ।

अत्र संक्षेपत इदमेव कथनीयमस्ति यद् रत्नाकरः रसप्रवणः कविरस्ति । रसप्रधानेषु स्थलेषु यदि स स्वयमेव नेच्छति तर्हि काप्यशक्तिस्तं रसनिष्पादनाद-

---

१०८. आहतस्तनतटारिसुन्दरीक्रन्दितेन जयशब्दघोषणाः ।
सम्प्रहारधरणीतलोत्थितैः रेणुभिश्च पटवासपांसवः ॥
खड्गकृत्तभटकण्ठमण्डलैर्निर्मलाश्चमणिहारयष्टयः ।
चण्डमारुतरयप्रवर्तिभिर्गृध्रपक्षपवनैः प्रकीर्णकाः ॥
घातमूर्छितभटाननसृजा नागवल्लिदलरागसम्पदः ।
बद्धसम्मदशिवोपगूहनैर्गाढभीरुपरिरम्भविभ्रमाः ॥
शोकदीनरुदिताश्रुबिन्दुभिर्ह्लादबाष्पजलशीकरोत्कराः ।
प्रेतसैनिकजनानकारवैः संप्रहारजयदुन्दुभिस्वनाः ॥
छायया शकुनिगण्डलोत्थया छत्रधारणविडम्बनक्रमाः ।
फेरवाननगतान्त्रमण्डलीदामभिश्च जयमङ्गलस्रजः ॥
नीलनीरजदलोज्ज्वलाननैर्मार्गणैः स्मरविलासशेखराः ।
बाणभिन्नकरिकुम्भमण्डलीमौक्तिकोत्करकरैः स्मितोद्गमाः ॥
संयुगश्रमजलच्छटाकणैर्मोहना विरलवारिबिन्दवः ।
हेतिभिन्नभटदेहमण्डली शोणितेन हरिचन्दनद्रवाः ॥
संस्थिताप्लवनवारिसंचयैरुच्छलद्भिरभिषेकविप्रुषः ।
दुःखदैन्यपरिदेविताक्षरैर्मन्द्रमंगलमृदंगनिःस्वनाः ॥
सम्प्रहारमुखदीर्घनिद्रया प्रत्युषःसमयबोधविभ्रमाः ।
वैरिबन्दिनिगडैः सनिःस्वनैः सारवा निजपुरन्ध्रिनूपुराः ॥ (तदेव १४/४१-४९)

वरोद्धुं न ईष्टे। वीररसस्य तु सोऽप्रतिमः कविरस्ति। अस्यां दिशि तं कश्चिदप्यतिशयितुं न क्षमः।

रसाभिव्यञ्जनायां तस्य शैवाद्वैतपरा मान्यतैव मूलाधारः। तत्राणुर्मायीयबन्धनान् परित्यज्य शिवरूपतां प्राप्नोति। तत्र च सामरस्यं महायोगविमर्शापरपर्यायमानन्दमनुभवति। 'आनन्दो ह्ययं न लौकिकसुखसाधारणः, अन्तःकरणवृत्तिरूपत्वात्।'[१०९] इमां तत्वाभिनिवेशिनीं भूमिमधिरूढं तदीयं काव्यं चित्रकवीनां काव्यानाञ्च कृते दिशमुपदर्शयन्निवाभाति।

---

१०९. रसगंगाधरः (प्र० आ०)

नवमोऽध्यायः

# हरविजये दोष-दर्शनम्

यथा सर्वाङ्गसुन्दरमपि वपुरेकेनापि कुष्ठादिदोषेण न शोभते तथैव सुन्दरमपि काव्यं सदोषं नानुरञ्जयति सचेतसां चेतः। "स्याद्वपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगम्।" इति न्यायात्।

अथ कोऽयं दोषः? इत्याशङ्कायां मम्मटः प्राह :

मुख्यार्थहतिर्दोषः, रसश्च मुख्यस्तदाश्रयाद्वाच्यः।
उभयोपयोगिनः स्युः शब्दाद्यास्तेष्वपि सः॥[१]

परं हतेरर्थस्तु विनाशो भवति, रसस्य तु नित्यस्वरूपस्य कदापि विनाशो न भवति? तस्यादनुचितमिदं लक्षणम्, इति शङ्का तु न कार्या, 'हति' शब्दस्यापकर्षवाचित्वाद्,— उद्देश्यप्रतीतिविघातलक्षणापकर्षमूलत्वाद्वा। अस्मिन् विषये वालवोधिनीकारस्य विवेचनं ध्यातव्यं वर्तते :

'ननु' 'हति' विनाशः, न च दोषेण रसो नाश्यते दुष्टेष्वपि रसानुभवात्। तस्मादलक्षणमेतदिति चेन्मैवम्, 'हति' शब्दस्यापकर्षवाचित्वात्। नन्वेवं रसानुत्पत्तिप्रयोजकेषु च्युतसंस्कृत्यादिष्वव्याप्तिः। अथानुत्पत्तिरेव 'हति'–शब्दार्थः, तर्हि यत्र रस उत्पद्यत एव परं त्वपकृष्यते तत्र श्रुतिकटुप्रतिकूलवर्णादावव्याप्तिः। तदेतल्लक्षणमतिदरिद्रदम्पत्योः कृशतरनिशावगुण्ठनीयवसनमिवैकेनापकृष्यमाणमपरं परिहरति। किञ्चार्थरूपस्य मुख्यार्थस्यानुत्पत्तिरपकर्षो वा न दोषाधीन इति।

अत्र ब्रूमः—'उद्देश्यप्रतीतिविघातलक्षणोऽपकर्षो हति'- शब्दार्थः। उद्देश्या च प्रतीतिः रसवत्यनवलम्बितानप्रकृष्टविषया च। नीरसे त्वविलम्बिता चमत्कारिणी चार्थविषया। तथा च तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम्।

१. मम्मटः, काव्यप्रकाशः, उ० ७, सू० ७

यतो दुष्टेषु कस्यचिद् रसस्याप्रतीतिरेव क्वचित्प्रतीयमानस्यापकर्षः, क्वचिद्-विलम्वः। एवं नीरसे क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिरेव क्वचिद्विलम्वेन प्रतीतिः, क्वचिदचमत्कारितेत्यनुभवसिद्धमित्युद्देश्यप्रतीत्यनुत्पादो व्यक्त एव। तद्विघातकता च कस्यचित् साक्षात् यथा रसदोषाणां स्वशब्दवाच्यादीनाम्। रसापकर्षकाणामपि तेषां प्रकृष्टरसव्यंजकत्वभावोऽस्त्येव। कस्यचित्परम्परया यथा, शब्दार्थवर्णरचना दोषाणाम्। तेष्वपि कस्यचिदर्थोपस्थितेरभावाद्, यथाऽसमर्थत्वादेः। कस्यचिद् वाक्यार्थवोधाभावाद्, यथा च्युतसंस्कृत्यादेः। कस्यचित्तत्र विलम्वात्, यथा क्लिष्टत्वादेः। कस्यचित् सहृदयवैमुख्यव्यग्रताद्यापादनेन, यथा निरर्थकत्वादेः। कस्यचित् विरोध्युपस्थापनेन, विपरीतार्थोपस्थापनेन वा, यथामतपरार्थविरुद्धमतिकृत्वादेरित्याद्यूह्यम्। विधातकत्वं च कस्यचिज् ज्ञातस्य, यथा व्याहतत्वादेः। यस्य पूर्वमुत्कर्षोपकर्षो वर्णितौ तस्याग्रं तद्वैपरीत्यं चेद् व्याहतः। कस्यचित्स्वरूपस्य एव यथा निहतार्थत्वादेः। एवं चेदं दोषसामान्यलक्षणम् - 'उद्देश्यप्रतीतिविघातलक्षणो दोषः' इति।[2]

ते च दोषाः प्रथमतो द्विविधाः - शरीरगता, आत्मगताश्च। काव्यशरीरं च शब्दार्थरूपतया, पद-पदांश-वाक्य-अर्थरूपेण चातुर्विध्यं भजमानं तत्र–तत्र काव्येषु दृश्यते। आत्मा च रसादिरूपेणाभिमतः। अतो रसदोषा आत्मदोषतयान्वाख्याताः। निष्कर्षरूपेण काणत्वखञ्जत्वादयो दोषा यथा साक्षात्सम्वन्धेन शरीरं दूषयन्ति, परम्परया चात्मानम्, तथैव साक्षात् सम्वन्धेन शब्दार्थरूपं काव्य-शरीरं दूषयन्तो दुःश्रवत्वादयो दोषाः काव्यात्मानं रसमपि दूषयन्ति। रसगताश्च दोषाः साक्षात्सम्वन्धेन काव्यात्मानं रसमेव दूषयन्तीत्यादिकं सिद्धान्तमालोच्यैव दर्पणकृता विश्वनाथेनोक्तम् :

रसापकर्षका दोषाः, ते पुनः पञ्चधा मताः।
पदे, तदंशे, वाक्येऽर्थे, सम्भवन्ति रसेऽपि यत्॥[3]

एते सर्वेऽपि दोषाः द्विविधाः—नित्या अनित्याश्च। येषां कोऽपि परिहारप्रकारो नोपलभ्यते, ते तु नित्याः, यथा च्युतसंस्कृत्यादयः। येषां च समाधानं कथमपि कर्तुं शक्यते तेऽनित्या भवन्ति, यथाऽप्रयुक्तत्वादयः।

'दुःश्रवादयः पदगता वाक्यगताः पदांशगताश्च भवन्ति।'

'प्रतिकूलवर्णत्वादयः केवलं वाक्यमेव दूषयन्ति अतस्ते वाक्यमात्रगाः कथ्यन्ते।'

---

२. वामनाचार्य झलकीकरः, काव्यप्रकाशस्य वालवोधिनी टीकायाम्, पृ० २६४-६५

३. सा०द०, ७।५६२-६३ (श्री जीवानन्द विद्यासागर-सम्पादितः)

'अर्थदोषाश्च अपुष्टादयोऽर्थमात्रदूषकाः सम्पद्यन्ते ।'
'रसदोषा पुनः स्वशब्देन रसाद्युक्तौ रसं दूषयन्ति,
अतएव ते रसदोषतया प्रसिद्धाः ।'[४]

केवलं व्याकरणदृशा शुद्धान्येव पदान्यदोषभाञ्जि भवितुं न शक्नुवन्ति । कोषादिप्रमाणैः शुद्धान्यपि पदानि सदोषानि सञ्जायन्ते यदि तानि कविभिस्तथा न प्रयुज्यन्ते । यथा :

'पद्मान् हिमे, प्रावृषि खञ्जरीटान् ।'[५]

इत्याद्यनवद्यमपि श्रीहर्ष-पद्यं सावद्यमित्यालोचयन्ति सहृदयाः, यतो हि कोष-प्रामाण्याच्छुद्धेऽपि 'पद्म'–शब्दस्य पुंस्त्वे, काव्ये क्लीबत्वेनैव तस्य ग्रहणात् ।

सारश्चायं वर्तते यत् कविना पद-पदांश-वाक्यार्थादीनां प्रयोगेऽत्यन्तं सावधानेन भाव्यम् । जातुजातेनापि दोष-लेशेन सहृदय-समाजे तस्य गर्हणैव जायते ।

सत्यप्येतस्मिन् महदुत्तरदायित्वं वहतां कवीनां काव्येषु दोषाः समागच्छन्त्येव, मानवस्य सदोषत्वात् । परं बहवो दोषास्तु तैः स्वानन्यव्युत्पत्तिप्रकाशन-प्रयत्ने स्वयमेवोत्पाद्यन्ते । रत्नाकरस्य सम्बन्धे इयमेव वार्ता सत्यास्ति । अस्मिन्नध्याये हरविजयस्य दोषाणां सम्बन्धे विवेचनं कृतं स्यात् ।

## (१) अनुचितार्थः (अनौचित्यम्)

'अनुचितोऽर्थोऽनुचितार्थः' । येनार्थस्यानुचितता प्रतिपाद्यते तदनौचित्यम् । सूक्ष्मदृशावलोकनेनानौचित्यमेव सर्वेषामुपद्रवाणां मूलम् । औचित्यमुज्झितवतां काव्येष्वेव दोष-परम्पराः स्वच्छन्दं प्रसरन्ति । किमिदमौचित्यम् ? इति जिज्ञासायामाह क्षेमेन्द्रः :

उचितं प्राहुराचार्याः सदृशं किल यस्य यत् ।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते ॥[६]

औचित्यस्य क्षेत्रमत्यन्तं विस्तृतमस्ति । एतस्य त्यागाद् या दशा लोके भवति मनुजानां, सैव सञ्जायते काव्येऽपि कवीनाम् ।[७] अतएव कवीनां कृते औचित्यो-पनिबन्धनमनिवार्यत्वेनोपदिष्टम् :

अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् ।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥

---

४. तदेव, ७।५९४–९७

५. नैषधीयचरितम्, १०।१२०

६. क्षेमेन्द्रः, 'औचित्य-विचार-चर्चा' ।

७. अदेशजो हि वेषस्तु न शोभां जनयिष्यति ।
मेखलोरसि बन्धे च हास्यायैवोपजायते ॥ (भरतनाट्यशास्त्रम् २३।६९)

परमौचित्यपालने के वा सर्वथा सफलाः सञ्जायन्ते ?

हरविजयेऽप्ययमेव दोषः सर्वतोऽधिकमुजृम्भमाणो दृश्यते। स च प्रायशः पाण्डित्य-प्रदर्शन-प्रवृत्तेर्हेतुनैव समायातः। यमक-निबन्धने, श्लेषप्रयोगे वा दोषोऽयमधिकतया मुखरः। एतादृशेषु स्थलेषु कविरनौचित्यं विचारयत्येव न। यथा पञ्चमे सर्गे भगवन्तं शिवमुद्दिश्य नन्दिकृत-मन्दर-वर्णन-प्रसङ्गे :

(क) अस्योल्लसत्कुसुमवासन-भृङ्गपंक्ति–
वेणीलतं मणितटेषु रतिं वितन्वन्।
वल्लीपुरन्ध्रिपटलं घटिताभिराम–
वृक्षाधिरूढकमुपैति परामभिख्याम्॥[८]

अत्र वल्लीनां वृक्षारोहणमुक्तम् तच्च 'वृक्षाधिरोहणकाख्येनालिङ्गनभेदेन' प्रमदापक्षेऽपि श्लेषवलेन लगति। अस्यार्थश्च-विकसितकुसुमवासनया भृङ्गपंक्तिराकृष्टाऽत्रायाति। अस्य मणितटेषु रतिं वितन्वन् लता-नायिका-समूहो वृक्षाधिरोहणं करोति। प्रमदा इव। ता अपि वासनया मणितं (अव्यक्तध्वनिं) कुर्वन्त्यो 'वृक्षाधिरोहणक'- नामालिङ्गनभेदं प्रयुञ्जते। तल्लक्षणं च—'चरणेन चरणमाक्रम्य द्वितीयेनोरुदेशमाक्रमन्ती वेष्टयन्ती वा तत्पृष्ठसक्तैकबाहुर्द्वितीयेनांसमवनमयन्तीषन्मन्दसीत्कृतकूजिता चुम्बनार्थमेवाधिरोढुमिच्छेदिति वृक्षाधिरूढकम्।[९] एतदेव चार्थः श्लोकबद्धः :

आक्रम्य पादं चरणेन पत्युरूरुं द्वितीयेन समाश्रयन्ती।
किञ्चिच्च खिन्नश्वसितं, रुतानि वितन्वती चुम्बनलालसैव॥
ईहेत यद्वृक्षमिवाधिरोढुं, वृक्षाधिरूढं तमिहामनन्ति॥

एतादृशं वर्णनं शिवभट्टारकसेवायां करणमनुचितम्। यथावा :

लक्ष्मीरिहामरगिरेः कलधौतहर्म्यैः
साधूनितानवरतारमणीष्टकान्तैः।

---

यथा वा :

कण्ठे मेखलया, नितम्बफलके तारेण हारेण वा,
पाणौ नूपुरबन्धनेन, चरणे केयूरपाशेन वा।
शौर्येण प्रणते रिपौ करुणया नायान्ति के हास्यताम्?
औचित्येन विना रुचिं प्रतनुते नालंकृतिर्नो गुणः॥
(क्षेमेन्द्रः, औचित्यविचारचर्चायाम्)

८. हर० ५।३३
९. कामसूत्रम, अधि० २, अ० २, सूत्रम् १६

लीला रहस्यधिगता च गुणानखेदै,
साधूनिता नवरता रमणीष्टकान्तैः ।।[१०]

नंदी कथयति—"हे अनवर ! सर्वोत्कृष्ट ! (शिव) इह पर्वते तारमणीकान्तैः=ताराः=भास्वन्तो मणिमयीनामिष्टिकानामन्ता येषु तैः कलधौतहर्म्यैः, अमरगिरेः=मेरोरपि, सा, लक्ष्मीः=श्रीः, धूनिता=तिरस्कृता । अत्र नरहसि=एकान्ते रमणीभिः, इष्टकान्तैः=स्वाभिलषितसहचरैः, साधूनिता=साधून्=श्रेष्ठान् गुणान् इता=प्राप्ता, नवरता=अद्भुतसुरता च लीला अधिगता ।" एतादृशं वर्णनमनुचितमेव यथावा—२६ तमे सर्गे सौखशायिकानां शिवप्रबोधनावसर एतदुद्दीपकं वर्णनम् :

(ख) भुजलतामशिथिलकण्ठवर्तिनीं, रतोत्सुका दयिततमस्य कुर्वती ।
विजृम्भते किल विनिमग्नपीवरस्तनद्वया तदुरसि मत्तकाशिनी ।।
रतोत्सवप्रमदविशेषपीवरे पराप्नुयात् कथमिव तेऽत्र मेखला ।
नितम्ब इत्यभिदधदुच्चकैः शुकः सहासतामुषसि करोति सुभ्रुवः ।।
न लाघवं वलनविलासविभ्रमे विलोकितं क्वचन मयेदृशं तनोः ।
कलारवैर्वदति नितम्बमण्डले नियोजिता मधुरमितीव मेखला ।।
निशीथिनीं समतिवाह्य कामिना व्रजत्यसावुषसि मुहुः स्खलन्त्यपि ।
तदुत्सुका गलितधृतिः प्रतिक्षणं निरीक्षते विवलितकन्धरं वधूः ।।[११]

एतादृशे वर्णने कविर्वक्तृबोधव्यादिकं मनागपि न विचारयति । एवमेव—'चण्डेश्वरदण्डोपन्यास'-नाम्नि त्रयोदशे सर्गे संग्रामभूमेर्वृन्दावनेन साकं तुलनायाम् :

(ग) संग्रामभूमिरधुना भुवनाधिनाथ वृन्दावनस्थितिरिवास्तु सुरासुराणाम् ।
विस्पष्टपीतवसनादरतातिगाढरक्ताङ्कनोचितशिवाभिमतं व्रजन्ती ।।[१२]

चण्डेश्वरः कथयति -'हे भगवन् ! सम्प्रति भवदादेशात् संग्रामभूमिर्वृन्दावनस्य शोभामिव धारयतु । कथम् ? विस्पष्टपीतवसनादरतातिगाढरक्ताङ्कनोचितशिवाभिमतव्रजश्रीः (सती)=पीतवसः=अस्थिवसोऽनादराद् अत्यन्तं तर्पणाद् हेतोः, अतिगाढस्य रक्तस्य यद् अङ्कनं=गमनं तत्रोचितः, शिवानां=शृगालीनामभिमतानां=तासां प्रियाणां शृगालानामिति यावत्, व्रजः=समूहस्तत्सम्बद्धा विस्पष्टा शोभा यत्र तादृशी रणभूमिः । संग्रामभूमौ हि अस्थिवसोभ्यां

१०. हर० ५।१४६
११. हर० २६।४६–४६
१२. तदेव, १३।७५

सन्तुष्टाः शृगाल्योऽन्यत्र रक्तपानार्थं गच्छन्ति तत्र च स्व प्रियैः शृगालैः साकं तासां स्थितिर्दर्शनीया भवति—इत्यभिप्रायः ।

वृन्दावनस्थितिश्च—विस्पष्टः पीतवसनस्य=पीताम्बरस्य कृष्णस्यादरो यासां तासामत्यन्तमनुरक्तानामङ्गनानाम्=गोपीनामुचिता, शिवा, अभिमता च व्रजश्रीः=गोनिवाससमृद्धिर्यस्यां तादृशी भवति ।

अत्र संग्रामभूमिना वृन्दावनस्य साम्यमनुचितम् ।

(घ) एवमेव ४३ तमे सर्गे गणेशपराक्रमप्रसङ्गे सेनाया वेश्यया साकं तुलनेऽप्ययमेव दोषः । तद्यथा :

अभाजि नायकेनारेः प्रतिकर्मकृतस्थितिः ।
वेश्येव दधती सेना स्फुटकैतवसारताम् ।।[13]

नायकेन=गणेशेन अरेः प्रतिकर्मकृतस्थितिः=प्रतिरोधायोद्यता सेना अभाजि=भग्ना । कथमिव ? स्फुटकैतवसारतां दधती, वेश्येव । स्फुटः कैतवः=केतुसम्बन्धी सारो यस्यास्तद्भावता तां दधतीम् । वेश्या नायकेन सेविता, प्रतिकर्मकृतस्थितिः=कृतप्रसाधना, कैतवेन=छलेन सारतां च धारयन्ती ।

(ङ) तथा चास्मिन्नेव सर्गे चन्द्र-सूर्ययोर्विक्रमवर्णने :

करे परिव्राज इव प्रधनेऽधिकमण्डलौ ।
निशाकर-सहस्रांशू दैत्यान् क्रोधान् निजघ्नतुः ।।[14]

अत्र निशाकरसूर्यावधिकमण्डलौ = पूर्णबिम्बौ सन्तौ क्रोधाद् दैत्यान् निजघ्नतुः । कुत्र ? प्रधने=युद्धे । कीदृशे ? परिव्राजोऽधिकमण्डलौ=कमण्डलुवर्तिकरे=हस्ते इव ।

अत्र 'अधिकमण्डलौ' इत्यत्र श्लेषबलेन कृतोपमा दुष्टा । अस्मिन् श्लोके टीकाकर्तुरलकस्य टिप्पणी द्र्यातव्यास्ति—"एवमादौ चोपमानोपमेययोः शब्दमात्रेणापि साम्यसद्भावाद् उपमात्वं चिन्त्यम् ।"

(च) एवमेव दैत्यनायकेन भगवतः शङ्करस्य सेना रणान्तःपुरे 'नवनखराजिविदारितोरुदण्डा प्रियेव भेजे'- इत्युपमानप्रदानमनुचितम् :

दितिजसमिति नायकेन तस्मिन्नथ रणवासगृहे विलुप्यमाना ।
कुसुमशररिपोः प्रियेव भेजे नवनखराजि विराजितोरुदण्डा ।।[15]

(छ) तथा च, हर-सेना-प्रहरणैस्ताडितासुरसेनासमन्वितस्य रणस्य रतेन

१३. हर० ४३।३४३
१४. तदेव, ४३।१९९
१५. तदेव, ४६।३८

तुलनायामप्ययमेव दोषः । यथा :

तत्सेनायाः प्रहरणैश्चेतोहारि सुरद्रुहाम् ।
रणं तदासीत् क्षतिभिः परीतं रतसन्निभम् ॥[१६]

अथवा—मन्दर-वर्णने तस्य 'विपरीतरतेन' तुलनायाम् :

(ज) बद्धास्पदा गलितनिर्झरघर्मवारिनिर्धौतगण्डवदना कमठस्य पृष्ठे ।
यस्याकुलं सपुरुषायितविभ्रमेव मूर्तिर्नितम्बवलनेन जहार चेतः ॥[१७]

(झ) एवमेव—पार्वत्याः कृते एतत्कथनं "यत्तुङ्गकुचयोस्त्वेकावल्येवास्ति किन्तु मध्यभागे त्रिवली' चमत्कारोत्पादकं सदपि नानौचित्याद्विनिर्मुक्तम् :

एकावली विरचिता कुचमण्डलेऽत्र, तुङ्गत्वमीयुषि परस्परपीडनेन ।
तत्स्पर्धयेव सबलीत्रयतामवाप्तं, मुष्टिग्रहेऽपि शिथिलं दधतीति मध्यम् ॥[१८]

(ञ) तथैव—निद्रां त्यक्तवतो भगवतः शंकरस्यैतादृशं वर्णनमौचित्योपनिवन्धनाभावदूषितम् :

इति गिरमुपकर्ण्य प्रेयसीबाहुबन्ध-
व्यतिकरकृतरत्नावापकव्यक्तचिह्नम् ।
असकलशशिमौलिः कण्ठपीठं दधानः
सुरभिपरिमलाङ्कं हेमपर्यङ्कमौज्झीत् ॥[१९]

(ट) उपमानसम्बन्ध्यनौचित्यं त्वस्य बहुषु स्थानेषु प्रकाशते । प्रकृतिवर्णनमपि नास्माद्दोषाद्विनिर्मुक्तम् । यथा च— 'विस्रंसमान...... '(१९।२५), 'तरणिकिरण... ..'(२८।२३), 'उदयशिखरिशृङ्गवेदिकायाम्' (२८।८०) श्लोकेषु 'वस्तुवर्णन'शीर्षकेऽध्याये पृष्ठतः प्रदर्शितम् ।

(ठ) वक्त्राद्यनौचित्यमप्यत्र बहुशः स्थितम् । यथा शिव-सभायां तत्पार्षदानामुक्तिषु । प्रभोः सम्मुखे किमेतादृशी विकत्थना मुद्रा वोचिता ?

'प्राप्यक्रियासमभिहारमहं प्रकर्षपर्यन्तवर्तिनमुपोढ़तशैलशृङ्गान् ।
संहारमारुत इव प्रसभं क्षुणद्धिः संग्राम–सीम्नि तरसा सुरशत्रुशैलान् ॥[२०]
पिङ्गेक्षणस्फुरदकल्कमरीचिवलादुल्काग्निदाहमयविक्लवतामिवाप्तम् ।
भ्रूभङ्गपुञ्जितमधत्त ललाटपट्टमाघट्य कुट्टिमतलं चरणेन नन्दी ॥[२१]

---

१६. हर० ४३।२७१
१७. तदेव ४।५
१८. तदेव ४०।८
१९. तदेव २९।६३
२०. तदेव ७।४०
२१. हर० ७।४५

(ड) एवं च रसाभासोऽप्यनेकत्र दृश्यते । यथा शङ्करसभाक्षोभवर्णने :

सस्वेदशीकरमकम्पत तालकेतुराताम्रतालुतलभीषणजृम्भवक्त्रः ।
संकल्पनिर्जितपुरःस्थितवैरिलक्ष्मीगाढोपगूहनवशादुत तीव्रमन्योः ।।[22]

यथावा :

अर्धचन्द्रनखन्यासैरभियोगपटीयसा ।
अभाजि भूम्नाभीकेन सेना–सीमन्तिनी द्विषः ।।[23]

(ढ) कथानकसम्बन्ध्यनौचित्यं प्राक् प्रतिपादितमेव ।

## (२) कालविरुद्धता (इतिहास–विरुद्धता)

(क) यमकादि निबन्धनमोहे रत्नाकरः उपमानदाने इतिहासविरुद्धताया अपि विचारं न करोति । तद्यथा — इन्द्रपराक्रमप्रसङ्गे तस्य तुलनां भगवता बुद्धेन करोति । अन्धकासुर–संग्रामे बुद्धस्य स्थितिश्चिन्तनीया वर्तते :

तदा जिन इव स्पष्टवज्रासनरुचिर्मृधे ।
क्षमाधरगुरुर्दैत्यस्कन्धमाराज्जिगाय सः ।।[24]

(ख) यथावा — पुष्पदन्तविक्रमव्यतिकरे तस्य भीष्मेण सह तुलनायाम् :

भीष्मोऽप्यशान्तनवतां विदधार नदन् रणे ।[25]

(ग) अथवा — ४६ तमे सर्गे भीम–हिडिम्बयोः 'सङ्केते :

युधि भाग्निहतेन वैरिणा स हिडिम्बेन जटासुराजितः ।
अथ भीम इवाप्ययुङ्क्त तान् सहिडिम्बेन जटासुराजितः ।।[26]

एवमेव स्थाने–स्थाने माध्यमिकादि--परवर्ति--दर्शनधारणानामुल्लेखेऽप्ययमेव दोषः ।

## (३) अपुष्टार्थः

यत्र कस्यचिच्छब्दस्याप्रयोगेऽप्यर्थावगमे काचिद् बाधा नोदेति तत्र तत्प्रतिपादनाय यद्यन्यः कश्चित् शब्दः प्रयुज्यते तेन चार्थस्यापरिपोष एव क्रियते सोऽपुष्टार्थः । यथा — 'विलोक्य वितते व्योम्नि विधुं, मुञ्च रुषं प्रिये ।'[27] अत्र 'वितते, व्योम्नि' चेति पदद्वयं मानत्यागं प्रति किञ्चिदपि नोपकुरुरुते।मानापनयने तु चन्द्रदर्शनमेवोपयोगि न तु विततव्योमादिकत्वम् ।अस्मादत्रापुष्टार्थता।

२२. तदेव ७।२०
२३. तदेव ४३।१७७
२४. तदेव ४३।२९७
२५. तदेव ४३।१६
२६. तदेव ४६।१५
२७. सा० दर्पणे, लक्ष्मीटीकासहिते, पृ० ५२१–२२

अधिकपद – पुनरुक्त्योस्तु नास्य दोषस्यान्तर्भावः। यतो हि 'प्रयोजनान्तराभावात्तदर्थाविवक्षायामपि तत्पदाभिधानेऽधिकपदत्वम्। स्वरूपकथनार्थं प्रस्तुतानुपयोगिनोऽप्यर्थस्य विवक्षायामपुष्टार्थत्वमित्यनयोर्भेदः। ......... शब्दोपस्थिते पुनः शब्दानुपादान्न पुनरुक्तिरित्यर्थः, अर्थपुनरुक्तिश्चापुष्टार्थत्वमेवेति भावः।'[२८]

एष दोषोऽलकेन निम्नलिखिते श्लोके उद्भावितः :

स्पृशति तिग्मरुचौ ककुभः करै र्दयितयेव विजृम्भिततापया।
अतनुमानपरिग्रहया स्थितं रुचिरया चिरयायिदिनश्रिया ॥[२९]

अस्मिन् श्लोके तिग्मरुचेः = सूर्यस्य ककुभां = दिशां च कामिता प्रतीयते, दिनश्रियोऽपि च नायिकात्वं स्फुटं वर्तते। तदर्थं 'दयितये' त्युपमानपदमपुष्टार्थम्।

इदमत्रावधेयं यत्काव्यप्रकाशस्य दशमोल्लासस्यान्तिमे भागेऽप्यस्मिन् श्लोके दोषोद्भावनमनयैव दिशा कृतं वर्तते यतो हि 'परिकरानन्तरं' काव्यप्रकाशस्य पूर्तिरनेनैवालकेन कृतासीत्। तद्यथा — 'अत्र तिग्मरुचैः ककुभां च यथासदृशविशेषणवशेन व्यक्तिविशेषपरिग्रहणे च नायकतया नायिकात्वेन च व्यक्तिस्तथा ग्रीष्मदिवसश्रियोऽपि प्रतिनायिकात्वेन भविष्यतीति किं दयितयेति स्वशब्दोपादानेन?'[३०]

## (४) निरर्थकत्वम् :

पादपूरणाद्यर्थं कवयः प्रयुञ्जन्त्येव शब्दान् परं यत्र तेषामसङ्गतिः स्फुटं भासते तत्र निरर्थकता। यथा :

विदार्य दंष्ट्राङ्कुरकोमलत्विषा निशान्धकाराद्रिकुलं स्वलेखया।
विभर्त्यसावादिवराहविभ्रमं सदा तु लक्ष्मोद्वहनेन चन्द्रमाः ॥[३१]

अत्र 'तु' शब्दः। अयं हि अवधारणार्थे तु नैव मन्तव्यो यथा चालकेनोक्तम्। यतो हि पार्वणचन्द्रे 'विदार्य दंष्ट्राङ्कुरकोमलत्विषे'त्याद्यर्थः सङ्गच्छत एव न। अतः 'सदा' इत्यपि पदमनुपयुक्तम्। तस्मादवधारणं कस्य? अतोऽत्र निरर्थकता सुस्पष्टा।

## (५) न्यूनपदत्वम् :

अर्थप्रकाशने पदस्य न्यूनतया न्यूनपदात्वम्। यथा :

---

२८. का०प्र०, वालवोधिनीटीका, पृ० ३७९.
२९. हर० ३।३७
३०. का०प्र०, (उक्त संस्करणम्), पृ० ७८६.
३१. हर० २।१९

नृत्यत्परिक्रमभरानतभूमिपीठनिष्पिष्टरत्नशिरसं खलु मा कृथा माम् ।
भस्मावदात इति शेष इवेन्द्रमामौलैर्भोगी बभौ कटकितश्चरणाग्रलग्नः ।।[३२]

'भगवान् शंकरः कदाचित्ताण्डवप्रवृत्तो मम शिर एव न पेषयेद्, इति चिन्तयित्वैव, मन्ये, भस्मसितः कश्चित् सर्पः शेष एव, स्वरक्षार्थमभ्यर्थयन् शिवस्य चरणाग्रलग्नो बभूव !'–इत्यभिप्रायवत्यस्मिन् श्लोके द्वितीयपंक्तौ 'माम्' इत्यस्यानन्तरम् 'इति' पदस्य प्रयोगः करणीयः । स च न कृतः, अतो न्यूनपदता ।

## (६) अप्रयुक्तत्वम् :

'तथा प्रसिद्धावपि कविभिरनादृतत्वम्'[३३] इति हि — अप्रयुक्तत्वस्य लक्षणम् । व्याकरणदृशा शुद्धा अपि कविभिरुपेक्षिताः शब्दा यत्र प्रयुज्यन्ते तत्रायं दोषः ।

यथा :

भास्वच्छविर्भुवनवेश्मगतः शशाम यावत्पतङ्गपतनाद्दिवसप्रदीपः ।
तावत्कुतोऽप्युदभवन्नयनोपघातदक्षं मषीमलमलीमसमन्धकारम् ।।[३४]

इत्यत्र,

अभ्युद्गते शशिनि शङ्खदलावदात पेङ्खन्मयूख रचितांबरदिग्विभागे ।
तापिच्छनीलमभवद् विवरानुसारि, वैभावरं विगलदम्भ इवान्धकारम् ।।[३५]

इत्यत्र च 'अन्धकार' शब्दस्य क्लीबत्वे न प्रयोगः । शब्दो ह्ययं पुंस्येव प्रयुज्यते कविभिः ।

## (७) अप्रतीतत्वम्

'एकदेशमात्रप्रसिद्धत्वम्' अप्रतीतस्य लक्षणम् । यत्र शास्त्रविशेषपारिभाषिकतया प्रसिद्धाः शब्दाः कविना प्रयुज्यन्ते तत्राप्रतीत्वम् । अयं दोषः सर्वाधिकतया हरविजयेऽस्ति । रत्नाकरः स्वकीयं प्रकाण्ड–पाण्डित्यं प्रकाशयितुं यदृच्छयैव विविधानां पारिभाषिकाणां शब्दानां प्रयोगं हेलयैव करोति । एतादृशानां श्लोकानां संख्या शतकेषु वर्तते । अस्माभिस्पूर्वभागे तस्य वैदुष्यस्य चर्चाऽवसरे बहून्युदाहरणानि दत्तानि, अत्र कलेवरवृद्धिभयात्, पुनरुक्तिभयाच्च दिङ्मात्रमुदाह्रियते :

---

३२. तदेव २१।५३
३३. सा० दर्पणः, परि ७
३४. हर० १९।३७
३५. तदेव २०।३५

(क) अपार्थतादोषपरीतमक्रमं ससंशयं सन्धिविहीनतां गतम् ।
न देशकालादिविरोधि पण्डितैः प्रशस्यते कार्यमसाधुकाव्यवत् ।।[३६]

अथवा :

(ख) प्राप्ता विशुधिमधिकां परिणामरूप वन्ध्याश्रिता प्रकृतिभोगनिर्गलत्वम् ।
उर्वीधरस्य चितिशक्तिरिवापचारशून्या भवत्यनिशमप्रतिसंक्रमा श्रीः ।।[३७]

— अत्र योगदर्शनस्य,

(ग) प्रत्यज्ञायि प्रसरता वीरेणाजावदन्तता ।
नैर्गुण्यमाशु भजतः पिवेरिव विषाणिनः ।।[३८]

अत्र व्याकरणस्य च पारिभाषिकानां शब्दानामव्याहतरूपेण प्रयोगः ।

(८) क्लिष्टत्वम्

अनन्तरमेवोक्तादप्रतीतत्वरूपाद् दोषात् काव्ये क्लिष्टताप्यतिमात्रं समायाता । विशेषतश्चित्रकाव्यवर्णनप्रसङ्गे एतस्याप्युदाहरणानि कलापक्ष–विवेचने 'चित्रकाव्यनिरूपण' – प्रसङ्गे बहूनि दत्तानि, अतस्तत एवोन्नेयानि । अत्र तु केवलं दिङ्मात्रमेवोदाह्रियते :

कृतकामोऽथ गोभर्ता सव्यूढकमलासनः ।
भूतिधाम परं भजे शम्भुः शम्भुरिवापरः ।।[३९]

अयमर्थत्रयवाची श्लोकः ब्रह्मा-विष्णु-महेश-पक्षेषु लगति । अस्य व्याख्या तूक्ता प्राक् ।

एतादृशैः क्लिष्टैः श्लोकैः काव्यमिदं विदुषामपि शिरस्सु शूलमुत्पादयति ।

(९) अश्लीलत्वम्

श्रियं लातीति श्रीलः । श्रियं न लातीत्यश्रीलः । अश्रील एवाश्लीलः । स च व्रीडा -जुगुप्सा - अमङ्गल - व्यञ्जकत्वात् त्रिविधः ।

एष्वस्मिन् काव्ये व्रीडा–व्यञ्जकस्याश्लीलस्य बहून्युदाहरणानि । सप्तविंशे सर्गे त्वालंकारिकाणां मान्यतानुसारं दोषोऽयं सुरतवर्णनकरणाद् दोषकोटौ कदाचिन्नायात् परं यत्र-तत्र 'नीविविमोक्षण-कथां' कामसूत्रानुसारिवर्णनं त्वसौविध्यं जनयत्येव । एतादृशानि स्थलानि दर्शं-दर्शं 'काव्यालापांश्च वर्जयेद्' इत्यभियुक्तोक्तिरन्वर्थैव प्रतीयते । काव्यस्येमानि स्थलानि सार्वजनिकरूपेण कश्चिदपि पठितुं

---

३६. हर० १२।३२
३७. तदेव १२।७५
३८. तदेव ४३।१०
३९. हर० ४३।२९२

न शक्नोति। सङ्केतमात्रेण पूर्वोक्तं 'भुजलतामशिथिलकण्ठवर्तिनीम्' इत्यादि (२९।४६) श्लोकः प्रस्तोतुं शक्यते। एवमन्यत्रापि।[४०]

एतन्निदर्शनं शास्त्रदृशानवद्यं सदपि श्रीलता -कोटिं नाटीकते परं यदि कैश्चिच्छास्त्रसरणिरेव शरणीक्रियते तर्हि एतादृशेषु वर्णनेषु किं कथनीयं स्यात् ?

भटकामिनः प्रतिवरूथवर्ती रभसाद् घ्नतः समरवासगृहे।
प्रतिगुम्फिताः शितिसरोजदलैर्गलिता बभ्रुः स्रज इवासिलताः॥[४१]

अत्र युद्धवर्णन प्रसङ्गे 'घ्नतः' इत्यादि क्रिया-प्रयोगो निर्विवादरूपेणाश्लील-कोटावभ्युपगम्यत एव।

## (१०) पुनरुक्तता

यथा :

अतिरभसादलीकनिद्रारभसविघूर्णितलोचनाम्बुजाभिः ।
शयनतलमशिश्रियन् वधूभिः सह मदमन्मथमन्थरा युवानः॥[४२]

अत्र 'रभस' शब्दस्य पुनरुक्तिः।

## (११) व्याकरणाभिधानवैपरीत्यम् (च्युतसंस्कृतिः ?)

अलकेन केषुचित्स्थानेषु व्याकरण-त्रुटयः प्रदर्शिताः। सूक्ष्मेक्षिकया दर्शनेनैव ता ग्रहीतुं शक्या अतएव ताः सुस्पष्टं च्युतसंस्कृतिदोषग्रस्ताः कथयितुं न शक्यन्ते। प्रायोगप्रामाण्यात् ता न नितान्तं दुष्टा, व्याकरणविपरीतास्तु सन्त्येव। अतोऽस्माभिस्तासां सङ्कलनं 'व्याकरणवैपरीत्यम्' इति शीर्षकान्तर्गते कृतम्।

तद्यथा :

(क) दधति यत्र पयोधरपंक्तयो गिरिशकण्ठरुचिं जलमन्थराः।
स कृतपान्थवधूजनवेपथू रसमयः समयः स्मविजृम्भते॥[४३]

अत्रालकष्टिप्पणीं करोति—"गिरौ डश्छन्दसि" इति प्रत्ययद्वारेण छन्दसि नियमितत्वाद् 'गिरिश' शब्दस्य भाषायां प्रयोगः प्रमादजः।

एवमेव :

(ख) स्पष्टाभिलक्ष्यरमणीयकुशप्रसूतिरव्याहता मुनिनिकेतकृतास्पदश्रीः।
सानुस्थितिर्जनकराजसुतेव भास्वदंकोल्लपल्लवतया श्रियमेति यस्य॥[४४]

---

४०. तदेव २७।१०१, २७।११० प्रभृतयः श्लोकाः।

४१. तदेव ४२।७

४२. हर० २७।१

४३. तदेव ३।४३

४४. तदेव ४।२३

अत्र विद्वद्धौरेयष्टीकाकारो लिखति—"अङ्कोटे तु निकोचकः' 'इत्यभिधानेषु पाठादङ्कोल्ल'—शब्दस्येह प्रयुक्तिरयुक्तेव लक्ष्यते। असौ तु टकारस्य 'ल्ला' देशे कृते प्राकृत एव प्रयोगमर्हति। तथा च वाररुचं सूत्रम्—"अङ्कोटे ल्लः" इति।

तथाच :

(ग) अपदत्रयस्य गुणलिङ्गशून्यतामुपजग्मुषः कृतहृदम्बरस्थितेः।
व्यपलीनसाम्प्रतभविष्यदर्थताविषयोऽणुरीश भवति त्वदाश्रयात् ॥[४५]

अत्र 'अर्थता' इत्यत्र भावप्रत्ययानुपयोगित्वाट्टीकाकारस्य सूक्ष्मेक्षिका प्रत्ययस्यास्य 'गड्डुप्रायतां' पश्यति। यथाहि—"अत्र भावार्थस्यानुपयोग 'स्तल्' प्रत्ययो गड्डुप्रायः।"

किञ्च :

(घ) सब्रह्म धूर्जटिहरींस्त्रिदशांस्तृणाय, विस्पष्टमत्सरधियो युधि मन्यमानाः।
दैत्याधिपाश्चकमिरे कमलासनाण्डमुरत्प्लुत्य पाटयितुमुत्कटरोषरूक्षाः ॥[४६]

इत्यत्र "मन्यकर्मण्यनादरे विभाषा प्राणिषु" (अ० २।३।१७) इति नियमस्य प्रातिकूल्यं पश्यतो विदुषो व्याख्याकारस्य टिप्पणी ध्यातव्या वर्तते—'मन्यकर्मण्यनादरे' इत्यत्र भाष्ये प्रकृष्य कुत्सितग्रहणस्य कर्तव्यत्वेन स्थापितत्वान्न त्वां तृणायमन्ये' इति प्रयोग इतिवच्चतुर्थीप्रवर्तनात् 'तृणाय त्रिदशान्मन्यमाना' इति तत्प्रवृत्तिश्चिन्त्या।"

एवमन्येऽपि श्रुतिकटु—असमर्थ—निहतार्थ -अविमृष्टविधेयांश -नेयार्थ-समाप्त -पुनरात्त -सङ्कीर्ण -गर्भितं -अनवीकृतादयो दोषा अपि यथास्थानं प्राप्यन्ते। विस्तृतिभयात् तेषां प्रतिपादनमकृत्वैव सम्प्रति रस-दोषाणां सङ्केतः क्रियते।

रसदोषेषु 'अर्थानौचित्यं' त्वस्याध्यायस्य प्रारम्भ एवोक्तम्। (१२) अङ्गस्याप्यतिविस्तृतिः (१३) पुनःपुनर्दीप्तिः (१४) अङ्गिनोऽननुसन्धानम् एतेषां दोषाणां च विवेचना हरविजयस्य कथानकसमीक्षणप्रसङ्गे कृता। (१५) स्वशब्दकथनं चैतादृशेषु स्थलेषु प्राप्यते :

तत्र स्फुटरसैश्चित्रैः सुश्लोकविनिबन्धनैः।
अनेकसर्गैः संग्रामे महाकाव्यायितं भटैः ॥[४७]

---

४५ तदेव ६।१४०

४६. हर० ३४।५८

४७. तदेव ४३।८७

यथा वा :

कुसुमशरकरावलम्बरूपः सुरतपदेऽनुपदेशशिक्षितोऽपि ।
अनुवसितविकासविभ्रमश्रीस्तरलदृशां रसभावसङ्करोऽभूत् ।।[४८]

अत्र 'रस' शव्दप्रयोगे ।

रसदोषेषु मुख्यं 'त्वर्थानौचित्यमेव', तच्च यत्र-तत्र सहृदयानुद्वेजयत्येवेत्यावेदितमसकृत् । इत्यलमतिदूषणगवेषणया ।

४८. तदेव २७।२३

दशमोऽध्यायः

# आदानं प्रदानं च

## (अ) संवादविमर्शः

यथा प्रजापतेः सृष्टौ बहूनां मनुष्याणामाकृतयः संवदन्ति, एवमेव कविसृष्टावप्यनेकेषां कवीनां भावाः सारूप्यं दधति। कदाचित्त्विदं साम्यं बुद्धिधाराया एकलक्ष्यपरकत्वात् सर्वथा निरपेक्षतयैव भवति, कदाचिच्च स्वपूर्ववर्तिनां समवर्तिनां च कृतीनां कृतीनामालोचनेनानुशीलनेन च प्रभावितः कविः स्वकृतिषु तेषां भावानपि गृह्णाति। अन्येषां भावग्रहणं, तत्र च स्वीयया प्रतिभया सौन्दर्यवर्धनं, चारुत्वसमावेशश्च कृतधियामेव सरस्वतीपुत्राणां कर्तव्यम्। न केवलं परभावानामपि तु परशब्दानामपि स्वनाम्ना स्वीकरणं भावापहरणमेव नास्त्यपितु तच्चौर्यमेव। 'कविकण्ठाभरणे षण्णामुपजीविकवीनामुल्लेखः कृतः :

छायोपजीवी, पदकोपजीवी, पदोपजीवी, सकलोपजीवी।
भवेदथ प्राप्तकवित्वजीवी; स्वोन्मेषतो वा भुवनोपजीव्यः॥

एतादृशानां चौरकवीनां विषय एव कथितम् – 'कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते।'[1] ये काव्यार्थचौरा भवन्ति ते सर्वथा गर्ह्याः।[2] परं ये भवन्ति सहजाः कलाकारास्ते पुरातनेष्वप्यर्थेषु कुसुमाकर इव शीर्णपादपेषु कामपि नवीनतामापादयन्ति।

यतोहि मेधाविनां बुद्धयः संवादिन्यो भवन्ति। अस्मात्तेषां रचनासु संवादः स्वाभाविक एव। अयं सर्वोऽपि संवादः पूर्ववर्तिनां सर्वथानुकरणमितितु नैव मन्तव्यम्, यतो हि संवादो नैकविध एव। सः (१)प्रतिबिम्बवत् (२) आलेख्याकारवत् (३) तुल्यदेहिवच्चेति त्रिधा भवति :

---

१. सा०द० सप्तमोल्लासः।

२. साहित्यपाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः।
यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति॥
(बिल्हणः विक्रमाङ्कदेवचरितम् १/११)

संवादो ह्यन्यसादृश्यं तत्पुनः प्रतिविम्बवत् ।
आलेख्याकारवत्तुल्यदेहिवच्च शरीरिणाम् ॥[३]

तत्र पूर्वं प्रतिविम्बकल्पं काव्यवस्तु परिहर्तव्यं सुमतिना, यतस्तदन्यात्मतात्विकशरीरशून्यम् । तदनन्तरमालेख्यप्रख्यमन्यसाम्यं शरीरान्तरयुक्तमपि तुच्छात्मकत्वेन त्यक्तव्यम् । तृतीयं तु कमनीयं शरीरसद्भावे सति ससंवादमपि काव्यवस्तु न त्यक्तव्यं कविना । न हि शरीरी शरीरिणान्येन सदृशोऽप्येक एवेति शक्यते वक्तुम् ।[४]

पूर्नतनानां कवीनां छाययानुगृहीतं सदपि वस्तु कवेः प्रतिभया तथैव नव्येन भव्येन च रूपेण चकास्ति यथा शशिच्छायानुगृहीतमपि तरुण्या आननम् :

तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि ।
वस्तु भातितरां तन्व्याः शशिच्छायमिवाननम् ॥[५]

वस्तुतो ये सहजप्रतिभासंयुक्ता महाकवयो भवन्ति ते केवलं पूर्वभावानां भावनामेव गृहीत्वा तां स्वशक्त्याऽन्यथैव परिवर्तयन्ति । यथा मेघा सागरस्य लवणाम्भः सुस्वादुरूपे परिवर्तयन्ति एवमेवेमे महाकवयः पूर्वं वस्तुजातमधिकया हृद्यया सुषमया प्रस्तुवन्ति । यथा पुरातनान्यक्षराणि पुनः–पुनरसंख्यैः कविभिः प्रयुक्तानि सन्त्यपि नवनवार्थानुद्भावयन्ति एवमेव पुरातनानि भावजातानि काव्य उपनिबध्यमानान्यपि सुषमावहानि भवन्ति । त एव वन्दनीयाः, प्रशंसनीयाश्च । तथा चोक्तम् :

अक्षरादिरचनेव योज्यते यत्र वस्तुरचना पुरातनी ।
नूतने स्फुरति काव्यवस्तुनि, व्यक्तमेव खलु सा न दुष्यति ॥

नह्रि वाचस्पतिनाप्यक्षराणि पदानि वा कानिचिदपूर्वाणि घटयितुं शक्यन्ते, तानि तान्येवोपनिबद्धानि न काव्यादिषु नवतां विरुध्यन्ति ।[६]

संवादत्रये पूर्वौ जीवित-निरपेक्षौ परं तृतीयस्तुल्यदेहितुल्यस्तु प्राणपरिस्पन्दत्वात् सजीवः । अनेन सिद्धं यद्यत्र संवादे काव्योपनिषदः परिस्पन्दो भवति स एव ग्राह्यः । एवमुपनिबध्नन् पूर्वं वस्तुजातं महाकविर्निन्द्यतां नोपयाति ।[७]

---

३. ध्वन्यालोकः ४।१२
४. स एव ४
५. स एव ४।१४
६. स एव ४।१५
७. यदपि तदपि रम्यं यत्र लोकस्य किंचित्,
स्फुरितमिदमितीदं बुद्धिरभ्युज्जिहीते ।

राजशेखरेण स्व काव्यमीमांसायामस्मिन् विषये सूक्ष्मतया विचारः कृतः। तेन पूर्वम् (२) अन्ययोनिः (२) निह्नुतयोनिः (३) अयोनिश्चेमे त्रयो भेदाः कृताः। ततः प्रतिबिम्बकल्पालेख्यप्रख्यभेदाभ्यामन्ययोनेर्द्वैविध्यं, तुल्यदेहितुल्य-परपुरप्रवेशप्रतिमभेदाभ्यां निह्नुतयोनेश्चापि द्वैविध्यं प्रदर्शितम्। अयोनिरेक-प्रकारक एवोक्तः। 'परपुरप्रवेशप्रतिमस्य' लक्षणमेतद्—यत्र मूले एकता भवेत् परं प्रबन्धरचना पर्याप्तरूपेण भिन्ना स्यात्, स संवादः 'परपुरप्रवेशप्रतिमः' कथ्यते। अयं च सत्कविग्राह्यः :

मूलैक्यं यत्र भवेत् परिकरबन्धस्तु दूरतोऽनेकः।
तत्पुरप्रवेशप्रतिमं काव्यं सुकविभाव्यम्॥[८]

सर्वस्यापि विवेचनस्याशयोऽयं यद् यः कवि स्व मौलिकतया शब्दार्थ-योश्चमत्कारं जनयति यश्च पूर्वतनमपि वस्तु स्व प्रतिभाबलेन कमनीयरूपे परिणमयति स एव प्रशस्योऽनुकरणीयश्च। राजशेखरेण साधूक्तम् :

नास्त्यचौरः कविजनो, नास्त्यचौरो वणिग्जनः।
स नन्दति विना वाच्यं यो जानाति निगूहितुम्॥
उत्पादकः कविः कश्चित् कश्चिच्च परिवर्तकः।
आच्छादकस्तथा चान्यस्तथा संवर्गकोऽपरः॥
शब्दार्थोक्तिषु यः पश्येदिह किञ्चन नूतनम्।
उल्लिखेत् किञ्चन प्राच्यं, मन्यतां स महाकविः॥[९]

महाकवी रत्नाकरश्चित्राङ्कनयन्त्रम् (कैमरा) इव वर्तते यो विपरीतादपि, अहृद्यादपि वस्तुनो सुन्दरं वस्तुजातमुद्भावयितुमलङ्कर्मीणः, किम्पुनः सुन्दरा-त्सुन्दरतरमापादयितुम्? स तद्विधेषु कविष्वस्ति येषां विषये राजशेखरेणोक्तम्-"न तत् त्र्यक्षः सहस्राक्षोऽपि वा यच्चर्मचक्षुषोऽपि कवयः पश्यन्ति मतिदर्पणे कवीनां विश्वं प्रतिफलति। 'कथं नु वयं दृश्यामहे' इति महात्मनामहम्पूर्विकयैव शब्दार्थाः पुरो धावन्ति। यत्सिद्धप्रणिधाना योगिनः पश्यन्ति, तत्र वाचा विचरन्ति कवयः।[१०]

रत्नाकरस्य कवितायां कालिदास-भारवि-भट्टि-बाण-माघानां प्रभावोऽवलो-क्यते, तत्रापि माघस्यैव कीर्तिभवनमयितुं स बद्धपरिकर इवाभाति। शेषाणां

अनुगतमपि पूर्वच्छायया वस्तु तादृक्,
सुकविरुपनिबध्नन् निन्द्यतां नोपयाति॥ (ध्वन्यालोकः ४।१६)

८ काव्यमीमांसा, द्वादशोऽध्यायः।
९. सैव, एकादशोऽध्यायः।
१०. काव्यमीमांसा, द्वादशोऽध्यायः।

महाकवीनां भावांस्तु सः सादरमभिनवरूपे प्रस्तौति। अत्र मनाग् विस्तरेण विषयोऽयमुपन्यस्तः स्यात्।

## (आ) आदानम्

(क) कालिदासो रत्नाकरश्च - कविकुलगुरोः कालिदासस्याधमर्णत्वं तु सर्वैरपि कविभिरुररीक्रियते। प्रकृतेर्यमकमयं चित्रणमुत्तरवर्तिभिरिव महाकविभी रत्नाकरेणापि तत एव गृहीतम्। 'भगवत्प्रबोधनाम्नि' सर्गे रघुवंशस्याजप्रबोधस्य स्फुटः प्रभावोऽवलोक्यते, कुमारसम्भवस्य शिवस्तुतेः, शङ्कररूपवर्णनस्य च प्रभावोऽत्र सर्वथा सुस्पष्ट एव। विरहवर्णने वियोगिनी-वृत्तस्य प्रयोगोऽपि कालिदासस्यैव प्रभावः। यत्र-तत्र सूक्तिषु श्लोकानां भावेषु चापि समताव-लोक्यते। तद्यथा :

(१) क्षितितोयमारुतकृशानुभानुमद्गगनामृतांशुयजमानमूर्तये ।
भवते मतिध्वनिविकल्पगोचरव्यतिवृत्तरूपपरमात्मने नमः ॥[११]

अत्र 'अभिज्ञानशाकुन्तलस्य' 'या सृष्टिः स्रष्टुराद्या'[१२] इत्यादिकस्य श्लोकस्य प्रभावः सुतरां लक्ष्यः।

(२) यथावा—'प्रभामयनयप्रकाश' नाम्नि नवमे सर्गे उपात्तोऽयम् :
विभर्ति गुर्वीं जगतो धुरं यः, सर्गस्थितिप्रत्यवहारकार्ये।
अस्मिन् शरण्येऽपि सुरासुराणां स्थितेऽत्र वो ब्रूत किमाकुलत्वम् ?[१३]

श्लोको रघुवंशस्यानेन श्लोकेन सह स्फुटं संवदति :
मान्यः स मे स्थावरजङ्गमानां सर्गस्थितिप्रत्यवहारहेतुः।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥[१४]

(३) तथा च 'प्रत्यूषवर्णन' नाम्नि अष्टाविंशति सर्गे उपात्तोऽयं श्लोकः :
गुरुविरहशुचा कुशेशयिन्याश्चकित इव क्षणदाम्बुवाष्पबिन्दून्।
विपुलदलविलोचनान्तरालादुषसि कररहिमांशुरुन्ममार्ज ॥[१५]

मेघदूतस्य :
तस्मिन् काले नयनसलिलं योषितां खण्डितानां,
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु।

---

११. हर० ६।१८४
१२. अभिज्ञान० १।१
१३. हर० ६।१४
१४. रघु० २।४४
१५. हर० २८।८६

प्रालेयास्रं कमलवदनात्सोऽपि हर्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥[१६]

इत्यनेन स्पष्टतया प्रभावितोऽस्ति।

(४) चन्द्रोदयवर्णने समायातस्य :

प्रत्यग्रपक्षघटनेन निशावतार-
रामेषुणा सपदि वासरक्रौञ्चकुञ्जे।
निर्दारिते स्फुटमयुक्छदनच्छदाच्छा
निर्गच्छति स्म शशिदीधितिहंसपङ्क्तिः ॥

इति २०/२३ श्लोकस्योपरि :

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत्क्रौञ्चरन्ध्रम्।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥[१७]

अस्य श्लोकस्य प्रभावः स्पष्टोऽस्ति।

कालिदासस्य छायानुगृहीतेन भावेन कविरयमनेकत्र स्व कवितामाभूषयति। यथाष्टाविंशतिसर्गे नायकं वीक्षमाणाया नायिकायाश्चेष्टावर्णनप्रसङ्गे :

(५) आकृष्य पाणिकमलेन च कर्णपाली-
मेकेन वल्लभविलोचननिश्चलाक्षम्।
तस्थौ पुरन्ध्रिरपरेण न लब्धसन्धि-
र्माणिक्यकुण्डलमिति प्रविघूर्णयन्ती ॥[१७अ]

अत्र हि कालिदासस्य सुप्रसिद्धस्यास्य श्लोकस्य छाया स्फुटं प्रतिभासते :

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे,
तन्वी स्थिता कतिचिदेव पदानि गत्वा।
आसीद् विवृत्तवदना च विमोचयन्ती,
शाखासु वल्कलमसक्तमपि द्रुमाणाम् ॥[१८]

(६) एवमेव 'सैन्यप्रस्थान' नाम्नि सर्गे समागतस्य :

स्फुटमिह विमलानां स्वच्छता श्लाघ्यरूपा,
विसदृशमुपधानं तत्र दोषाय नूनम्।

१६. पूर्वमेघः।४३
१७. पूर्वमेघः ५७
१७अ हर० २८।११४
१८. अभिज्ञान० २।१२

प्रतिहततिमिरौघा मेनिरे यन्निरीक्ष्य,
क्षितितलमपि शीताभीशुबिम्बे कलङ्कम् ।।[१९]

अस्य श्लोकस्योपरि रघुवंशस्यास्य श्लोकस्य प्रभावः स्पष्टः :

छाया हि भूमेः शशिनो मलत्वे-
नारोपिताः शुद्धिमतः प्रजाभिः ।।[२०]

(७) विक्रमोर्वशीयस्य "तप्तेन तप्तमयसा घटनाय योगम्"[२१] इयं सूक्तिर्निम्नाङ्किते श्लोके प्रतिफलितेव प्रतीयते :

रोमाञ्चपीनतनुतां दधतोः क्रमेण,
सम्प्राप्तयोस्तरुणयोरथ कातरत्वम् ।
आलिङ्गनेन चिरसम्भृतविप्रयोग-
तप्ताखिलाङ्गघटना सुदृढा बभूव ।।[२२]

(८) क्वचित्तु कालिदासस्य शब्दा अपि यथातथं प्रयुक्ताः समवलोक्यन्ते । यथा :

"जनितसुखमिव क्षपावसाने, कुमुदवनं प्रतिपन्ननिद्रमासीत् ।[२३]

इत्यस्य :

"उषसि सर इव प्रफुल्लपद्मं कुमुदवनं प्रतिपन्ननिद्रमासीत् ।[२४] इत्यत्र ।

एभिः कतिपयैरुद्धरणैः स्पष्टं भवति यद् रत्नाकरेण कालिदासस्य ग्रन्थानां महत्या श्रद्धयानुशीलनं कृतमासीद् येनानायासमेव तस्य भावा कालिदासस्य भावैर्मिलित्वा सारस्वतीं सुषमां संवर्धयन्ति ।

## (ख) भारवी रत्नाकरश्च

विचित्रमार्गस्य पूर्वावतरो येन मनीषिणा संस्कृतसाहित्ये न्यधीयत स महाकविर्भारविरेवास्ति । तेन या परम्परा प्रचालिता सा समग्रभावेन सस्कृत-काव्यजगदाच्छन्नमकरोत् । कविष्वस्यां दिश्येतावती स्पर्धा समुत्पन्नाऽभूद् येन तेऽन्यानधः कर्तुं स्वकलायाः प्रदर्शने संलग्ना बभूवुः । भारवेः किरातार्जुनीयस्य स्पष्टः प्रभावो माघस्य कवितायामवलोक्यते । रत्नाकरेण भारवेः काव्य–

१९. हर० ४१।६४
२०. रघु० १४।४०
२१. विक्रमोर्वशीयम्, २।१५
२२. हर० २५।७०
२३. रघु० ६।८६
२४. हर० २८।६०

गाढमनुशीलनं कृतमासीदतस्तस्य काव्ये भारवेः प्रभूतः प्रभावोऽवलोक्यते । तस्य च समाकलनमित्थं कर्तुं शक्यते :

(१) उभावपि कवी शैवौ स्तः । काव्यद्वये भगवतः शङ्करस्य महिमा स्वानुपमवैभवेन चकास्ति । किरातार्जुनीयस्य नायको यद्यपि मध्यमपाण्डवोऽर्जुनोऽस्ति तथापि तस्य फलावाप्तिरीशाधीनैवास्ति, हरविजये तु भगवान् चन्द्रमौलिरेव नायकोऽस्ति ।

(२) उभयत्र कथानकं स्वल्पमस्ति, वर्णना च वृहती । किरातार्जुनीयस्य कथानकं महाभारतस्य वनपर्वोपरि हरविजयस्य च शिवपुराणस्य ज्ञान-संहितायाः ६३-६७ अध्यायानामुपर्यवलम्बितमस्ति ।

(३) किरातार्जुनीयम् 'लक्ष्म्यङ्क'मस्ति, हरविजयं च 'रत्नाङ्कम्' ।

(४) द्वयोरप्यङ्गीरसो 'वीर' एवास्ति ।

(५) भारविणा यासां रूढीनां संक्षेपतः प्रयोगः कृतो रत्नाकरेण विस्तरशस्तासां वर्णनं कृतमस्ति । ऋतु-पर्वत-जलविहारादेर्विस्तृतानि वर्णनानि रत्नाकरे प्राप्यन्ते । चित्रकाव्यस्य[२५] यः प्रयोगो भारविणा कृतः सोऽपि रत्नाकरे परां काष्ठां गाहते ।

(६) भारवे राजनीतिः, शास्त्रान्तरैः साकं, तस्य काव्ये महत्वपूर्णं स्थानमादधाति, हरविजयेऽपि सा विस्तरशः शास्त्रान्तराणां व्युत्पत्या साकं सुप्रतिष्ठितावलोक्यते ।

(७) किरातार्जुनीयस्य 'शिवस्तुतिः' (१८।२२-४२) रत्नाकरकृतायाः शिवस्तुतेः प्रेरिकास्ति (हर० षष्ठः सर्गः) ।

(८) "किरातार्जुनीयम् 'नारिकेलफलसन्निभ'मस्ति, हरविजयं च 'औषधपाक' सन्निभम् ।

(९) 'भारवेरर्थगौरवम्' सुप्रसिद्धमस्ति, रत्नाकरस्यापि भाव-गभीरता ततो न्यूना नास्ति ।

(१०) उभयोर्जीवन-दर्शनमपि समानमेवास्ति । 'वीरभोग्या वसुन्धरा' इत्यत्रोभौ विश्वसतः ।

---

२५. द्रष्टव्यश्लोकाः — गोमूत्रिकाबन्धः (किरात० १५।१२), सर्वतोभद्रः (१५।२५), अर्धभ्रमः (१५।२७), अर्थत्रयवाची (१५।४५), एकाक्षरश्लोकः (१५।१४), एकाक्षरपादः (१५।५), द्वयक्षरः (१५।३८), निरोष्ठ्यः (१५।७, २९), प्रतिलोमानुलोमपादः (१५।२०, १५।२३), शृंखलायमकम् (१५।४२), गूढचतुर्थपादः (१५।४३), महायमकम् (१५।५२).

(११) उभयोरपि काव्यज्ञै र्भूयान् समादरः कृतोऽस्ति, एक 'आतपत्र-भारविः' संज्ञया विभूषितोऽस्ति, अपरश्च 'तालरत्नाकर' इत्युपाधिना।

रत्नाकरस्य भावेष्वनेकत्र भारवेर्भावानां छायावलोक्यते। दिङ्मात्रमुदाह्रियते—शरद्वर्णनप्रसङ्गे समागतोऽयं श्लोकः :

(१) प्रकटताललयं शुकवारणे कलमगोपवधूनवगीतकम्।
मृगगणस्य मनः श्रुतमाक्षिपत्प्रचुरसस्यरसस्य जिघत्सतः॥[२६]

किरातार्जुनीयस्य शरद्वर्णनविषयकस्यास्य श्लोकस्य साम्यं धारयति :

कृतावधानं जितबर्हिणध्वनौ, सुरक्तगोपीजनगीतनिःस्वने।
इदं जिघत्सामपहाय भूयसीं, न सस्यमभ्येति मृगीकदम्बकम्॥[२७]

(२) नीतिपूर्वकं शासनं कुर्वाणस्य राज्ञः समृद्धिरधिकाधिकं वर्धते, इति सिद्धान्तं प्रतिपादयता यद् रत्नाकरेणोक्तम् :

विरूढमूलस्य नयानुसारिणः सकोषदण्डोपचयस्य भूपतेः।
कुशेशयस्योपचितेव कर्णिका बिभर्ति लक्ष्मीः परिणामपीनताम्॥[२८]

तद् भारवेरस्य श्लोकस्यानुसरणं कुर्वदेव प्रतीयते :

प्रभवः खलु कोषदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते॥[२९]

(३) मतिमता सहसा कार्यं नैव करणीयमिति विषये भारवेरयं सुप्रसिद्धः श्लोकोऽस्ति :

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥[३०]

अस्य प्रतिबिम्बोऽस्मिन् श्लोके मुखरित इव विलोक्यते :

द्विपत्यतुलितोरुविक्रमे विक्रमेत सहसा न नीतिमान्।
को न सशयितपन्नगे करं वामलूर-विवरे विनिक्षिपेत्॥[३१]

(४) शत्रूणां विनाशानन्तरं तत्पत्नीनां दुर्दशा भवेदिति विषये कथितं रत्नाकरस्य नीतिगर्भं वाक्यम् :

---

२६. हर० ३।७८
२७. किरात० ४।३३
२८. हर० १२।४४
२९. किरात० २।१२
३०. तदेव, २।३०
३१. हर० १८।५५

आपाण्डुरीभवतु वः प्रतिपक्षपक्षनारीजनस्य वदनं पतिविप्रयोगे।
दुःखाग्निदग्धहृदयेन्धनभस्मधूलिपुञ्जैरिवाभिहतमुच्छ्वसितव्युदस्तैः ॥[३२]

भारवेरस्य रूपान्तरमिव प्रतीयते :

ज्वलतस्तव जातवेदसः सततं वैरिकृतस्य चेतसि।
विदधातु शमं शिवेतरा रिपुनारीनयनाम्बुसन्ततिः ॥[३३]

(५) क्वचिद्भारवेरेकस्य श्लोकस्यानेकेषु श्लोकेषु व्याख्येव कृता प्रतीयते। यथा युद्धाय प्रेरणार्थं युधिष्ठिरं प्रति प्रयुक्तोऽयं श्लोकः :

कुरु तन्मतिमेव विक्रमे नृप ! निर्धूय तमः प्रमादजम्।
ध्रुवमेतदवेहि विद्विषां त्वदनुत्साहहता विपत्तयः ॥[३४]

अनेकेषु श्लोकेषु परिवृंहितो विलोक्यते :

युधि दैत्यपतौ विजृम्भमाणे वयमासिष्महि यन्निरस्तयत्नाः।
प्रभुशासनलाभशून्यतायाः परिणामः कटुकः सुदारुणोऽयम् ॥
पिनषाम किमाशु चूर्णपेषं विनिगेषान्तरतः सुराहितानाम्।
इति चन्द्रकिरीट ! देह्यनुज्ञां, त्वदनुद्योगहता हि नो जयश्रीः ॥[३५]

(६) यथावा भारवेः

स्फुटता न पदैरपाकृता, न च न स्वीकृतमर्थगौरवम्।
रचिता पृथगर्थता गिरां, न च सामर्थ्यमपोहितं क्वचिद् ॥[३६]

अयं श्लोको दशमे सर्गे श्लोकानां कदम्बकेन पल्लवितो विलोक्यते।[३७]

(७) यथावा भारवेः

विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।
प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती ॥[३८]

अस्य श्लोकस्य विवरणमनेकत्रानेकेषु श्लोकेषु प्राप्यते।[३९]

(८) क्वचिन्नीतिवाक्यानि सुभाषितानि च परस्परं संवदन्त्यवलोक्यन्ते। यथा :

---

३२. हर० ११।३२
३३. किरात० २।२४
३४. किरात० २।२२
३५. हर० हर० १८।३३-३४
३६. किरात० २।२७
३७. हर० १०।१२-२०
३८. किरात० १४।१३
३९. ११।१०, ११। १२।१८, १९। ३६।११। ३८।६

| किरातार्जुनीये | हरविजये |
|---|---|
| (क)'न तितिक्षासममस्तिसाधनम् ।'[४०] | 'न नीतितुल्यं क्षममस्ति साधनम् ।'[४१] |
| (ख)'विचित्ररूपाः खलु चित्तवृत्तयः ।'[४२] | 'विचित्ररूपा ननु नीतितूलिका ।'[४३] |
| (ग)'सदानुकूलेषु हि कुर्वते रतिम् ।'[४४] | 'सदानुकूले हि जनोऽनुरज्यते ।'[४५] |

एवमादि तुलनात्मकं विवेचनं रत्नाकरस्योपरि भारवेः प्रभावं स्फुटं प्रकाशयति ।

## (ग) भट्टी रत्नाकरश्च :

षष्ठशताब्द्या अन्तिमे भागे समुत्पन्नस्य महावैयाकरणस्य 'भट्टिकाव्यम्'इत्यपरपर्यायस्य 'रावणवध' नाम्नो महाकाव्यस्य निर्मातुः श्रीभट्टिमहाकवेरपि भूयान् प्रभावो रत्नाकरस्योपरि समवलोक्यते । भट्टेर्वैयाकरणनिष्णातता तं बलादाचकर्ष । भट्टिकाव्यं यद्यपि व्याकरणशिक्षाया एव निर्मितमभूद्, 'हरविजयं' च न तथा, तथापि तत्रत्याः काश्चन विशेषता रत्नाकरेण स्वीकृताः ।

(१) भट्टेः प्रशस्ता भाषणकला रत्नाकरमतिमात्रं प्रभावितमकरोत् । भट्टेर्भाषणकलातिमात्रं स्फीताऽऽसीत् । द्वादशे सर्गे विभीषणस्य भाषणेन कवें राजनीतिविषयकं ज्ञानं, पञ्चमे सर्गे शूर्पणखायाश्च भाषणेन तस्या दूषितस्वभावस्य परिचयः साक्षात् प्राप्यते! (२)भट्टेः प्रकृति–वर्णनमपि नितान्तं रमणीयमलङ्कृतञ्च, तेनापि कविः प्रेरणां गृहीतवान् । (३) व्याकरणशास्त्रस्य पाण्डित्यं तूभयत्र समानमेव । (४) उभयोः काव्ययोः प्रधानो रसो वीर एवास्ति । (५) चित्रकाव्यस्य बीजं यद् भट्टावस्ति, रत्नाकरे तस्य परिपाकोऽस्ति ।

भट्टे राजनीतिविषयकाः केचन श्लोका उदाहरणया प्रस्तूयन्ते :

वृद्धिक्षयस्थानगतामजस्रां वृत्तिं जिगीषुः प्रसमीक्षमाणः ।
घटेत सन्ध्यादिषु यो गुणेषु लक्ष्मी र्न तं मुञ्चति चञ्चलापि ।।
उपेक्षणीयैव परस्य वृद्धिः प्रनष्टनीतेरजितेन्द्रियस्य ।
मदादियुक्तस्य विरागहेतुः समूलघातं विनिहन्ति यान्ते ।।
जनानुरागेण युनोऽवसादः फलानुबन्धः सुधियात्मनोऽपि ।
उपेक्षणीयोऽभ्युपगम्य सन्धिं कामादिषड्वर्गजिताधिपेन ।।

---

४०. किरात० २।४३
४१. हर० १२।२६
४२. किरात० १।३७
४३. हर० १२।३०
४४. किरात० १।५
४५. हर० २१।१७

यदा विगृह्णन् न च सन्दधानो वृद्धिं क्षयं चानुगुणं प्रपश्येत् ।
आसीत राजावसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्यात् ।।
सन्धौ स्थितो वा जनयेत् स्ववृद्धिं, हन्यात् परं वोपनिषत्पयोगैः ।
अत्रावयेदस्य जनं परैर्वा विग्राह्य कुर्यादवहीनसन्धिम् ।।[४६]

एवमादयः श्लोका रत्नाकरेण स्वीये काव्ये विस्तरशो व्याख्याताः । दिङ्मात्रमुदाह्रियते :

उपायशून्यास्तरवः क्षिताविव क्रियाविशेषा व्यभिचारिणः फले ।
त एव नूनं नियमेन भूभृतां फलन्ति कल्पद्रुमवन्नयाश्रयाः ।।
उपायसोपानपरम्पराभिमां यथाक्रमं योऽधिरुरुक्षुराश्रितः ।
स नूनमुच्चैः पद एव नीतिमान् कृतप्रतिष्ठो न चिराद् विभाव्यते ।।
विवृण्वतां मण्डलसन्धिविग्रहव्यपाश्रयाः कार्यगतीरनेकशः ।
क्रियापचारा न भवन्ति धीमतामनुक्रमापक्रमयोगचिन्तया ।।
विरूढमूलस्य नयानुसारिणः सकोषदण्डोपचयस्य भूपतेः ।
कुशेशयस्योपचितेव कर्णिका बिभर्ति लक्ष्मीः परिणामपीनताम् ।।
विभाव्यमानासनसन्धिसंश्रया गुणाः परिष्कारमणिस्फुटत्विषः ।
तदद्भुतं यद्विजयैषिणां श्रियं प्रसाधयन्त्यप्रविमृष्टविग्रहाः ।।[४७]

एवमनेकत्र राजनीति-विश्लेषणं भट्टेः प्रभावं द्योतयति ।

भट्टेः सर्वोत्कृष्टा विशेषतास्ति क्रियाणां प्रयोगः । तस्य विशिष्टाः क्रिया वाक्येषु वैयाकरणत्वमप्रतिमल्लतया द्योतयन्ति । एकमुदाहरणं पर्याप्तं स्यात् :

सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट, पितृनताप्सींत् सममंस्त बन्धून् ।
व्यजेष्ट षड्वर्गमरंस्त नीतौ, समूलघातं न्यवधीदरींश्च ।।[४८]

हरविजयेऽपि च :

मन्युं व्यनेषत न संयति नापि दर्पा-
दच्योपताजिहत नाजिहतेश्च भीतिम् ।
शौर्यात्तथा त्रपिषत स्फुरतासिनापि,
नाकद्विषो पणिषतासुमिरेव संख्ये ।।[४९]

भट्टेः यः प्रभावः सोऽपि रत्नाकरेण सादरं गृहीतोऽस्ति । तत्र तं प्रति

---

४६. भट्टिकाव्यम्, १२।२६–३०
४७. हर० १२।३७, ४०, ४३, ४४, ४६
४८. भट्टि० १।२
४९. हर० ४४।४१

कापि स्पर्धा नास्ति । रत्नाकरेणैको गुणो भट्टेर्नानुकृतः, सोऽस्ति कथाप्रवाहस्य संरक्षणम् । भट्टिः कथाप्रवाहरक्षणे स्तिऽसमर्थः । तस्य कथावस्तुनः प्रकृतिरपि रत्नाकरस्य कथावस्तुनो भिन्नास्ति ।

## (घ) बाणो रत्नाकरश्च

रत्नाकरेण हरविजयस्यान्तेऽद्भुतवर्णनाप्रसङ्गे बाणस्य प्रशंसा कृतास्ति ।[५०] यथा 'बाणोच्छिष्टं जगत्सर्वम्' इति बाणभट्टस्य विषये प्रसिद्धं वर्तते तथैव रत्नाकरस्यापि विषये इदं कथयितुमुचितम् । ये विषया रत्नाकरेण गृहीतास्ते-जथां सांङ्गोपाङ्गं वर्णनं बाणेनेव तेन कृतम् । इत्यत्र तु कश्चित्सन्देह एव नास्ति यत्पद्यस्य, गद्यापेक्षया, काचित् सीमा भवति, परं सत्यपि सीमावरोधे, पद्येऽपि रत्नाकरेण महती नैपुणी प्रदर्शिताऽस्ति । यथा बाणः कस्यापि विषयस्य वर्णनं प्रारभ्य तत्र नवा-नवा उद्भावनाः करोति तथैवायमपि । "नवोऽर्थो जातिर-ग्राम्या, श्लेषोऽविलष्टः स्फुटो रसः । विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ।" इत्ययं दुर्लभोऽपि गुणसमवायो बाणे सुलभोऽस्ति संवृत्तस्तथैव रत्नाकरेऽपीमे गुणाः भूयस्कतया प्राप्यन्ते । कानिचिदुदाहरणानि दीयन्ते :

(१) रविविनाशदुःखिता विभावरी यथा[५१] मृगचर्माम्बरधारिणी भवति तथैव चन्द्रोदयेऽपि मरुद्विधूतपर्णरन्ध्रप्रविष्टचन्द्रकिरणशबलितां तरूणां छायां बिभ्रती भूमिः 'संवीतचित्रमृगचर्मपटेव' समवलोक्यते :

भाति स्म मारुतविधूतपलाशरन्ध्र-
लब्धप्रवेशशिशिरांशुमरीचिशाराम् ।
छायां विनेशुषि रवौ दधती तरूणां
संवीतचित्रमृगचर्मपटेव भूमिः ॥[५२]

अच्छोदस्य वर्णन कविना संक्षेपत एव कृत्वा कार्यं सञ्चालितम्, अन्यथाऽत्र बहुवर्णनस्यावसर आसीत् :

वीचीसमीरधुतकाञ्चनपुण्डरीकपर्यस्तकेसरपरागपिशङ्गिताम्भः ।
अच्छोदमैक्षत स देवपुरन्ध्रिपादलाक्षारुणीकृतशिलातलतीरलेखम् ॥[५३]

---

५०. दृब्धं सत्प्रज्ञकैर्यन्न जगति कविभिर्वस्तु तन्नास्ति किंचित्
क्षुण्णे क्षुण्णत्वचिन्ता गहनविषयता तस्य दूरास्तु तावत् ।
तन्मन्दाभिप्रगल्भप्रसरगुरुगिरामग्रणीर्बाण एको,
राजन् ! रत्नाकरश्च ज्वलनवदवनौ जाज्वलीति द्वितीयः ॥ (प्रशस्तिः ।६)

५१. कादम्बरी : सन्ध्यावर्णनम् ।

५२. हर० २०।५६

५३. तदेव, ३०।१६

समुद्रवर्णनेऽपि बाणस्य श्लेषप्रधाना शैली स्फुटं परिलक्षिता दृश्यते।[५४] अन्धकराजधानी-वर्णने बाण-शैली दूरत एव विभाव्यते। याऽन्धकराजधानी वैकुण्ठविभ्रमं विभ्रद्भिः पौरेर्युक्ता,[५५] 'सकलोपनतोदारपौरवीरचितां श्रियं' मध्यमग्राममूर्छनामिव धारयति,[५६] याच गारुत्मती विद्येव,[५७] प्रौढवादविधेव[५८] चाभाति। या च नाटकप्रक्रियेवास्ति।[५९] या सपत्नीरहिता स्त्रीव, वीणावाद्यविधेव च जगन्मोहयति।[६०] यत्र स्त्रियो माध्यमिकश्रियं दधति,[६१] गृहावली च दमयन्तीव विलोक्यते।[६२] किमधिकम्? सा नगरी 'कणव्रतसिद्धान्तप्रक्रियेव' प्रतीयते।[६३] इदं सर्वमपि वर्णनं बाणशैल्यैव कृतं वर्तते।

अष्टात्रिंशे सर्गे निम्नलिखितेषु श्लोकेषु 'शुकनासोपदेशस्य'[६४] प्रभावः सुतरामवलोकनीयः :

आवर्ज्यतेऽवसर एव हि चित्तवृत्ति-
रत्यन्तदक्षिणतया सुजनस्य वाग्भिः।
प्राप्ते मधाववितरं नवचूतयष्टि-
रुल्लास्यते मलयमारुतवेल्लनाभिः।।
वक्त्रश्रियं वितनुते नवसिन्धुवार-
पुष्पप्रकाण्डलवलीव सतः शुचिश्रीः।
शूलं करोति शिरसो विषमञ्जरीव,
कर्णे कृता खलजनस्य तु वागभीक्ष्णम्।।[६५]

बाणस्य विरोधाभासशालिनी शैली श्लोकरूपे एवं परिणमते :

शैलाभिघातशकलीकृतमप्यखण्ड-
माकृष्टरत्नमपि रत्ननिधित्वमाप्तम्।
लक्ष्मीमदग्धदशमप्यसभैर्ववह्नि-
दाहाकुलं चिरगतामपि नोत्सृजन्तम्।।[६६]

---

५४. तदेव ३०।६०–६६
५५. तदेव ३२।४
५६. तदेव ३२।५
५७. तदेव ३२।६
५८. तदेव ३२।११
५९. तदेव ३२।१६
६०. तदेव ३२।१८
६१. हर० ३२।२०
६२. तदेव ३२।२२
६३. तदेव ३२।२७
६४. गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य इतरस्य तु करिण इव शंखाभरणमाननशोभासमुदयमधिकतरमुपजनयति···। (शुकनासोपदेशः)
६५. हर० ३८।१४. १५
६६. तदेव, ३०।४७

श्लेपप्रधाना कादम्बर्याः शैली अनेकेषु श्लिष्टप्रसङ्गेष्ववलोक्यते ।[६७] वाणस्येवोत्प्रेक्षा अपि काव्येऽस्मिन् प्राप्यन्ते :

लावण्यनिर्भरपुरन्ध्रिमुखावधूत-
छायां दधत् कलुषतां हृदयेन यस्याम् ।
इन्दुर्निशासु मणिकुट्टिमविम्व्यमान-
मूर्तिच्छलेन विशतीव रसातलान्तः ।।[६८]

किमधिकम् ? यदा रत्नाकरो भावावेशे समागत्य वर्णनां करोति तदा प्रतीयते यद्वाणस्य वाण्येव पद्यमयी भूत्वा स्वकीयमनुपमं वैभवं मुक्तहस्ततया वितरति ।

## (ङ) माघो रत्नाकरश्च

साम्यम् — रत्नाकरे माघस्य भूयान् प्रभावोऽवलोक्यते । उभयोर्वस्तुविन्यासः, अभिव्यक्तिपक्षस्तथाऽभिरुचिः समेव प्रतिभाति । (क) शिशुपालवधस्य प्रतिसर्गमन्ते 'श्री' शब्दस्य प्रयोगो भवति, हरविजयस्य च 'रत्न' शब्दस्य । (ख) उभयोः काव्ययोर्नायकौ शिवकेशवावद्भुतौ राजनीतिज्ञौ, परिस्थिते विवेचकौ स्तः । (ग) नगर-पर्वत-सेनाप्रयाण-प्रकृति-चित्रण -जलविहार -सूर्यास्त -सूर्योदय - मधु-पान -प्रसाधन -राजनीति -चित्रयुद्धादीनां वर्णने महत्येकरूपता वर्तते । (घ) चित्रकाव्यस्य निर्माणे उभावप्यसमौ । (ङ) एकतो माघस्य शिशुपालवधं 'लक्ष्मीपतेश्चरितकीर्तनमात्रचारु' वर्तते । (च) उभावपि कवी विचित्रमार्ग-स्यानुपमावुपहारौ (घ) उभयोः साहित्याचार्यैर्महती प्रतिष्ठा कृता; एको 'घन्टा-माघः' अपरश्च 'तालरत्नाकरः' इति विरुदेन सम्मानितः ।

वहुषुस्थलेष्वनयोर्न केवलं भावसाम्यमपित्वक्षरयोजनापि समैव प्रतीयते । अत्रोदाहरणपूर्वकं तथ्यमिदं विवेचयिष्यते :

| शिशुपालवधे | हरविजये |
|---|---|
| (१) | १(अ) |
| समय एव करोति वलावलं, | समय एव गुणोऽप्युपयुज्यते, |
| प्रणिगदन्त इतीव शरीरिणाम् । | सपरिरम्भरुचिं दयितं स्त्रियाः । |
| शरदिहंसरवाः परुषीकृताः, | स्तनयुगोष्मभर शिशिरागमे |
| स्वरमयूरमयूरमणीयताम् ।।[६९] | यदकरोदकरोष्णिमगोपतौ ।। |

६७. हर० १७।२९, ३०, ३७, ४४, ७६, १०६, १०७, १०८, ४०।४२ आदयः श्लोकाः ।

६८. तदेव, १।३१

६९. शिशु० ६।४४

(आ)

अवसरे मलिनोऽप्युपकारकः,
क्वचिदितीव रवैस्तरुणान् भ्रमन् ।
स्तनितभीतपुरन्ध्रिनिगूहन—
स्थितिमतोऽतिमतोभिदधौ घनः ॥

(इ)

अतीतकालस्य तदत्र जृम्भितं,
तपस्यमासे करिणोऽपि दुर्जयः ।
निदाघकाले मुखलाङ्गलः शुना-
मपिव्रजत्येव निकार्यतां यतः ॥[७०]

(२)

नवपलाशपलाशवनं पुरः,
स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत्
स सुरभिं सुरभिं सुमनोभरैः ॥[७१]

(२)

मधुपराजिपराजितमानिनी-
जनमनः सुमनः सुरभिश्रियम् ।
अभृतवारितवारिजविप्लवां,
स्फुटितताम्रतताम्रवणं जगत् ॥[७२]

(३)

मधुरया मधुवोधितमाधवी-
मधुसमृद्धिसमेधितमेधया ।
मधुकराङ्गनया मुहुरुन्मद-
ध्वनिभृता निभृताक्षरमुज्जगे ॥[७३]

(३)

सरभसात्मपुरःसरसारसी-
रसभराप्लुतसारसरासितम् ।
सरसकेसरतामरसं सरः,
सरसता मलिनां रसता व्यधात् ॥[७४]

(४)

पाश्चात्यभागमिह सानुषु सन्निषण्णाः
पश्यन्ति शान्तमलसान्द्रतरांशुजालम् ।
सम्पूर्णलब्धललनालपनोपमान -
मुत्सङ्गसङ्गिहरिणस्य मृगाङ्कमूर्तेः ॥[७५]

(४)

पाश्चात्यभागमवलोकयतां शशाङ्क-
बिम्बस्य लक्ष्ममलशून्यतया परीतम् ।
उत्सङ्गसङ्गिमृगतागमिकत्वमेति,
तुङ्गेषु यस्य शिखरेषु कृतास्पदानाम् ॥[७६]

(५)

आच्छादितायतदिगम्बरमुच्चकैर्गा-
माक्रम्य संस्थितमुदग्रविशालशृङ्गम् ।

(५)

स्फुरिताहिराजकटकं विकट-
स्फुटकुञ्जराजिनममुं रभसात् ।

---

७०. (अ) हर० ३।८३, (आ) तदेव, ३।५४, (इ) तदेव, १२।४७

७१. शिशु० ६।२ ७२. हर० ३।२

७३. शिशु० ६।२० ७४. हर० ३।७७

७५. शिशु० ४।२२ ७६. हर० ४।३६

मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-
मुद्वीक्ष्य को न भुवि विस्मयते नगेशम्?[७७]

(६)

प्रवृत्त एव स्वयमुज्झितश्रमः,
क्रमेण पेष्टुं भुवनद्विषामसि।
तथापि वाचालतया युनक्ति मां,
मिथस्त्वदाभाषणलोलुपं मनः॥[७९]

(७)

अथ प्रयत्नोन्नमितानमत्फणै-
र्धृते कथञ्चित् फणिनां गणैरधः।
न्यधायिषातामभिदेवकीसुतं,
सुतेन धातुश्चरणौ भुवस्तले॥[८१]

८(अ)

उपरिजतरुजानि याचमानां,
कुशलतया परिरम्भलोलुपोऽन्यः।
प्रथितपृथुपयोधरां गृहाण-
स्वयमिति मुग्धवधूमुदास दोर्भ्याम्॥

(आ)

इदमिदमिति भूरुहां प्रसूनैः
र्मुहुरतिलोभयता पुरः पुरोऽन्या।
अनुरहसमनायि नायकेन,
त्वरयति रन्तुमहो जनं मनोभूः॥[८३]

(९)

विनयति सुदृशो दृशः परागं
प्रणयिनि कौसुममाननानिलेन।
तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे॥[८५]

अभिवीक्ष्य को न रमतेऽभिमतं,
जगतां भवन्तमिह शैलपतिम्?[७८]

(६)

प्रतिपन्नसर्वगतवस्तुविस्तर-
स्तदपीश पृच्छसि यदद्य तेन नः।
कुरुतेऽधुना कुशलसंग्रहं परं
मधुरो मिथस्त्वदभिभाषणक्षणः॥[८०]

(७)

आस्कन्दलग्नवलवहिमभूरिभार-
नम्रीकृतं विधुरितस्थिति दिग्गजेन्द्रम्।
शेषेण यस्य धरणीवलयं कथञ्चित्-
दुत्क्षिप्तकुञ्चितफणानिकरेण वभ्रे॥[८२]

(८)

कुर्वाणामधितरु सुग्रहेऽपि पुष्पे
हस्ताग्रं सपदि युवा स्वयं प्रदित्सुः।
रम्भोरूमरुधदनेकयुक्तिभेदैः,
प्रेमाहो रचयितुमीहतेऽनुकूलम्॥[८४]

(९)

कान्तायाः कुसुमरजो विलोचनस्थं,
यत्प्रेयान् वदन–समीरणैर्निरास्थत्।
तेनैव प्रतियुवतेः समीपभाजः,
कालुष्यं युगलमनायि दूरमक्ष्णोः॥[८६]

७७. शिशु० ४।१९
७९. शिशु० १।४०
८१. शिशु० १।१३
८३. शिशु० ७।४९, ५०
८५. शिशु० ७।५७

७८. हर० ५।१३
८०. हर० ६।१७
८२. हर० १६।५९
८४. हर० १७।६७
८६. हर० १७।८७

(१०)

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं,
त्यजति मुदमुलूकः प्रीतिमाँश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं,
हतविधिलसितानां ही विचित्रोविपाकः॥[८७]

(१०)

कुमुदवनमलं व्ययोजि लक्ष्म्या,
मुदमजहादतिरवेन्द्वानुलूकः ।
प्रलयमुपजगाय तारकौघः,
सपदि विधौ विधुरत्वमभ्युपेते ॥[८८]

(११)

पुरीमवस्कन्द लुनीहि नन्दनं,
मुषाण रत्नानि, हरामराङ्गनाः।
विगृह्य चक्रे नमुचिद्विपा वज्री,
य इत्थमस्वास्थ्यमहर्दिवं दिवः॥[८९]

(११अ)

व्यूहं समारचय, तेजय सैनिकोघ-
मास्फालयेष्वसनमाशु विमुञ्च वाणान्।
भिन्धि क्षणात्करिघटा, दलयाश्ववारा-
नाचेरिवांसमिति योऽरिगणं व्यमृद्नात्।

(आ)

विकिर वारि, विलोलय विद्युतो,
नभसि गर्ज, तिरस्कुरु दिवतटान्।
इति घनो वियुतामकृताचरन्,
न नवशां नवशान्तिपराङ्मुखीम्॥

(इ)

आस्कन्द दूरमुदयं मदयस्व मन्द-
मानन्दयेन्दुवदना मदनाविद्धनाः।
क्रूरं तमः किर, वरैः कुरु कोरकाग्र-
भङ्गं च कैरवकुलस्य करालकान्तैः॥
चञ्च्वग्रचुम्बनविकुञ्चितकेसरास,
सञ्चारयाञ्चितदलासु च चञ्चरीकान्।
कुन्दावदातविदलद्दलदीर्घदण्ड-
दूरोदितासु मुदितासु कुमुद्वतीषु॥
सन्धेहि पत्रपटलं पटु पुण्डरीक-
खण्डस्य मण्डय दिशः स्फुटमण्डलश्रीः।
संक्षोभयोद्दलनदोहदलीलदोल-
कल्लोलकाण्डकलिलं सलिलं च सिन्धोः॥

---

८७. शिशु० ११।६४
८८. हर० २८।७५
८९. शिशु० ११।५१

सन्धुक्षय स्मरमवन्ध्यशरप्रबन्ध-
सन्धानबन्धुरसमाधि धनुर्धुनानम् ।
धैर्यं विधूनय, वधूषु विवर्धमान-
मानोद्धुरं विधुरबन्धुविरोधिनीषु ॥
पारीः प्रसादय च पानपरम्परासु
कर्पूरपांसुपटलीभिरिव प्रभाभिः ।
इत्याचरन् रुचिररोचिररोचितेन्दु-
रर्चैकचर्चजनलोचनचक्रवालः ॥[६०]

यथा माघेन भारवेः कीर्तिमधः कर्तुं स्वकाव्यरचना कृता तथैव रत्नाकरेण माघस्य कीर्तिं विच्छायतां प्रापयितुं महान् संरम्भः कृतः । उभयोः प्रतिपादन-शैल्यां महत्येकरूपता वर्तते परं 'माघकृते भारवेरनुकरणे, रत्नाकरकृते च माघस्यानुकरणे सर्वथा विभेद' इति प्रतिपादयितुं पूर्वं माघ-द्वारा कृतस्य भारवेरनुकरणस्य विषये चर्चा प्रासङ्गिकी स्यात् :

(१) उभाभ्यामपि-भारवि-माघाभ्यां स्व कथानकं महाभारताद् गृहीतं वर्तते ।
(२) उभयोः काव्ययोः प्रारम्भः 'श्री' शब्देन भवति ।
(३) भारवे- काव्यं 'लक्ष्म्यङ्कं' माघस्य च 'श्र्यङ्कम्' ।
(४) उभयोः काव्ययोः प्रथमसर्गे सन्देशकथनमस्ति । किरातार्जुनीये वनेचरः सन्दिशति, शिशुपालवधे च नारदः ।
(५) किरातार्जुनीयस्य द्वितीयसर्गे भीम-युधिष्ठिरयोर्मध्ये राजनीतेः विवेचनं भवति, शिशुपालवधेऽपि द्वितीये सर्गे राजनीतेः विवेचनं श्रीकृष्णबलरामोद्धवानां मध्ये भवति ।
(६) किरातार्जुनीये यां कर्तव्यबोधिकां भूमिकां व्यासो निर्वाहयति तामेव शिशुपालवधे नारदः ।
(७) किरातार्जुनीये यमकालङ्कारैः हिमालयस्य वर्णनमस्ति, माघे रैवतकस्य ।
(८) उभयत्र सन्ध्या-चन्द्रोदय-रात्रि-प्रभातादीनां, ऋतूनां च वर्णनं समानतयैव कृतं वर्तते ।
(९) उभयत्र नारीणां विलासा विस्तरशो वर्णिताः सन्ति ।
(१०) किरातार्जुनीये शिवोऽर्जुनं प्रति दूतं प्रेषयति, शिशुपालवधे च शिशुपालः ।

---

६०. (अ) हर० ३।५३ (आ) तदेव १६।६३ (इ) तदेव २०।८१-८५

(११)किरातार्जुनीयेऽर्जुन–किरातयोर्मध्ये वाद–विवादो भवति, शिशुपालवधे च सात्यकि–दूतयोर्मध्ये ।

(१२)किरातार्जुनीयस्य पञ्चदशे सर्गे चित्रयुद्धवर्णनमस्ति, शिशुपालवधे चैकोनविंशतितमे सर्गे ।

(१३)उभयत्र काव्यस्य विचित्रमार्गस्य पालनं विद्यते ।

(१४)उभयोरपि स्वोपास्यदेवयो गुणानुवादः कृतः— भारविणा हरस्य, माघेन हरेश्च ।

(१५)उभयोः साहित्याचार्यै–र्महती प्रतिष्ठा कृता, भारविः 'आतपत्रभारविः' अस्ति, माघश्च 'घण्टामाघः' ।

तथ्यस्यास्यावलोकनेन ज्ञायते यद् यथा माघेन भारवे र्वर्ण्यविषयस्यानुकरणं कृतं न तथा रत्नाकरेण । रत्नाकरेण स्व प्रतिभया शक्त्या च माघे निर्दिष्टानां वस्तूनां स्वयोजनया विस्तृतिः कृता ।

वैषम्यम्

(१) रत्नाकरः केवलं वर्ण्यविषयमेव गृह्णाति, नानुक्रमम् । तस्य प्रतिपादनशैली सर्वथा स्वीया मौलिकी च । माघस्य राजनीतिः केवलं द्वितीय सर्गे एव प्राप्यते, परं रत्नाकरस्य राजनीतिः ८-१६ तथा ३२-३८ सर्गेषु प्रसृता वर्तते ।

(२) माघे केवलं द्वारकापुर्या एव वर्णनं प्राप्यते, रत्नाकरे ज्योत्स्नावती, इन्द्रपुरी, अन्धकपुरी – इति पुरीत्रयस्य ।

(३) माघेन रैवतकस्य वर्णनं चतुर्थे सर्गे ६८ श्लोकैः कृतं, रत्नाकरेण च मन्दरस्य वर्णनं चतुर्थे, पञ्चमे च सर्गे क्रमशः ४१, १५१ श्लोकैः कृतम् ।

(४) शिशुपालवधे ऋतुवर्णनं षष्ठे सर्गे प्राप्यते, सर्गस्यान्ते द्वादशभिः श्लोकैर्यमकद्वारा ऋतूनां वर्णनमस्ति । हरविजये तृतीये सर्गे ६४ श्लोकैः पञ्चमे च ५६ श्लोकै र्यमकस्य विविधै र्भेदैः कृतं वर्तते ।

(५) वनविहार–जलविहारयोर्वर्णनं माघेन सप्तमाष्टमसर्गयोः ७५, ७१ श्लोकैः कृतं परं रत्नाकरेण सप्तदश–अष्टादश–सर्गयोः ११४, १०१ श्लोकैः कृतम् ।

(६) माघेन 'सूर्यास्त' नाम्नि सर्गे 'प्रसाधनस्य' (८३–५५) 'दूतीगमनस्य' (५६–५६) च समावेशः कृतः, परं रत्नाकरेण 'प्रसाधनम्', 'दूतीसङ्कल्पः' इति नाम्ना सर्गद्वयं स्वतन्त्रतयोपनिबद्धम् । श्लोक–संख्या च क्रमशस्तयोर्वर्तते – ६५, ७१ ।

(७) शिशुपालवधस्य तृतीये सर्गे ७०–८१ श्लोकै–र्वर्णितः समुद्रो हरविजये २२, ३० सर्गयो र्वर्णितो दृश्यते ।

(८) शिशुपालवधे दशमे सर्गे मद्यपान–सुरतयोर्वर्णनमस्ति । मधुपानं ३८ श्लोकैः सुरतं च ८२ श्लोकैर्वर्णितं परं रत्नाकरेणोभयोः कृते पृथक्–पृथक् सर्गावुपनिवद्धौ । श्लोकसंख्या च क्रमशः ९३, ११६ अस्ति ।

(९) एकादशे सर्गे वैतालिकैः श्रीकृष्णस्य प्रबोधनार्थं कृता स्तुतिः प्रभातवर्णनेन साकमुपनिबद्धा वर्तते परं रत्नाकरेण 'प्रत्यूषवर्णनम्' (श्लोकाः ११६, पृथक् 'भगवत्प्रबोधनम्' (श्लोकाः ६३) च पृथक् कृतम् ।

(१०)भीष्मद्वारा कृता श्रीकृष्णस्तुतिः चतुर्दशसर्गे केवलं ३२ श्लोकैरुपनिबद्धा परं ऋतुभिः शिवस्तुतिः हरविजये षष्ठे सर्गे १९७ श्लोकैः कृताऽस्ति ।

(११)शिशुपालवधेऽपि शिशुपालस्य दूतः श्रीकृष्णसभायामागच्छति, परं सोऽन्धकसभायां गतस्य शिवदूतस्य कालमुसलस्य तुलनायां क्वापि न तिष्ठति, न राजादिगतशिष्टाचारे, न च वाग्मितायाम् ।

(१२)१८–१९ सर्गयोः शिशुपालवधे युद्धवर्णनं प्राप्यते तच्च हरविजये ९ सर्गैः (४२–५० सर्गं यावत्) उपलभ्यते ।

(१३)चित्रकाव्य-निबन्धने तूभयोः साम्यमस्त्येव न । माघेन १९ तमे सर्गे ११९ श्लोकैश्चित्रयुद्धवर्णनं कृतं परं रत्नाकरेण ३८५ श्लोकैः ४३ तमे सर्गे, ८१ श्लोकैः ४६ तमे सर्गे, १४८ श्लोकैश्च ४८ तमे सर्गे चित्रयुद्धवर्णनं कृतम् ।

(१४)शिशुपालवधे द्व्यक्षराणां श्लोकानां संख्या केवलं १० एव प्राप्यते परं हरविजये सा संख्या वर्तते ७० प्राया !

(१५)शिशुपालवधे केवलमेकः श्लोकोऽर्थत्रयवाची (१९।११६) प्राप्यते परं हरविजयेऽर्थत्रयवाचिना (४३।२९२) साकमर्थचतुष्टयवाची श्लोकोऽपि प्राप्यते (४८।१२४) ।

(१६)माघस्य पाण्डित्यं नूनं चमत्कारि, परं रत्नाकरस्य तुलनायां तु तद् विच्छायमिव प्रतिभाति । वाङ्मयस्य सजीवा मूर्तिरिव रत्नाकरेऽवाप्यते ।

(१७)माघः केवलं विचित्रमार्गस्यैव कविः परं रत्नाकरः सुकुमार–मध्यम-विचित्र मार्गाणाम् ।

(१८)माघस्य वर्णना–विषये मल्लिनाथेनोक्तम् — 'विजयते पूर्णा पुनर्वर्णना', परं रत्नाकरस्य वर्णना न केवलं विजयत एवापि तु विजयत एवापि तु विजयतेतराम् । एतादृशी वर्णनविच्छित्तिः संस्कृत–साहित्ये न प्राप्यते ।

(१९)'नवसर्गे गते माघे नवशब्दो न विद्यते ।'-इत्युक्तिरप्यर्थवाद एव प्रतीयते ।

यावान् शब्दभाण्डारः, शास्त्रगरिमा च रत्नाकरेऽवलोक्यते न तावान् माघे।

(२०) यदप्युच्यते 'माघे सन्ति त्रयो गुणाः', तदपि रत्नाकरदृशा नाक्षरशः सत्यम्। कालिदासस्योपमां प्राप्तुं तु कश्चिदपि न समर्थः, माघस्योपमा यद्यप्युत्कृष्टाः किन्तु क्व माघः? क्व च कालिदासः?

परमुपमाक्षेत्रे माघस्योपमानां तुलनायां रत्नाकरः कयापि दृष्ट्या पृष्ठतो न वर्तते। माघस्य काश्चन शास्त्रीया उपमाः समवलोकनीयाः :

(क) अनुत्सूत्रपदन्यासा, सद्वृत्तिः सन्निबन्धना।
शब्दविद्येव नो भाति, राजनीतिरपस्पशा॥[६१]

माघो राजनीतेस्तुलनां 'शब्दविद्यया' साकं करोति रत्नाकरश्च भंग्यन्तरेण 'असाधुकाव्येन' सह देशकालादिविरोधिनः कार्यस्य तुलनां करोति :

अपार्थतादोषपरीतमक्रमं, ससंशयं, सन्धिविहीनतां गतम्।
न देशकालादिविरोधि पण्डितैः प्रशस्यते कार्यमसाधुकाव्यवत्॥[६२]

(ख) शिशुपालस्य सेनायास्तुलनां महाकाव्येन सह कुर्वन् माघः कथयति :

विषमं सर्वतोभद्रचक्रगोमूत्रकादिभिः।
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम्॥[६३]

एवं रत्नाकरोऽपि :

तत्र स्फुटरसैश्चित्रैः सुश्लोकविनिबन्धनैः।
अनेकसर्गैः संग्रामे, महाकाव्यायितं भटैः॥[६४]

(ग) माघो महासरसीनां तुलनां वाल्मीकेर्गीर्भिः साकं करोति :

एतस्मिन्नधिकमयःश्रियं वहन्त्यः, संक्षोभं पवनभुवा जवेन नीताः।
वाल्मीकेररहितरामलक्ष्मणानां, साधर्म्यं दधति गिरां महासरस्यः॥[६५]

महासरस्यः—अधिकपयसः=जलस्य श्रियं वहन्ति, पवनजन्येन वेगेन संक्षुब्धा जायन्ते, अत्र लक्ष्मणाः=सारस्यश्च स्व रामेण=रमणेन—वल्लभेनारहिताः संयुक्ता इति यावद् विराजन्ते, वाल्मीकिगिरश्चाधिकाः कपयो वानरा यास्वेवविधाः सन्ति, पवनभुवा=हनुमता च जवेन=वेगेन संक्षोभं नीताः सन्ति, रामेण लक्ष्मणेन चारहिताः सन्ति।

रत्नाकरोऽपि वनोर्व्यास्तुलनां लङ्कया करोति :

---

६१. शिशु० २।११२
६२. हर० १७।३२
६३. शिशु० १९।४१
६४. हर० ४३।८७
६५. शिशु० ४।५९

आबद्धक्रमहरिकम्प्यमानसाला सा रामाभिगमसमाकुला तदानीम् ।
लङ्केव स्फुटशुकसारणा वनोर्वी बभ्राजे घनरुचिराक्षसानुविद्धा ॥[६६]

वनोर्वी=वनभूमिः, क्रमवद्धैः हरिभिः वानरैः कम्पितसालवृक्षा, रामाणां स्त्रीणाम् अभिगमनेन=समागमनेन हेतुना आकुला, स्फुटं शुकानां कीराणामानयनं यस्यामेवंविधा, अथ च घनरुचिराक्षसानुविद्धा=घनैः=मुस्तैः, रुचिरा=सुन्दरा, अक्षाः=विभीतका येषु तैः सानुभिः=पर्वतैरनुविद्धा=व्याप्ता अस्ति ।

लङ्का च—समूहबद्धैर्वानरैः कम्पितसाला=कम्पिताः सालाः प्राकारा यस्यामेवंविधा, रामस्यागमनेन व्याकुला, स्फुटशुकसारणा=स्फुटं विद्यमानौ शुकश्च सारणश्चेति नाम्ना ख्यातौ रावणदूतौ यत्रैवंविधा, घनरुचिभिः=मेघतुल्यैः राक्षसैरनुविद्धा=व्याप्ता भवति ।

एवंविधा उपमा रत्नाकरस्य काव्ये माघापेक्षया बह्वधिकाः सन्ति । दिङ्मात्रमेवात्रोदाहृतम् ।

यावदर्थगौरवस्य प्रश्नस्तत्रापि रत्नाकरो माघमतिशेते । यथा भीष्मकृतश्रीकृष्णस्तुतावायातोऽयं श्लोकोऽर्थगौरवपरिपूर्णोऽस्ति :

सत्यवृत्तमपि मायिनं जगद्, वृद्धमप्युचितनिद्रमर्भकम् ।
जन्म बिभ्रतमजं नवं बुधा, यं पुराणपुरुषं प्रचक्षते ॥[६७]

रत्नाकरे चैवंविधानां श्लोकानामनवरतं वृष्टिरेव भवन्ती समवलोक्यते :

बहुरूप एव दधदेकरूपतां स्थिरधर्मतामुपगतोऽपि गत्वरः ।
नभसि स्थितोऽप्यनतिवृत्तभूमिकः, सविधास्पदोऽपि भजसे विदूरताम् ।
चिदचित्परोऽप्यचिदचित्परो भवन्नतदाभ एव हि तदात्मतां दधत् ।
सदसत्परोऽप्यसदसत्परस्थितिर्बहुवक्त्रपादवयवैर्विनाकृतः ॥
शिशिरः सहस्रकरमण्डलोदरे शशिनि स्थितोऽपि दधदूष्मसम्पदम् ।
उभयात्मको निरुभयात्मकोऽथवा गहनस्त्वमित्थमलपङ्कतायसे ॥[६८]

यद्यपि माघस्य पद-लालित्यस्य भूयसी प्रशंसास्ति, परं निपुणं परीक्ष्यमाणे माघोऽस्यां दिशि रत्नाकरस्य सम्मुखे क्वचित्तिष्ठत्येव न । दिङ्मात्रमुदाह्रियते :

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभ्रितशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशानया ॥[६९]

रत्नाकरस्य पदलालित्यं मनाग् दीयते :

---

६६. हर० १७।४४
६७. शिशु० १४।७०
६८. हर० ६।४८–५०.
६९. शिशु० ६।१४

(क) घटितषट्पदपेटकपाटलापटलसम्पुटपाटनपाटवम् ।
स्फुटयता नवबन्धुरसौरभप्रसरता सरता मरुता दधे ।।[१००]

यथावा :

(ख) योधाः परस्परमपारपरम्पराकपर्याकुलाः शरपरम्परया तदानीम् ।
कम्पानुकम्प्यभयकातरसम्परायपारायणप्रणयिनस्त्वरया परीयुः ।।[१०१]

एवं शताधिकान्युदाहरणानि पदलालित्यस्य रत्नाकरे प्राप्तुं शक्यन्ते ।

रत्नाकरो यत्र माघस्य भावान् गृह्णाति तत्र कामपि विच्छित्तिं जनयति । शिशुपालवधे कापि नायिका नायकमुखात्सपत्नीनाम श्रुत्वा कान्तं शालीनतया श्लेषबलेनोपालभते :

तदयुक्तमङ्ग ! तव विश्वसृजा, न कृतं यदीक्षणसहस्रतमम् ।
प्रकटीकृता जगति येन खलु, स्फुटमिन्द्रताथ मयि गोत्रभिदा ।।[१०२]

नायिका कथयति—त्वया त्र गोत्रभेतृत्वं (१. सपत्नीनामग्रहणं २. पर्वतपक्षभेदनं च) प्रकटयता स्वकीयमिन्द्रत्वं तु द्योतितं परं विधात्रा एकैव न्यूनता समपादि यद् गोत्रभेतृत्वं तु त्वय्यापादितं परं न सहस्रनयनत्वम् । यदि नेत्राणां साहस्री तवाभविष्यत्तर्हि भवान् तां सपत्नीं सहस्रकृत्वोऽवलोकयिष्यदित्यहो ते प्रच्छन्नकामुकत्वम् ।

रत्नाकरश्चेमं भावं कियता सौन्दर्येन परिवर्तयति । नायिका कथयति यद् भोः सुभग ! विधात्रा भवदीया शतमन्युता (१. शतापराधता २. इन्द्रता च) अक्षुण्णैव निर्मिता । इन्द्रस्तु हस्ते वज्रं गृहीत्वा गोत्रभेदं करोति, परं भवांस्तु वाचि वज्रं गृहीत्वा गोत्रभेदं करोति । त्वत्कृतोऽयं गोत्रभेदो मां वज्र-प्रहाराहतामिव विदधातीति भावः । माघस्य भावे कीदृशः परिष्कारः कविना कृतः ।

अक्षुण्णा बत शतमन्युता तवेयं
साश्चर्या सुभग! विनिर्ममे विधात्रा ।
निश्शङ्कं विदधत एव गोत्रभेदं
वज्रस्ते निवसति वाचि यन्न पाणौ ।।[१०३]

वीराणां रणगमनसमये तेषां पत्नीनां विह्वलतावर्णनावसरे, मधुपानप्रसङ्गे, सपत्नीनामीर्ष्यायां, प्रकृतिवर्णने, शिवगणानां, दूतस्य, अन्धकस्य च संवादेषु तथा चान्यान्येष्वपि स्थलेषु रत्नाकरेण माघापेक्षयाऽधिका वैदुषी, वैदग्धी, वर्णनचातुरी, प्रतिभा च प्रदर्शिता । अस्मिन् विषये बहुवक्तव्यतयापि स्थाली-

---

१००. हर० ३।४१ १०१. हर० ४४।४३
१०२. शिशु० ६।८० १०३. हर० १७।८३.

पुलाकन्यायेनोक्तमर्थंजातं प्रदर्श्यालङ्कारविमर्शकारस्येदं वचः समुद्ध्रियते :

माघः शिशुपालवधं विदधत् कविमदवधं विदधे ।
रत्नाकरः स्वविजयं 'हरविजयं' वर्णयन् व्यवृणोत् ॥

माघेन शिशुपालवधं विदधता मन्ये कवीनां मदस्य वध एव कृतः । रत्नाकरेण च हरविजयं वर्णयता स्वकीयो विजयः सर्वात्मना उद्घोषितः ।

(२१) संक्षेपत इदं वक्तुमुचितं यद् भारवौ यस्य प्रस्थानस्य बीजं दृश्यते, माघे तस्य पल्लवनं, रत्नाकरे च बद्धमूलता, विस्तारः, उच्छ्रायता चावलोक्यते । माघो विचित्रमार्गस्य श्रेष्ठतरः कविरस्ति, न च श्रेष्ठतमः । माघो विद्वान्, रत्नाकरो 'वागीश्वराङ्कः', माघो रत्नमञ्जूषा परं रत्नाकरो रत्नानामाकरः, माघो रमणीयता परं रत्नाकरः क्षणे-क्षणे यन्नवतामुपैति तदेव रमणीयताया रूपम् । किमधिकम् ? :

विचित्रमार्गमूर्धन्यं रत्नाकरमजानता ।
वृथैव केनचित्प्रोक्तं, माघे सन्ति त्रयो गुणाः ॥

एतदतिरिक्तं भास[१०४]-विशाखदत्त[१०५]-हर्षवर्धन[१०६] -प्रभृतीनामपि भावा यत्र-क्वचित् प्रतिविम्बिताः समवलोक्यन्ते । परन्नेदं महत्त्वपूर्णम् ।

## (इ) प्रदानम्

### (क) रत्नाकरः शिवस्वामी च

शिवस्वामी रत्नाकरस्य समकालिक आसीत् ।[१०७] सुभाषितावलीषु कोषटीकासु चाप्यस्य कवेः कृतीनां बहूनि पद्यान्युपलभ्यन्ते । ......काव्यप्रकाशकृता मम्मटेन "भद्रात्मनः.........", "उल्लास्य काल...........", "दर्पान्ध–गन्ध ........" "अत्यायतैः.. ........." इत्यादि पद्यचतुष्टयं कप्फिणाभ्युदयप्रथमसर्गस्थमुदाहृतम् । ——एभिरुद्धरणैरेतदपि सम्यक् स्फुटीभवति यदनेन महाकविनान्येऽपि बहवो ग्रन्था निर्मिता ये कालयवनिकाच्छन्नवपुषो नेदानीमुपलब्धुं शक्यन्ते ।[१०८] यद्यपि स शैव आसीत्तथापि 'चन्द्रमित्र' नाम्नो बौद्धाचार्यस्य प्रेरणया बौद्धसाहित्ये 'कप्फिणस्य' प्रसिद्धावदानस्य कथानकं तेन महाकाव्यरूपे उपनिबद्धम् । इदं महाकाव्यं काव्यदृशाऽत्यन्तं महत्वपूर्णं वर्तते

१०४. तुलनीयम्–स्वप्नवासवदत्तम् ४।२. हर० २०/५६

१०५. " –मुद्राराक्षसम् १।२ हर० २।५५,५६

१०६. " –रत्नावली ३/७ हर० १६।६८

१०७. मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः ।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः ॥ (राजतरङ्गिणी)

१०८. कपिफणाभ्युदय– भूमिका, पृ० ८४.

परं हरविजयवदस्यापि प्रचारो विरलतां गतः । विंशतिसर्गात्मकस्यास्याप्येकमेव संस्करणं १९३७ ईशवीयाब्दे पञ्जाम्बु–विश्वविद्यालयतः श्री गौरीशङ्कर, एम० ए०, बी० लिट्० महाभागेन प्रकाशितमासीत् । इदं महाकाव्यं 'शिवाङ्कम्' अस्ति ।

यद्यपि शिवस्वामिना स्वोपजीव्यानां कवीनां सूच्यां रत्नाकरस्य नाम[१०६] न सन्निवेशित परं तस्य कला रत्नाकरेण भृशं प्रभाविताऽस्ति । न केवलं काव्य–कलैवापितु कथाविन्यासोऽपि रत्नाकरेण प्रभावितोऽस्ति । तद्यथा :

(१) हरविजयस्य प्रथमे सर्गे शिवस्तुतिः, 'ज्योत्स्नावत्या' राजधान्या वर्णनम्, तदधिपतेः शङ्करस्य च वर्णनमस्ति । कप्फिणाभ्युदयेऽपि प्रथमे सर्गे बुद्ध-स्तुतिः, विन्ध्याचलस्थिताया 'लीलावत्याः' पुर्याः कप्फिणस्य च तदधिपतित्वेन वर्णनमस्ति ।

(२) हरविजयस्य सप्तमे सर्गे देवेष्वन्धकस्यात्याचारं श्रुत्वा शिवसभायाः क्षोभवर्णनमस्ति, एवमेव कप्फिणाभ्युदयस्य तृतीये सर्गेऽपि कप्फिणसभायाः क्षोभो वर्णितोऽस्ति ।

(३) हरविजयस्य ८-१६ सर्गेषु कालमुसलद्वारा प्रस्तावितस्यान्धकस्योपर्या-क्रमणप्रस्तावमभिलक्ष्य विचारो भवति । गम्भीरविचारविमर्शानन्तरं षोडशे सर्गे दूतप्रेषणस्य निश्चयः क्रियते, एवमेव कप्फिणेऽपि ४–५ सर्गयोः सुबाहुः प्रसेन-जितमाक्रान्तुं कथयति परं भीष्मकस्य परामर्शानुसारमन्ते 'दर्शको' दूतरूपेण प्रेष्यते ।

(४) हरविजयस्य ३०-३१ सर्गयो र्ज्योतिष्मतीतः प्रारभ्य स्वर्गाभोगस्य वर्णनमस्ति, ३२ तमे सर्गेऽन्धकराजधानीवर्णनं, कालमुसलस्य स्वागतं, शिव–संदेशकथनमस्ति, ३३ तमे सर्गे उषनसः प्रत्युत्तरदानं, ३४ तमे सर्गेऽन्धकसभा–क्षोभवर्णनम्, ३५ तमे सर्गेऽन्धकासुरव्याहारः, ३६ तमे सर्गे कनकाक्षनयो–पन्यासः, ३७ तमे सर्गे वज्रबाहुविस्फूर्जितं, ३८ तमे सर्गे दूतप्रतिगर्जितं शिव–सन्निधौ प्रत्यावर्तनम्, ३९-४१ सर्गेषु सैन्यसंरम्भः, सैन्यप्रस्थानं, तदवसरे च वीराङ्गनानां व्याकुलत्वं वर्णितमस्ति । इयतां सर्गाणां कथानां कप्फिणे एक-स्मिन् षोडशे सर्गे एवोपनिबन्धनं कृतमस्ति । १-११ श्लोकेषु दर्शकस्य श्रावस्तीं

---

१०६. विदितबहुकथार्थश्चित्रकाव्योपदेष्टा,
यमककविरगम्यश्चारुसन्दानभाणी ।
अनुकृतरघुकारोऽभ्यस्तमेण्ठप्रचारो
जयति कविरुदारो दक्षिणपदः 'शिवाङ्कः' ॥ (कप्फिण० २०।४७)

प्रति यात्रा, दर्शकस्य स्वागतं (१२-१४), दर्शकस्य सन्देशकथनं, (२६-४८), प्रसेनजितः प्रत्युत्तरम् (४८-६४), दर्शकस्य प्रत्युत्तरं (६५-८२), दर्शकस्य प्रत्यावर्तनम्, प्रसेनजित उत्तरस्य कप्फिणस्य सामन्तेषु प्रभावनिरूपणम् (८४-११०), उभयपक्षीयवीराणां स्वप्रियाभिर्मेलनम् (११२-१२७) सेनाप्रयाणम् (१२८-१३०), वर्णितमस्ति ।

(५) युद्धवर्णनेऽप्युभयोः साम्यमस्ति ।

(६) एतदतिरिक्तं पर्वर्तुवर्णनकुसुमावचयजलविहारसन्ध्याचन्द्रोदयमधुपानकामक्रीडावर्णनमपि महत्साम्यं बिभ्रति ।

रत्नाकरस्य वर्णनानैपुण्यं तु शिवस्वामी प्राप्तुमनीश एव तथापि तस्याभिव्यञ्जनां तु सोऽनुकरोत्येव । समभावानां श्लोकानामेका तालिकाऽधस्ताद् दीयते :

| हरविजये | कप्फिणाभ्युदये |
|---|---|
| (१) | (१) |
| अस्त्युन्नते सुरसरिज्जलधाव्यमान-<br>भागे नवार्करुचिमन्दरशैलशृङ्गे ।<br>ज्योत्स्नावतीति नगरी भुवनत्रयैक-<br>भूषा वृषाङ्कशिरसीव शशाङ्कलेखा ।।[110] | अस्ति प्रथा परमदैत्यसुखायनान्तः-<br>स्यूता गजाननगुहावसिताधिविन्ध्यम् ।<br>लीलावतीति नगरी कलितापदाना,<br>दुर्गेव भावितरणा हरिणाङ्कनेन ।।[111] |
| (२) | (२) |
| रोषारुणीकृतदृशो नडकूबरस्य<br>हुङ्कारधूमपटलीं मुखरन्ध्रभागात् ।<br>दैत्याधिराजकवलीकरणादरेण,<br>कृत्यानिवैक्षत जनः सहसोत्पतन्तीम्।।[112] | तत्रत्यैश्चकिततरं निरीक्ष्यमाणा,<br>सम्भाव्यत्रिभुवनघस्मरोग्रशक्तिः ।<br>कृत्येव भ्रूकुटिरति स्फुटा ललाटे,<br>शाल्वस्य प्रसरदमर्षमुल्ललास ।।[113] |
| (३) | (३) |
| प्लोषावलग्नस्य वपुष्युदग्र-<br>ज्वालाजटालस्य विलोचनाग्नेः ।<br>प्रशान्तिहेतोरिव सम्भ्रमेण,<br>निर्यान्ति धर्मोदकशीकरौघाः ।।[114] | अन्तःस्थस्फुरदुरुमन्युवह्निसृष्ट-<br>स्पष्टोष्मक्वचनविशोषशङ्कयेव ।<br>भीमस्य द्रुततरविद्रुतं निरीय,<br>स्वेदाम्भो बहु बहिरानशे शरीरम्।।[115] |

११०. हर० ९।४
१११. कप्फिण० ९।२
११२. हर० ७।१३
११३. कप्फिण० ३।२८
११४. हर० ६।६३
११५. कप्फिण० ३।१२

(४)

निरूपयामो नयवर्त्म केवलं।
यथाभिलाषास्तु परस्य वृत्तयः ॥[११६]

(४)

वचो हि वाच्यं हितमायतौ चरैः।
स्वतः प्रमाणं परतस्तु भूपतेः।
स्वतन्त्रवृत्ता विधयो विधेरिव ॥[११७]

(५)

विभर्ति पारिप्लवतामुदन्वत-
स्तदूर्मिसंसर्गकृतामिवोत्थिता।
अवैभि लक्ष्मीर्नयवर्त्मनागता,
स्थिरं निबध्नाति नृपे पदं पुनः ॥[११८]

(५)

गुरुभरगिरिमन्थक्षोभिताक्षोभ्यसिन्धु–
व्यतिकररसयोग्या वासनावासितेव।
समभिमतविमर्दा रौद्रकर्मप्रियेषु
प्रसरति रममाणा तादृशेष्वेव लक्ष्मीः[११९]

(६)

अभ्येयुषां विरचिताञ्जलिवन्धमुर्वी-
तृष्णा दयार्द्रमनसा परिरक्षतासून्।
येनोपतापशमनैकरसेन खड्ग-
धाराजलैः शममनीयत शात्रवाणाम्॥
फूत्कारपावकशिखानिकरो दिधक्षु-
राक्रान्तकालियफणानिकुरुम्बमुक्तः।
निर्वापितः सपदि यस्य शिखण्डमूल-
निष्यन्दमानयमुनाजलनिर्झरौघैः ॥[१२०]

(६)

उल्लास्य कालकरवालनवाम्बुवाहं
देवेन येन जरठोर्जितगर्जितेन।
निर्वापितः सकल एव रणे रिपूणां
धाराजलैस्त्रिजगति ज्वलितप्रतापः॥[१२१]

(७)

ततस्य कस्यचिदुपयातु समीपमाशु
सन्देशदानचतुरो दितिजस्य दूतः।
भिन्नेतरप्रकृतिमण्डलकार्यतत्व-
बोध यतः प्रणिधिमेव रिपोस्तमाहुः॥[१२२]

(७)

तदुपान्तमियातु कश्चन
द्विषदोकस्तव शासनात्पुरः।
रिपुसंप्लवजिष्णुभूभुजां,
परमास्त्रं खलु दूतभारती ॥[१२३]

(८)

वीचिक्षोभाविर्भवत्सम्भ्रमत्वात्
कान्तं काचित् सस्वजे जातसौख्या।

(८)

प्रतिनववनितानितान्ततान्ते
जलमवतीर्य ततस्तरङ्गभीरुः।

---

११६. हर० १२।२६
११८. हर० १२।३३
१२०. हर० १६।३६, १६।७४
१२२. हर० १६।७६

११७. कप्फिण० २।२४
११९. कप्फिण० ४।३१
१२१. कप्फिण० १।२४
१२३. कप्फिण० ५।३६

प्रायेणेत्थं श्रेयसे विक्रियापि,
प्रादुर्भूता कल्पते कोमलानाम्।।[124]

अगलितमलगत् गले स्वभक्तु-
र्विपदपि कुत्रचिदावहेत् फलाग्र्यम्।।[125]

(९)

व्यक्तोपकारमधुना स्थगितासु दिक्षु,
प्रेयोगृहं सुखमलक्षितमेव यामः।
धम्मिल्लबन्धरुचिरैरभिसारिकाभिः
प्रेम्णा तमश्चिरमितीव शिरोभिरूहे[126]

(९)

प्रियवसतिप्रयाणसमये विदधत्पदवी-
मिदमुपकारि नस्तम इतीव निमग्नगमाः।
अलिमलिनस्य वेणिवलयस्य रुचां निचयै-
रभिसरणोत्सुकाःप्रियतमाःपुपुषुःसुदृशः[127]

(१०)

स्रस्तान्धकारवसनां रजनीपुरन्ध्रि-
मालिङ्गति प्रियसुधास्रुति दिक्सखीभिः।
दूरं मृणालशकलामलतन्मयूख-
हासच्छटाञ्चितमुखीभिरिवापसस्रे।।[128]

(१०)

श्यामां समाश्लिष्य सरागमिन्दौ,
नभःस्थलं तल्पमिवाधिरूपे।
तमोमुचः सख्य इवोच्छ्वसन्त्यो,
दिशः शनैर्दूरमिवापसस्तुः।।[129]

(११)

उदयशिखरिशृङ्गवेदिकायां
नवरुधिरारुणकान्ति भानुबिम्बम्।
अनुकृतदिवसप्रवेशलक्ष्मी-
प्रसवविशङ्कटगर्भशय्यमासीत्।।[130]

(११)

प्राचीश्वासोपमरुदधिप्राच्यशैलाश्मशय्यं,
सम्प्राप्तायां दिवि नवनवां वासरस्य प्रसूतिम्।
आविर्भावो भवति रुधिरा धाग्मिश्रस्य सद्यः
सांक्रदन्यां ककुभिकलभस्येवसन्ध्यातपस्य।।[131]

(१२)

क्रूरेऽपि मार्दवोपेताः,
वामाचारेऽपि दक्षिणाः।
पापेऽपि शुद्धमतय-
स्त्वादृशा भुवि दुर्लभाः।।[132]

(१२)

वैभवेऽप्यनहङ्काराः,
शक्तावपि मृदुक्रियाः।
सौम्यास्तेजस्यपि स्युः के,
द्वित्रा अपि भवादृशाः।।[133]

एतेषां पद्यानां तुलनात्मकसमीक्षया सरलतयैव शिवस्वामिन उपरि रत्नाकरस्य प्रभावोऽनुमातुं शक्यते।[134] उभयो रुचिः समतां धारयति। उभौ काश्मीरिकौ, उभौ कलाकारौ, उभौ पण्डितमण्डलीभिः प्रशस्तौ। उभौ काव्यमार्गे नवीनप्रयोगकरणे कुशलौ, परं पाण्डित्येऽभिव्यञ्जनशक्तौ, जीवनदर्शनस्य

१२४. हर० १८।४१

१२५. कप्फिण० १०।२१

१२६. हर० १९।४३

१२७. कप्फिण० ११।३५

१२८. हर० २०।४७

१२९. कप्फिण० १२।१५

१३०. हर० २८।८०

१३१. कप्फिण० १५।१८

१३२. हर० ३२।७९

१३३. कप्फिण० १६।३२

१३४. द्रष्टव्या — 'कप्फिणाभ्युदयभूमिका', पृ० ५१–५९.

स्फीततायां रत्नाकरः श्रेष्ठतरस्तस्य प्रभावश्च शिवस्वामिनि स्पष्ट एव।

(ख)रत्नाकरः श्रीहर्षश्च–

संस्कृत–साहित्ये श्रीहर्षो महतीं प्रतिष्ठां भजते। विचित्रमार्गग्रस्तां कविता-कामिनीं स एव उदतीतरत्। ध्वनि–रस–सम्प्रदाययोः प्रतिष्ठानन्तरं केषाञ्चिन्महाकवीनां ध्यानं, चित्रकाव्यस्य गड्डुभूतत्वात्ततो विरतं सद् रसाभिमुखं बभूव, परं चमत्कारप्रियताया एतावान्मोहो जागरूक आसीद् यत् परःशताः कवयश्चित्रबन्धेषु संलग्ना आसन्। पाण्डित्यं तु रसवादिभिरप्यनिवार्यत्वेन स्वीकृत एवासीत्। श्रीहर्षस्य पाण्डित्यं विचित्रमार्गस्य कवीनां पाण्डित्यात्किमपि विचित्रतरमेव। स चित्रबन्धेभ्यः स्व कवितां मुक्तामेवास्थापयत्, तथापि वैदुषी तत्र स्फुटतयाऽचकाशत। तेन स्व महाकाव्यस्य नैषधीयचरितस्य नाम 'आनन्दाङ्कम्' इति कृतम्। वाग्देवताप्राप्तप्रसादः स गन्धमृग इव स्वस्मादेव काव्य-कस्तूरिकां जनयामास। तस्य कृतेऽन्यस्मात्स्थानाद् भावग्रहणस्यावश्यकतैव नासीत्, तथापि सुरतादिवर्णनेऽन्यत्र च केषाञ्चित् स्थलानां भावाः रत्नाकर-कवितया साकं संवदन्ति। तत्र तेन स्वाद्भुतप्रतिभयैतादृक् परिवर्तनं कृतं यत्तद् वस्तुजातं नितान्तं मौलिकं प्रतीयते।

पुरारिपुरी-वर्णने समायातस्य :

यस्यां हरिन्मणिविनिर्मितहर्म्यरश्मि-
लीढोदराः प्रतिदिनं निशि तारकौघाः।
उद्भिन्नकोमलकुशाङ्कुरकोटिलग्न-
मैशोदबिन्दुपटलश्रियमालिलिङ्गुः ॥[१३५]

श्लोकस्यास्य भावः श्रीहर्षेण कियत्या विमलया शेमुष्या पाण्डित्यपूर्वकं परिवर्तित, इत्यवलोकनीयम्। "उत्ताना वै देवगावश्चरन्ति" इति श्रुतिवाक्यमवलम्ब वैदर्भीकेलिशैलस्य मरकतशिखरादुत्थिता रश्मयोऽतिप्रचण्डवेगेन ब्रह्माण्डं यावद् गच्छति, परं तत आघातं प्राप्य विनिवर्तन्ते। हरितवर्णान् रश्मीन् ग्रासबुद्ध्या ऊर्ध्वमुख्यो देवगावो मुखं व्यादाय गृह्णन्ति। इत्थं दमयन्ती प्रतिदिनमनायासमेव गोग्रासदानस्य फलमधिगच्छति :

वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीकृतावाङ्मुखत्वैः।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म ॥[१३६]

---

१३५. हर० ५।३०

१३६. नैषधीय० २।१०५

यद्यस्मिन् सम्वन्धस्थापनं दूरारूढकल्पनेव प्रतीयते तर्हि श्लोकान्तरे तूभयोर्भावसाम्य सुस्पष्टमेव। तच्च श्रीहर्षेणातीव चारुतया परिवर्तितम्। 'चन्द्रोदय' नाम्नि विंशे सर्गे :

स्पृष्टानया दिनकरांशुभिरह्निवह्निगर्भैरपि क्वचन चक्लमुरम्बुजिन्यः।
मम्लुस्तरां शशिकरैरपि ताः सुधार्द्रैरक्षुण्णवामचरिता बत पद्मनेत्राः ॥[१३७]

या अम्बुजिन्यो दिवसे प्रचण्डैः सूर्यकिरणैरपि सन्तापं नावापुस्ता एव रजनिकरस्य शीतलकिरणैः क्लान्ति भेजुरित्यहो आश्चर्यम्! परमाश्चर्यस्य विषयो नास्ति, पद्मनेत्रा वामाचरणे पण्डिता भवन्ति।

श्रीहर्षोऽमुं भावमन्यथाकृत्य दमयन्तीमुखात् कथापयति :

यस्येश्वरेण यदलेखिललाटपट्टे, तत्स्यादयोग्यमपि योग्यमपास्य तस्य।
का वासनास्तु विभृयामिह यां हृदाहं नार्कातपैर्जलजमेति हिमैस्तु दाहम् ॥[१३८]

श्रीहर्षस्य श्लेषस्यापूर्वाक्षमता हरविजयस्यैकत्रिंशत्सर्गस्य श्लिष्टवर्णनेन नूनं प्रभाविताऽवलोक्यते।[१३९]

एवं श्रीहर्षे रत्नाकरस्य स्वल्प एव प्रभावोऽवलोक्यते। विशेषतः श्रीहर्षेण स्व गभीरया धियाऽन्येषां भावानां तथा साधारणीकरणं कृतं येन ते 'स्वाकारवदभिन्नत्वेनास्वाद्यन्ते', तत्र परकीयता न प्रतीयते।

विक्रमाङ्कदेवचरितकर्तुं बिल्हणस्य कवितायामपि यत्र-तत्र रत्नाकरस्य भावाः प्राप्यन्ते। दिङ्मात्रं यथा :

श्लिष्टोऽनयोः किमु भवेदुत नैव सन्धि-
र्देहार्धयोर्घटितयोरिति तत्परीक्षाम्।
आरिप्सु यस्य रभसादिव चक्षुरर्ध-
नारीश्वरस्य निरियाय ललाटपट्टात् ॥[१४०]

इत्यस्य :

एकस्तनस्तुङ्गतरः परस्य, वार्तामिव प्रष्टुमगान्मुखाग्रम्।
यस्याः प्रियार्धस्थितिमुद्वहन्त्याः, सा पातु वः पर्वतराजपुत्री ॥[१४०*]

इत्यत्र। परमस्य भूयान् प्रभावस्तु परवर्तिषु चित्रकविष्वेवास्ति।

## (ग) अन्ये चित्रकवयः

रत्नाकरेण काव्यक्षेत्रे एतादृशः कलाया मानदण्डः स्थापितो यत्परवर्तिनः कवयस्तस्यामेव शैल्यां प्रचुरतया काव्यरचनां कर्तुमारब्धवन्तः, परं तेषां कला

---

१३७. हर० २०।७०
१३८. नैषधीय० १३।५०
१३९. हर० ३१।२०–३२
१४०. हर० १।६२.
१४०* विक्रमाङ्कदेवचरितम् १/४

चित्रबन्धकर्मणि तु विशेषज्ञतामवाप . किन्तु सुकुमारमध्यममार्गयोर्विमुखीव बभूव। अत्र संक्षेपत एवंविधानां रचनानां चर्चा क्रीयते —

एकादशशतकस्य प्रारम्भे समुत्पन्नस्य नीतिवर्मणः 'कीचकवध' काव्यं यमकस्य सुन्दरं निदर्शनम्। अस्मिन् पञ्च सर्गाः, १७७ श्लोकाश्च सन्ति। सर्गचतुष्टये तु यमकं पूर्णतया विराजते, तृतीये सर्गे श्लेषस्य प्रौढं रूपमवलोक्यते यत्र द्रौपदी द्व्यर्थकेभ्यो वाक्येभ्यः पाण्डवानां परिचयं करोति। इदं १९२९ ईशवीयाब्दे ढाकाविश्वविद्यालयतः प्रकाशितमभूत्।

## युधिष्ठिरविजयम् :

केरलीयः श्री वासुदेवः कविर्महावैयाकरणः सिद्धयमककविश्च वर्तते। तस्य 'युधिष्ठिरविजयम्', 'वासुदेवविजयम्' चेति काव्यद्वयं सुप्रसिद्धं वर्तते। 'युधिष्ठिरविजयं' प्रसन्नयमकस्योदाहरणम्। अस्मिन्नष्टावुच्छ्वासाः सन्ति। एषु संक्षेपतो महाभारतीया कथोपनिबद्धा। यमककाव्यानि प्रायेणातिक्लिष्टानि भवन्ति, परं वासुदेवो यमकस्यासमः प्रयोक्ता अतस्तस्य काव्येऽधिका दुरवबोधता नास्ति। द्वित्राण्युदाहरणानि दीयन्ते :

(क) तव भूपापास्तनयाः पाण्डवनिधनाय यान्ति पापास्तनयाः।
करिण इवालाने तान् भवन्निदेशे कुरुष्व बालानेतान्॥[१४१]

व्यासो धृतराष्ट्रं नीतिशून्यान् कौरवान् समराद् व्यावर्तनाय कथयति—"हे भूप! तव तनयाः पापा किञ्चापास्तनयाः = नीतिरहिताः, पाण्डवानां मारणाय यान्ति, तस्मात् तान् मतिमन्दान् एतान् आलाने गजानिव स्व शासने कुरुष्व।

यथावा :

(ख) अपि फलवैकल्यं ते दधते केचित् फलेन वै कल्यन्ते।
तदिह भवेदिष्टस्य प्राप्तिः सत्येव सम्भवे दिष्टस्य॥[१४२]

भगवान् श्रीकृष्णोऽर्जुनं कथयति — "अस्मिन् संसारे केचित् पुरुषाः कृतेऽपि प्रयत्ने फलवैकल्यं = फलराहित्यं दधते, केचन फलेन वै=निश्चयं, कल्यन्ते= युज्यन्ते। तदेवं दिष्टस्य = भाग्यस्यानुकूलतायामेवेष्टस्य प्राप्तिः सम्भवा, नतु तत्प्रातिकूल्ये इत्यर्थः।

वासुदेवो यमकमाध्यमेन शास्त्रीयं पाण्डित्यमपि समुपस्थापयति। यथा विश्वरूपदर्शनानन्तरं कौरवसभासु केचन भगवन्तं श्रीकृष्णमेवमभिष्टुवन्ति :

---

१४१. युधिष्ठिरविजयम् ४।१०

१४२. तदेव ६।८५

दूरगमक्षरतायाः प्रचक्षतेऽनक्षगम्यमक्षरतायाः ।
रूपं नादमयं ते शब्दे चेतांसि ये जना दमयन्ते ॥[१४३]

भगवन् ! ये जनाः परब्रह्मात्मके शब्दे चेतांसि दमयन्ते = संयोजयन्ति ते, अक्षरतायाः = अक्षेष्विक्रियेषु रतायाः सम्पृक्तायाः अक्षरतायाः = न क्षरतीत्यक्षरमकारोकारमकाररूपं तस्य भावस्तत्ता तस्या अक्षरतायाः दूरगं नादस्वरूपमित्यर्थः । नादो हि ओङ्कारस्थितबिन्दूर्ध्वचन्द्रादिमय परमेव भासते । यथा चोक्तम् — 'श्री सदाशिवः स्वकालपरिक्षये विन्दूर्ध्वचन्द्रनिरोधिका आक्रम्य नादे लीयते तथाच—अनक्षगम्यय्=इन्द्रियातीतमथवा—अकारादिक्षकारान्ता वर्णा अक्षास्तैर्नगम्यम् । एवंविधं ते घोषाद्यतीतं परनादमयं रूपमाचक्षते वर्णयन्ति । घोषाक्षराश्चेमे—"घोषो रावः स्वनः शब्दः स्फोटाख्यो ध्वनिरेव च । झाङ्कारो घुङ्कृतश्चैव, अष्टौ शब्दाः प्रकीर्तिताः ।"[१४४]

अस्यैव महाकवेरपरं 'वासुदेवविजयामिधं' काव्यमपि महावैयाकरणत्वं द्योतयितुमुपनिबद्धं सद् विदुषश्चमत्करोति । इदं काव्यं भट्टिकाव्यं स्मारयति दिङ्मात्रमुदाह्रियते :

पापठ्यमानस्य ऋचश्चतुष्पदाश्चेकीयमानस्य विधेरथात्मनि ।
वैरायमाणेषु विकाषिणा मधोरूष्मायमाणेन वचोऽन्वगृह्यत ॥[१४५]

प्रायेणैकसहस्रमितेशवीयाब्दे कालिदासनाम्ना प्रसिद्धं विंशतिश्लोकात्मक 'राक्षसकाव्यम्' चित्रकाव्यदिशि विलक्षणः प्रयोगः । अनेकेषां टीकाकर्तॄणां व्याख्याः काव्यमिदमलङ्कुर्वन्ति । 'कविराक्षसीयम्' इत्यभिधेयं शतश्लोकात्मकं काव्यान्तरमप्युपलभ्यते ।

श्लिष्टकाव्येषु सन्ध्याकरनन्दिनो 'रामपालचरितम्' महत्वपूर्णमस्ति । अस्मिन् पालवंशीयस्य राज्ञो भगवतो रामचन्द्रस्य च वर्णनं युगपदेव कृतम् । रामपालस्य समयः (१०८४–११३०) अस्ति, अतोऽस्य रचनाकालोऽपि स एव प्रतीयते ।

अनेन काव्येन रामायण–महाभारतयोः श्लिष्टवर्णनदिशि कवीनामभिरुचिः प्रबुद्धा बभूव । एतादृशानि काव्यानि 'द्विसन्धानं' संज्ञयाऽभिहितानि ।

अनुमानतो नवमशताब्द्या अन्तिमे भागे समुत्पन्नस्य घनञ्जयस्याष्टादशसर्गात्मकं 'द्विसन्धानमहाकाव्यं' श्लिष्टकाव्यशृङ्खलायां महत्वपूर्णं स्थानं धत्ते ।

१४३. तन्त्रसारः – श्रीमदभिनवगुप्तः ।

१४४. स्वच्छन्दतन्त्रः ।

१४५. वासुदेवविजयम्, १।१२.

अस्मिन् जैनधर्मानुसारं रामायण–महाभारतयोः कथा सममेव वर्णितास्ति। धनञ्जयो द्विसन्धानेऽस्ति निपुणः। यथा चाह राजशेखरः :

द्विसन्धाने निपुणतां सतां चक्रे धनञ्जयः।
यया जातं फलं तस्य सतां चक्रे धनञ्जयः॥

स्थालीपुलाकन्यायेन पद्यद्वयमधस्ताद्दीयते :

अथाभवत्स दशरथोग्रविक्रमः,
स्मरद्दिवानिशमृषिधर्मसंयमान्।
पुरःक्रियः शशिरुचिपाण्डुराननं,
विकाशयन्नधिपतिरिद्धशासनः॥[१४६]

रामायणपक्षे

अथ स दशरथोऽभूत्। कीदृशः ? उग्रविक्रमः, इद्धशासनः, ऋषिधर्मप्रणीतान् संयमान् व्रतादीन् स्मरन् किञ्च नगरश्रियश्चन्द्रचन्द्रिकाशुभ्रमाननं विकाशयन् स्थितः।

महाभारत-पक्षे

पाण्डुः, अधिपतिः, अभवत्। कीदृशः ? सदशरथोग्रविक्रमः=दशया=तारुण्यपूर्वयाऽवस्थया सह वर्तते सदशः, रथेनोग्रस्तीव्रतया सोढुमशक्यो विक्रमो यस्य सः। अन्यत् पूर्ववत्।

यथा वा :

या कौशल्या रूपशीलेन चार्वी,
दीनां काकुं त्यागसान्निध्ययोगात्।
दीनेष्वर्थिष्वाददे लोभवादा-
न्नासौ राज्ञः स्वान्तमन्तर्जहार॥[१४७]

रामायणपक्षे

या रूपशीलेन चार्वी = सुन्दरी कौशल्या, अलोभवादान् = लोभरहितान्, त्यागसान्निध्ययोगात् = दानशीलतायाः सान्निध्यात्, दीनेष्वर्थिषु याचकेषु, दीनां = मन्दां, काकुं =कण्ठध्वनिं, न आददे। असौ एवंभूता सा राज्ञः स्वान्तम् = अन्तःकरणं, जहार=हृतवती।

महाभारतपक्षे

द्वितीयपादस्य 'दीनाङ्का + कुंती+आगसाम्+ निधि + अयोगात्' इति

१४६. द्विसन्धान० २।१

१४७. तदेव २।३२.

च्छेदं विधायार्थो भविष्यति। असौ कुन्ती राज्ञः = पाण्डोर्हृदयं जहार। या दीनेष्वर्थिषु लोभवादान् = कार्पण्यवचनानि नाददे। कस्मात्? आगसाम् = अपराधानां, निधेः कोषस्य, अयोगात् = असम्बन्धात्। किञ्च न दीनाङ्का न दीनोऽङ्को यस्याः सा तथोक्ता, रूपशीलेन चार्वी च। कौशल्या = कुशला च, अथवा कौ–पृथिव्यां शल्यमिव विद्यमाना-सपत्नीनां हृदयेषु स्वगुणाधिक्येन शल्यमिव समुत्पादयन्ती।

धनञ्जयस्य काव्यमिदं चित्रकाव्यक्षेत्रे विशिष्टं स्थानं धारयति।

## कविराजसूरे राघवपाण्डवीयम्

जयन्तीपुरस्य कादम्वनरेशस्य कामदेवस्य (११८२–११८७) सभापण्डितस्य कविराजसूरेस्त्रयोदशसर्गात्मकं 'राघवपाण्डवीयं' श्लिष्टं महाकाव्यं चित्रकाव्येषु विशिष्टं स्थानमधिगच्छति। रामायण-महाभारतयोः कथा सममेवात्र चलति। स्वविजये कविराजस्य गर्वोक्तिरन्वर्थैव प्रतिभाति :

सुवन्धुर्वाणभट्टश्च कविराज इति त्रयः।
वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥[१४८]

स्वकाव्यविषये कविराजस्येदं कथनं सर्वथा सत्यमस्ति :

श्रीमद्रामायणं गङ्गा, भारतं सागरो महान्!
तत्संयोजनकार्यज्ञः, कविराजो भगीरथः॥
रम्या रामायणी यैषा भारती सैव भारती।
अर्धनारीश्वरमयी मूर्तिरेकत्र शोभताम्॥
एकत्र चन्द्रातपसुन्दरस्य पार्श्वे परस्मिन् स्फुरदुष्णभासः।
अयं सुमेरोरनुयाति लीलां कथाद्वयाश्चर्यमयः प्रबन्धः॥[१४९]

कानिचिदुदाहरणानि प्रस्तूयन्ते :

(क) गुणैरुपेता गुरुभीष्महृद्यैः क्षत्रानुरूपैर्वचनैर्विनीताः।
कृपाश्रयास्ते कुशलाः कलासु, प्रमाणकोटिप्रवणा विजह्रुः॥

## रामायणपक्षे

ते रामादयः कुमाराः, गुणैः=शौर्यादिभिरुपेताः[१५०] सन्तः, गुरुभीष्महृद्यैः =गुरुभिः, भीष्मैः, हृद्यैः, क्षत्रानुरूपैश्च वचनैर्विनयं प्राप्ताः, कृपाश्रयाः= दयालवः, कलासु कुशलाः, प्रमाणानां शास्त्राणां, कोटौ= मूर्धन्यभागे प्रवणाः सन्तः विजह्रुः=विहारं चक्रुः।

१४८. राघवपाण्डवीयम् १।४१
१४९. तदेव, १।४०, ४२, ४३.
१५०. तदेव, १।७२.

महाभारतपक्षे

ते युधिष्ठिरादयः कुमाराः, गुरुभीष्महृद्यैः = गुरोर्द्रोणस्य, भीष्मस्य च हृद्यैः =मनोहरैः, गुणैरुपेताः सन्तः, क्षत्रा = विदुरेण, अनुरूपैर्वचनैर्विनीताः कृपाश्रयाः = कृपाचार्यमाश्रिताः, कलासु कुशलाः, प्रमाणकोटिप्रवणाः = प्रमाणकोटिः= क्रीडास्थानं तत्र प्रवणा विहारं चक्रुः ।

यथावा :

(ख) रसप्रसङ्गैरपराजितानां द्विजिह्वमार्गैर्नवशीकृतानाम् ।
तीव्रप्रतापज्वलनेन तेषां भाव्यं भयं शत्रुगणोऽनुमेने ।।[१५१]

रामायणपक्षे

रसप्रसङ्गैः = वीररसप्रयोगैः, अपराजितानाम् =अपराजेयानाम्, द्विजिह्वमार्गैः =सूचकव्यवहारैः न वशीकृतानाम्, तीव्रप्रतापाग्निना च तेषां भाविभयस्य विषये शत्रुगणैरनुमानं व्यधायि ।

महाभारतपक्षे

रसप्रसङ्गैः = विणप्रयोगैः, अपि, अपराजितानाम् = न मृतानां, द्विजिह्वमार्गैः = पातालगमनानन्तरं सर्पदंशैरपि नोपरतानां, तीव्रप्रतापशालिनं लाक्षागृहानलेन चाप्यमृतानां तेषां पाण्डवानां सकाशाद् भाविभयस्य विषये शत्रुभिरनुमितम् ।

यद्वा :

(ग) प्रतीपदर्शिनी सैषा विचचारास्य यत्पथि ।
ततो गुरुगिरा तस्या जीवितेशो बभूव सः ।।[१५२]

रामायणपक्षे

यत् = यतः, सैषा = ताटका, अस्य = रामस्य, पथि = मार्गे, प्रतीपदर्शिनी = वामाचरणा, विचचार = बभ्राम, ततो गुरुवचनेन= विश्वामित्रकथनेन, तस्यास्ताटकाया जीवितेशः = यमः, स रामो बभूव ।

महाभारतपक्षे

यतो स्य भीमस्य पथि सैषा हिडिम्बा, प्रतीपदर्शिनी = वनिता, विचचार, "प्रतीपदर्शिनी' वामा वनिता महिला तथा" इत्यमरः । तस्मात् कारणाद् गुरोः =युधिष्ठिरस्य गिरा = वचनेन, स भीमस्तस्या हिडिम्बाया जीवितेशः = पतिरभूत् ।

यत्रैकस्यापि श्लिष्ट पदस्य योजने भूयान् परिश्रमो भवति किं पुनः

१५१. राघवपाण्डवीयम् १।७५ १५२. तदेव १।८५

सर्वस्यापि प्रबन्धस्यैवंविधायां रचनायाम् ? यथा चोक्तं कविराजेन स्वयमेव :

पदमेकमपि श्लिष्टं वक्तुं भूयान् परिश्रमः ।
कथाद्वयैक्यनिर्वोढुः किं धरापतितोऽधिकम् ॥[153]

प्रायेणाष्टादशशतकेन हरदत्तसूरिणा विरचितं 'राघवनैषधीयम्' अपरं श्लिष्टं काव्यं यत्र राम-नलयोः कथा सकौशलं श्लेषबलेन वर्णिताऽस्ते । अस्मात्काव्यादेकमेवोद्धरणं दीयते :

रामोऽभिरामः सनलः प्रतीतः पुत्रोऽभवत्तस्य सुसत्यसन्धिः ।
सलक्ष्मणः सद्भरतः सशत्रुहा चतुर्विधत्वं गतवानिवैकः ॥[154]

**रामपक्षे**

दशरथस्य रामनामकः पुत्रोऽभूत् । कथंभूतः ? सलक्ष्मणः, सद्भरतः, सशत्रुहा । एकः सन्नपि स चतुर्विधत्वं बभार । रामं विशिनष्टि-अभिरामः= सुन्दरः, सनलः=सन्वन्ति=विप्रेभ्यो ददति धनादिकमिति ते सनास्तान् लाति स्वीकरोतीति सनलः, प्रतीतः=प्रख्यातः, सुसत्यसन्धः=सत्यप्रतिज्ञश्च ।

**नलपक्षे**

तस्य वीरसेनस्य नलः पुत्रोऽभवत् । कथंभूतः ? रामः='रं' पावकं सेवत इति रामः ; आहिताग्निरित्यर्थः । अभिरामः=सुन्दरः, प्रतीतः=सस्मितः, सलक्ष्मणः=लक्ष्मीवान्, 'लक्ष्मीवांल्लक्ष्मणः श्रीलः' इत्यमरः । सद्भरतः=बिभर्तीति भरस्तस्य भाव इत्यर्थे तल् प्रत्यये भरतः, सतां भरतः सद्भरतः । शेषं पूर्ववत् ।

अस्मिन् काव्ये १४८ श्लोकाः श्लेषमण्डिताः स्व चमत्कारेण पाठकान् चमत्कुर्वन्ति ।

द्वादशशताब्द्यामुत्पन्नस्य विद्यामाधवस्य 'पार्वतीरुक्मणीयम्', षोडशशतकोत्पन्नस्य वेङ्कटाध्वरिणो 'यादवराघवीयम्' विलोमकाव्यं, विजयनगरस्य राज्ञो वेङ्कटस्य (१५८६-१६१४) सभापण्डितस्य चिदम्बरस्य 'राघवपाण्डव-यादवीयम्' यत्र रामायण-महाभारत-भागवतानां तिस्रः कथाः सहैव प्रचलन्ति । षोडशशताब्द्यां लक्ष्मणभट्टस्य पुत्रेण रामचन्द्रेण 'रसिकरञ्जनम्' नाम विलोमकाव्यं निर्मितं यस्मिन्नेकतः पठनेन शृङ्गारपरको विलोमतः पठनेन च वैराग्यपरकोऽर्थो निर्गच्छति । 'चिदम्बरकवेः' 'पञ्चकल्याणचम्पूः' अतितरां प्रसिद्धा, यत्र रामकृष्ण-शिव -विष्णु -सुब्रह्मण्यानां विवाहकथाः समुपनिबद्धाः सन्ति ।[155]

---

१५३. राघवपाण्डवीयम् १।३९

१५४. तदेव १।२

१५५. द्रष्टव्यम् – सं०सा०का इतिहास, बलदेव उपा०, अष्टमं सं०, पृ० ३२८ ३३.

हेमचन्द्रेणैकं 'सप्तसन्धानं' काव्यं विरचितमासीदिति प्रसिद्धिर्वर्तते। मेघ-विजयगणिप्रणीतं 'सप्तसन्धानं' नवसर्गात्मकं काव्यं वर्तते यत्र पञ्च तीर्थ-कराणां, रामस्य, कृष्णस्य च वर्णनं युगपदेव कृतमस्ति। कवेः शान्तिराजस्यापि 'पञ्चसन्धानम्' काव्यमुपलब्धं वर्तते।[१५६]

षोडशशताब्द्यामुत्पन्नेन दैवज्ञ सूर्येण विरचितं 'रामकृष्णविलोमकाव्यम्' ३६ श्लोकमितं सदप्याश्चर्यजनकं यत्र श्लोकानामेकतः पठनेन रामपरकोऽपरतः पठनेन च कृष्णपरकोऽर्थो निर्गच्छति। उदाहरणार्थम् :

तं भूसुतामुक्तिमुदारहासं वन्दे यतो भव्यभयं दयाश्रीः।
श्रीयादवं भव्यमतोयदेवं संहारदामुक्तिमुतासुभूतम्॥

रामपक्षे

तं भूसुतामुक्तिं वन्दे। भूसुता=सीता,[१५७] तस्या मुक्तिर्मोक्षो यस्मात् स रामस्तं वन्दे। किम्भूतम्? उदारहासम्, भव्यभवम्=पवित्रावतारम्, यतो दया श्रीश्च प्रादुर्भवति।

कृष्णपक्षे

श्री यादवं वन्दे। किम्भूतम्? भव्यमतोयदेवम्=भव्या भा दीप्तिर्यस्यासौ सूर्यस्तथा तोयशब्देन चन्द्रस्तयोर्द्योतनाद्देवः। अथ च संहारदामुक्तिम् संहारो-ऽनर्थस्तं ददातीति या सा पूतना, तस्या मुक्तिर्मोक्षो यस्मात्सः। पुनः उत असु-भूतम्=सर्वेषां प्राणभूतम्।

चित्रकाव्यस्येदमनुपममुदाहरणम्।

भट्टिकाव्यात्प्राप्तप्रेरणाः केचन कवयो व्याकरणं शिक्षयितुं स्वकीया रचनाः कृतवन्तः। प्रायेण दशमशतकोत्पन्नस्य भट्टभीमस्य 'रावणार्जुनीयम्' यत्राष्टा-ध्याय्या अनुक्रममनुरुध्य रावणस्य कार्तवीर्यार्जुनस्य च कथा वर्णितास्ति। दश-मशतकस्यैव हलायुधेन 'कविरहस्यनाम्नि' काव्ये धातुप्रयोगस्य शिक्षणं ददता कृष्णराजस्य चरितमुपनिबद्धम्। पूर्वचर्चितस्य वासुदेवविरचितस्य 'वासुदेव-विजयस्य' सर्गत्रयेऽपूर्णत्वात् तत्पूर्तिं नारायणकविः सर्गत्रयात्मकं स्व 'धातुकाव्यम्' निर्माय कृतवान्। अस्मिन् काव्ये १९४४ धातूनां प्रयोगो विहितो-ऽस्ति। हेमचन्द्रस्य 'कुमारपालचरितस्य' आद्येषु विंशतिसर्गेषु संस्कृत-व्याकरणस्य, अवशिष्टेष्वष्टसु च सर्गेषु प्राकृतव्याकरणस्य नियमानां प्रदर्शन-

---

१५६. भारतीय ज्ञानपीठ प्रकाशनस्य धनञ्जयकृतस्य 'द्विसन्धान महाकाव्यस्य' सम्पादकीयम्, पृष्ठम् १९.

१५७ रामकृष्णविलोमकाव्यम्, १.

मस्ति । अष्टादशशताब्दयामुत्पन्नस्य शिवरामत्रिपाठिनो 'नक्षत्रमाला'पि चित्रकाव्यमस्ति ।[१५८]

**कल्पवृक्षः**

एषु सर्वाधिकश्चमत्कारी वर्तते १६८६ वैक्रमाब्दे लब्धजनुषा श्रीमन्महामाहेश्वराचार्यवर्येण साहिबकौलेन १७३३ वैक्रमाब्दे विरचितः 'कल्पवृक्षः'। विचित्रोऽयं कल्पवृक्षो रचयितुर्वंशावतंसै र्वैद्यवरैः श्रीमद्भिर्नन्दलालकौलैः १९६६ ईशत्रीये मह्यमर्दाशि । अद्भुतोऽयं ग्रन्थः शिवाद्वैतपरकः । चम्पूरूपेण चास्य रचना कृता वर्तते । या चित्रमयी प्रतिलिपि र्वैद्यवराणां पार्श्वे आसीत् सा १८६२ वैक्रमाब्दे रचिता वर्तते । ६ 'फुट' परिमाणायते लम्बिते च कर्गले, यस्य रचना कर्गलखण्डान् संयोज्य कृता वर्तते, उपरिष्टादधः १४७ रेखास्तदनु वामतो दक्षिणं रेखाङ्कनं कृत्वा प्रतिपङ्क्ति १४९ कोष्ठा निर्मिता सन्ति । एष्वेका पंक्तिः (उपरिष्टाद् वामतश्चापि) संख्यानां कृते निर्धारिता स्ति । एवं १४६ १४८ इत्यनयोर्गुणनं कृत्वा २१८०८ कोष्टा निर्मिताः सन्ति । तेषु केचन रिक्ता अपि । लेखनयोपयोगः केवलं २१६०० कोष्ठकानामेव कृतः । इति प्रतीयते यदहोरात्रे गृह्यमाणानां मानवश्वासोच्छ्वासानां गणनामभिलक्ष्यैवेषा संख्योररीकृतास्ति ।

एषु कोष्ठकेषु कृष्ण-रक्त-मसि-लिखितान्यक्षराण्यतीव कौतुकं जनयन्ति । रक्ताक्षराणि त्वधिकांशतः कालवशादस्पष्टानि संवृत्तानि, कृष्णमसिना कल्पवृक्षस्य चित्रमङ्कितं वर्तते । ततश्च कस्मिंश्चित् प्रकोष्ठे एकं, कस्मिंश्चिद् द्वयं कस्मिंश्चच्च त्रयमक्षराणां लिखितं वर्तते । यदि च वामतो दक्षिणं पठ्यते तदा तु किमपि वैचित्र्यं नाधिगम्यते, परं यदि रक्ताक्षराणां योजना क्रियते तर्हि संस्कृतस्य विविधग्रन्थानां गीता-ईश्वरप्रत्यभिज्ञा-स्तोत्रावली-योगवासिष्ठ-देवीनामविलास - दुर्गासप्तशती - भवानीसहस्रनाम- गायत्रीमन्त्र- महिम्नस्तोत्र देवीभागवत-कुमारसम्भवप्रभृतीनां कतिपय श्लोकानामवतारणा सञ्जायते । तथा च - अरबी-फ़ारसी-निर्मितानां रचनानां तात्कालिक-हिन्दी-निर्मितानां दोहानां चाविर्भूतिर्भवति । उदाहरणार्थम् — २६ पंक्तेः ६४ तमात् कोष्ठकादरम्भ २७ पङ्क्तेः १०६ कोष्ठकं यावच्चायं श्लोको निर्गच्छति :

यस्मिन् सर्वं, यतः सर्वं, यत् सर्वं, सर्वतश्च यः ।
यश्च सर्वमयो नित्यं तस्मै सर्वात्मने नमः ॥

---

१५८. द्रष्टव्यम् – रामकृष्णविलोमकाव्यम् (चौखम्बा सं०) भूमिका, पृ० १३.

६४ पङ्क्ते: ४० तमात् कोष्ठकादारभ्य पारसीक भाषाया: पद्यमिदं प्रादुर्भवति :

दर बाग मेहेशत मनखुदारा दीदम्,
अज़वोतये दिल गुलि इर्फ़ा चीदम् ।
मन बोदुओ बोद कस निस्त जुदा,
खुदा दीदं खुदखुदा रा दीदम् ।।

'कुरानशरीफ़' ग्रन्थादप्युद्धरणानि सुसंयोजितानि । तद्यथा :

इजाजुल जिलत उल अरजुज़िल जालहा ।
ब अखरजत उल अरजु अस्काल हा ।।

एवमेव 'गुरुग्रन्थसाहबाद्' एकं हिन्दी-पद्यमपि तत्रोपलभ्यते :

मेरा मुझ में कुच्छ नहीं, सब कुछ है तेरा ।
तेरा तुझको सौंपते क्या लागे मेरा ? ।।

एवमेव पंजाबी-काश्मीरीप्रभृतीनां भाषान्तराणां पद्यान्यपि तत्र सुनिपुणतया संयोजितानि ।

कियता परिश्रमेण बुद्धिवैभवेन च ग्रन्थस्यास्य रचना कृता वर्तते ![१५९] एतच्चान्यदपि तथ्यं मनो मोहयति यदवरङ्गजीव-समकालिकतयाऽशान्ते वातावरणेऽपि कवि: स्वकीयां मतिमव्यग्रां विधायैतादृशीं काव्यरचनां चकार ।

**श्रीदेवीनामविलास:**

अनेनैव साहबकौल महाभागेन प्रणीता 'देवीनामविलास' नाम्नी कृतिर्भवानी भक्ति-दृशा, चित्रकाव्यदृशा चानुपमा वर्तते । प्रकाशिता चेयं जम्मू-कश्मीरशोध-विभागत:, १९४२ ईशवीये वर्षे ।

आधुनिकयुगेऽपि चित्रकाव्यपरम्परा विश्रान्ता नास्ति । वाग्वल्लभाख्य-छन्दोग्रन्थरचयिता श्रीदु:खभंजन: कवि:, 'श्रीलक्ष्मीश्वरोपायनकर्ता'

---

१५९. श्रीमतां वैद्यवराणां पार्श्वे एषाऽद्भुता रचना सुरक्षिताऽऽसीत् । १९४७ ईशवीयें वर्षे कवायलीनामाक्रमणावसरे ते यथाकथञ्चित् स्वामूल्यानि पुस्तकान्यादाय भारते समायाता: । १९६६ तमे ईशवीये वर्षे ७२ वर्षदेशीयास्तेऽस्य 'कल्पवृक्ष'स्य प्रकाशनाय प्रयतमाना आसन् । अर्थाभावादुपेक्षया च संस्कृतस्यैतादृशान्यमूल्यानि रत्नान्येवमेव नामशेषाणि सज्जायन्ते । श्रीमतां वैद्यवराणां काचित्प्रवृत्तिस्ततो नाधिगता: । तदा तेषां सङ्केतोऽयमासीत् — श्रीनन्दलाल कौल:, वैद्य:, खरयार, श्रीनगरम् (जम्मू-काश्मीर:) । कल्पवृक्षस्यास्मिन् विवरणे तेषां 'ए ब्रीफ़् इण्ट्रोडक्शन टू द स्टडी आफ़् आचार्य साहिब कौल्' स 'कल्पवृक्ष'नामकादप्रकाशितनिबन्धात् साभारं साहाय्यं गृहीतं वर्तते।

श्रीरघुवीर मिश्रः, 'चित्रबन्धकाव्य'रचयिता श्रीदामोदरशास्त्री—साम्प्रतिकाश्चित्रकवयः सन्ति।[160] किञ्च राजस्थानान्तर्गत 'नागौर'—स्थानस्य स्वामी-लक्ष्मणशास्त्री आधुनिकश्चित्रकविरस्ति। अस्य विशालकायो ग्रन्थः 'श्रीविष्णुचरितामृतम्' अस्ति यस्मिन् विष्णुसहस्रनामस्तोत्रस्य श्लोकाः सप्तत्रिंशत्सर्गेषु ८५६ श्लोकैरुपनिबद्धाः सन्ति। एवमेव 'श्रीरामविवाह' नाम्नि काव्ये भरतशत्रुघ्नयोर्मातामहालयगमनस्य वृत्तान्तः५६श्लोकैरुपनिबद्धः। अस्मिन् अन्त्यादियमकमस्ति। 'श्रीहरिद्वादशाक्षरीस्तोत्रम्' 'श्रीविष्णुचतुर्विंशत्यवतारस्तोत्रम्' चैवंविधे काव्ये। 'श्रीरामपादयुगलीस्तवे' विश्वामित्रप्रणीतस्य 'श्रीरामदुर्गस्तोत्रस्य' क्रमशः एकैकादक्षरात्प्रतिच्छन्दस आद्यन्तौ कृतौ। 'हरिस्तोत्रस्य' दशसु श्लोकेषु क्रमशः प्रथमचरणेषु धातुगणानां, द्वितीयचरणेषु लकाराणां, तृतीयचरणेषु प्रक्रियाणां प्रयोगस्तथा प्राथमिकस्य श्लोकत्रयस्य चतुर्थपादेषु पुरुषाणामवशिष्टानां सप्तश्लोकानां चतुर्थपादेषु सप्त-दिनानां परिगणना हरिस्तुतिश्चास्ति।

१८९१ ईशवीये समुत्पन्नस्य श्रीपण्डितप्रवरस्य रामरूपशास्त्रिणः 'चित्र-काव्यकौतुकम्' नाम काव्यं १९६५ ईशवीये वर्षे प्रकाशितमभूद्[161], यस्या-वलोकनेन संस्कृत-विदुषां चित्रकाव्यं प्रति प्रेम, असाधारणो भाषाधिकारः, गम्भीरञ्च पाण्डित्यं युगपदेवाक्ष्णोः समन्तादाविर्भवति।'

अनेन संक्षिप्तविवेचनेनैतज्ज्ञायते यद् रत्नाकरानन्तरं विरचितं समग्रमपि चित्रकाव्यं येनकेनापि रूपेण तस्मात् प्रभावितमस्ति। तद्विधं महाकाव्यं निर्मातुं तु कश्चित् प्रभुरेव नाभूत्, शैलीषु विच्छित्तिरेव प्रायशः कविभिर्व्य-र्तानि। ये विचित्रमार्गस्य कवयो नासंस्ते रसमार्गस्य रचनाश्चक्रुः।

---

१६० चित्रकाव्यकौतुकम्, भूमिका, पृ० ३०

१६१. प्रकाशकः— मोतीलाल-वनारसीदासः, दिल्ली।

## एकादशोऽध्यायः

# उपसंहारः

विगताध्यायेषु वर्णितानां विषयाणामालोचनेनेदं सम्यग्ज्ञायते यद् रत्नाकरस्य 'हरविजयं' संस्कृत-साहित्येऽतिद्वयीं स्थितिं लभते । किं शास्त्रीयदृष्ट्या, किं वर्णनवैभवेन, किं रसयोजनया, किं चित्रकाव्यदृशा, किं सांस्कृतिकाध्ययन-दृष्टिकोणे–सर्वैरपि दृष्टि-बिन्दुभिरस्यानुपमता सिध्यति । स तेषु विरलेषु कविवरेष्वस्ति ये कल्याणीं गिरं सत्यां लेखां चित्रविद इवाविष्कुर्वन्ति ।[1]

शास्त्रीयदृष्ट्या काव्येऽस्मिन् नायको भगवान् शंकरः, नायिका च भगवती पार्वती, अन्धकः प्रतिनायकः, विजेतव्यादीनां चेष्टादय उद्दीपनविभावा, रसाभिव्यञ्जिका मानसिकशारीरिकचेष्टाश्चानुभावाः धृतिमतिगर्वस्मृतितर्करोमाञ्चाः सञ्चारिभावाः, उत्साहः स्थायिभावः, वीररसोऽङ्गी, रसान्तराण्यङ्गानि, अन्धकवधः फलावाप्तिः, रीतयः सर्वाः, प्रधानतया च गौडी, गुणाः सर्वे, प्रधानमोजः, अलङ्काराश्चापि सर्वविधाः—शब्दार्थोभयात्मकाः, उत्तममध्यमाधमभेदेन काव्यस्य सर्वा अपि विधा अत्र प्रतिष्ठिताः, उत्साहपूर्णं जीवनदर्शनम्, अप्रतिमश्च सुभाषितानां भाण्डारः ।

'विशुद्धवर्णोज्वलहंससंहतिः, प्रसादगाम्भीर्यविशेषशालिनी, मनोरमा सरस्वती' तस्य काव्यं वसुन्धरापीठमिव व्यभूषयत् ।[2] तदीया प्रतिभापि चित्र कवीनधरीचकार ।

कालिदासस्य भावतरलता, भारवेरर्थगौरवम्, दण्डिनः पदलालित्यम्, माघस्य वैदुष्यम्–सर्वमपि रत्नाकरे एकस्थमिवाभाति। वस्तुतो माघेन स्वकाव्याद् स्वकीया या स्थितिः काव्यजगति निर्मिताऽऽसीत् तामतिक्रान्तुमेव रत्नाकरेण

---

१. कल्याणीं गिरमुत्स्रष्टुं विरला एव जानते ।
सत्यां लेखां विलिखितुं चित्रकर्मविदो यथा ॥ (हर० ३२।७०)

२. तत्रैव १२।१८

हरविजयस्य रचना कृता प्रतीयते। माघो वैष्णव आसीद्, रत्नाकरश्च शैवः। माघस्य महाकाव्यं 'लक्ष्मीपतेश्चरितकीर्तनमात्रचारु' वर्तते, रत्नाकरस्य च 'चन्द्रार्धचूडचरिताश्रयचारु'। माघो रत्नाकरस्य समक्षं हतप्रभ इवावलोक्यते।

श्रेष्ठकाव्यस्य कृते यद्यदावश्यकं तस्य विषये कविनानेकत्र स्वयमेव सङ्केताः प्रदत्ताः सन्ति। काव्येनापार्थतादोषरहितेन, क्रमवद्धेन, सन्देहशून्येन, ससन्धिना च भाव्यम्।[३] सतां वाणी सुकुमार-मध्यम-विचित्राख्ये मार्गत्रयेऽप्रतिहतं प्रसरति।[४] यासु श्रुतासु सुधियामपि धीविकल्पाः सुप्तप्रवुद्धवदनर्गलमुन्मिषन्ति ताः श्रवणहारिगभीरवन्धा गिरः सर्वसाधारण्यो न भवन्ति।[५] यत्र सरस्वती प्रतिष्ठां कुरुते तादृशी जिह्वैव शरीरिणामशेषं करणग्रामं विशिनष्टि।[६] वाणी तथा पङ्कजस्य कर्णिका कस्य मनो न हरते?[७] एवंविधं काव्यस्य मानदण्डं हृदि निधाय यः कविः स्वकाव्यं करोति तस्य गुणान्वितायां शास्त्रसम्मततायां च सन्देह एव न भवति।

रत्नाकरस्य काव्यादर्शस्तात्कालिकैराचार्यैः कविभिश्च प्रतिष्ठित आदर्श एवासीत्। तस्य काव्यं तस्मिन् सिद्धान्ते काञ्चनमिव शुद्धमवतरति। तद्विधानां काव्यानामास्वादपक्षस्य प्रश्नः पृथगस्ति। तानि काव्यानि सामान्य पाठकानां कृते न विरचितानि। तेषां रचना विशिष्टव्युत्पत्तिमतां सहृदयानां कृते विहिताभूत्। 'ये शब्दार्थपरीक्षणप्रणयिनो ये वा गुणालंक्रियाशिक्षाकौतुकिनो विहर्तुं मनसो ये च ध्वनेरध्वगाः। क्षुभ्यद्भावतरङ्गिते रससुधापूरे मिमंक्षन्ति ये'[८] तेषामेव व्युत्पत्तिमतां सहृदयानां कृते एतादृशानां महाकाव्यानां रचनाऽभूत्। त एव चैषामधिकारिणः। एवं स्थिते काव्यस्य 'आविद्वदङ्गनाबालप्रतीतार्थम्'[९]—इति लक्ष्यं तु पूर्णं न भवति, परमनेनैवंविधानां काव्यानां महत्वं न्यूनं न भवति।

आसीत्स कदाचिदेवविधो युगो यस्मिन् कविता केवलं सरसोपदेशदानचतुरा कान्तेव नाभूदपितु विविधग्रन्थग्रन्थिभिर्युक्ता दुर्भेद्यवाभूत्। स्पर्धा-संग्रामे कविभटैर्महाकाव्यायितम् :

३. हर० १२।३२
४. तदेव १३।१०
५. तदेव १३।११
६. तदेव ३८।३
७. तदेव ३८।६
८. शिशुपालवधटीकायां मल्लिनाथस्य प्रस्तावना।
९. भामहः, काव्यालङ्कारः २।३

तत्र स्फुटरसैश्चित्रैः सुश्लोकविनिबन्धनैः ।
अनेकसर्गैः संग्रामे महाकाव्यायितं भटैः ॥[10]

तत्रान्योन्यस्पर्धाबद्धगर्धैः कविभि र्योऽयं विचित्रमार्गोऽवतारितोऽवलम्बित-स्तत्पृष्ठभूमौ रत्नाकरस्य कर्तृत्वमनन्यसाधारणीं विशिष्टतामवगाहते ।

इदमत्रावधेयम् —यद् रत्नाकरस्य भारती केवलं विचित्रमार्ग एवाप्रतिहत-प्रसारा नैवास्त्यपितु सुकुमार–मध्यम–विचित्रेषु त्रिष्वपि तस्या अबाधा गतिः । 'क्वचिद् भगवती जाह्नवीवेयं विचित्रमार्गाव क्वचिन्नवीनमेघमालेव निरन्तर-रसवर्षणनिपुणा, क्वचिच्च समरसमरसा पताकिनीव प्रतिपदविदलित–विद्वेषिवक्षःस्थला वीरत्वप्रदर्शनसम्भारा चकितचकितानिव जनान् सम्पादयन्ती विलोक्यते ।' क्वचिल्लीलाविलासकिलकिञ्चितहावभावैः कान्तेव मोहयति, क्वचिदलङ्कारसम्भारभासुरवदनेव योषिच्चमत्करोति,क्वचिदालोलिकातरलरसना जननीवोपदिशति ।

"वस्तुतो रत्नाकरवाणी कामप्यनन्यसाधारणीं नैपुणीमाविष्करोति ; अनुब-ध्नानि सदैवोर्वरां कल्पनाम् । उपलक्षयति सूक्ष्मनिरीक्षणधियम् । प्रकटयति लब्धावसरं विकटपदप्रयोगपाटवम् । उपलालयति पदलालित्यम् । ग्रथ्नाति गभीरभावकुसुमस्तबकम् । व्यक्तीकरोति प्रलम्बसमासवैदुषीम् । आलम्बते च शब्दाडम्बरमपि यथास्थानम् । क्वचित्तर्जनं करोति, अन्यत्र भर्त्सनम्, इतरत्र गर्जनम् । एकत्र निर्दिशति, अपरत्रोपदिशति ।·········सरसयति सरस्वतीम् । प्रदर्शयत्यादर्शम् । निदर्शयति जीवनपथं समीचीनतया । किं किं न करोति सत्कविसमुचितमखिलमेव ।[11]

चित्रकाव्यस्य त्वयं सम्राडेवास्ति । भारवि -माघयोश्चित्रबन्धाः प्रायेणानु-ष्टुप्स्वेवोपनिबद्धाः, परं रत्नाकरेण वसन्ततिलका –शार्दूलविक्रीडित -उपजाति, स्रग्धरा -प्रभृतिषु दीर्घेषु छन्दःसु तानुपनिबध्य स्वापूर्वं सामर्थ्यं प्रदर्शितम् ।

तस्य पाण्डित्यमप्रधर्ष्यमद्वितीयं चास्ति । यत्सत्यं तेन स्वकाव्यकला एता–वदुत्कर्षं प्रापिता यत्तदनन्तरं कश्चिद् एवंविधकाव्यरचनायां प्रवृत्त एव नाभूत् । श्रीहर्षस्य नैषधीयचरितम् अस्मात् प्रस्थानाद् भिन्नं काव्यम् । परवर्ति समग्रं चित्रकाव्य–साहित्यं रत्नाकर-प्रभावितमित्यवोचाम प्रागेव ।

अस्य 'हरविजयस्य' पर्यालोचन-समये एषा धारणा दृढतरा भवति यद् 'बृहत्त्रय्या'मिदं महाकाव्यमसम्मेलयद्भिः समालोचकपुङ्गवै र्न स्वकीया न्याय–

---

१०. हर० ४३।८७

११. सं० सा० विमर्श, श्री द्विजेन्द्रनाथ शास्त्री, ५६३–६४ पृष्ठाभ्यां, सपरिवर्तनम् ।

बुद्धिः प्रदर्शिता । किरातार्जुनीय-शिशुपालवध–नैषधीयचरितानि महाकाव्यानि बृहत्त्रय्यां गण्यन्ते । अस्यां नैषधीयचरितस्य समावेशो विचारविमर्शमपेक्षते । यतो हि नैषधं तु रस-परम्परायाः काव्यम् । किरातार्जुनीयम् 'लक्ष्म्यङ्कं', शिशुपालवधम् 'श्र्यङ्कं', नैषधीयचरितं च 'आनन्दाङ्कम्' । आनन्दप्रधानत्वादिदं काव्यं न चमत्कारप्रधानानां विचित्रमार्गीय कवीनां कृतिष्वागच्छति, अतएव न तत्र वर्तते चित्रकाव्यं प्रत्यभिनिवेशः ।

किञ्च रसाभिव्यञ्जनदृशापि नैषधस्य तत्र समावेशोऽनुचितः । किरात–शिशुपाल-वधयोः प्रधानो रसो वीरो नैषधस्य तु शृङ्गारः अतस्त्रयाणां स्वरूपे नास्त्येकरूपता ।

अपि च भारतीयपरम्परापि नैषधं 'मध्यममार्गीय' काव्येष्वेव निवेशयति । तद्यथा—"रघुवंशकुमारसम्भवे स्त्रीप्रधाने, किरातार्जुनीयमाघकाव्ये पुरुषप्रधाने, नैषधाख्यं काव्यं स्त्रीपुरुषप्रधानम् ।"[१२]

अतो नैषधस्य स्थाने रत्नाकर-रचितस्य 'हरविजयस्य' बृहत्त्रय्यां सन्निवेशो नितान्तमुचितः । यतो ह्यवशिष्टस्य महाकाव्यद्वयस्य या विशेषतास्ता सर्वा अप्यस्मिन् सन्ति । यदि विपुलाभोगतापि बृहत्त्रय्यां सन्निवेशस्य कारणं तदापि काव्यमिदमन्यत्काव्यद्वयमतिशेते । विचित्रमार्गस्य चरमा परिणतिरत्र दृश्यते । 'सरसानां सुकुमार-मार्गीयानां काव्यानां लघुत्रयी, विचित्राणां च बृहत्त्रयी', यद्ययमेव पन्थाः क्षोदक्षमस्तर्हि विचित्रमार्गमूर्धन्यस्यास्य महाकाव्यस्य बृहत्त्रय्यां सन्निवेशो न्यायप्राप्त एव ।

अनया स्थापनया नैषधस्य महत्वं न्यूनतां न गच्छति, तस्य रससिद्धत्वात्, जरामरणजभयविनिर्मुक्तत्वाच्च ।

अथ च — डा० ए० बी० कीथ महाभागेन काव्यमिदं द्वितीयश्रेणीकेषु महाकाव्येषु गणितम् ।[१३] तदपि न साधु । यदाहि काव्यस्य मार्गत्रयं काव्यज्ञैः स्वीकृतम्—सुकुमार-विचित्र-मध्यम-भेदेन, तर्हि अनेनैव क्रमेणाधरोत्तरताप्यपेक्षिता । सुकुमारमार्गे कालिदासस्य रचनाः प्रथमश्रेणीकाः, मध्यममार्गे श्रीहर्षस्य, विचित्रमार्गे भारवि-माघ-रत्नाकराणाम् । तत्रापि च रत्नाकरस्य सर्वातिशयत्वात् प्राधान्यम्, अतो विचित्रमार्गस्यायं प्रथमश्रेणीको महाकविः ।

अपरञ्चेदं महदाश्चर्यकरं 'यदेकतः श्री कीथ महानुभावो माघं प्रथमश्रेण्याः महाकविषु स्थापयति, अपरतश्च रत्नाकरं द्वितीयश्रेणीकेषु' । एतद् विभाजनं

१२. द्रष्टव्यम्—'ए क्रिटिकल स्टडी आफ़ श्रीहर्षा'ज़ नैषधीयचरितम्': डा० अरुणोदय नटवरलाल जानी, पृ० १६६

१३. ए० बी० कीथ-'संस्कृत-साहित्येतिहासः', हिन्दी-अनुवादः, षष्ठोऽध्यायः, पृ० १६६-६७

दोषयुक्तम् । यदि चालङ्कारिकताया हेतोरसौ महाकविर्द्वितीयश्रेण्यां स्थाप्यते तर्हि कथन्न माघः ? अतः श्री कीथकृतः श्रेणीविभागो नितान्तमनुचित एव ।

वर्णनाक्षेत्रे यत्स्थानं गद्यकाव्येषु श्रीमतो बाणभट्टस्य वर्तते तदेव पद्यकाव्येषु रत्नाकरस्य । एतावान् वाग्विस्तारः, एतावती समृद्धा वर्णनाशक्तिः एतावच्च निरीक्षणं दुर्लभमेवास्ति । तदीया नवनवोन्मेषशालिनी प्रतिभा यं कमपि विषयं स्पृशति तत्रैवानुपमतामापादयति ।

रत्नाकरस्य काव्ये तात्कालिकीनां सर्वासामपि शैलीनां दर्शनं भवति । तस्य वीर-काव्ये विकासोन्मुखस्य वीरगाथाकालस्य प्रवृत्तीनां स्फुटं दर्शनं भवति । वस्तुतः स वीररसस्याद्भुतः कविरस्ति ।

विद्वत्सु प्रसिद्धं ध्वनिगाथापञ्चिकाकर्तृत्वमस्य लोकाभाषाकवित्वमपि द्योतयति । 'वागीश्वराङ्कस्य' लोकभाषायां रचनाकरणं तदीयं समर्थं लोकभाषा-कविरूपमप्यस्माकं पुरस्तात् प्रकटीकरोति ।

सांस्कृतिकाध्ययनस्य प्रभूता सामग्री तदीये हरविजये प्राप्ता भवति । तात्कालिक समाजस्य, संस्कृतेश्चैकं सुविकसितं रूपं तत्र दरीदृश्यते ।

रत्नाकरस्य जीवनदर्शनं सर्वथा स्फूर्तिप्रदं प्राणप्रदं च । शैवागमानां, प्रत्य-भिज्ञादर्शनस्य च प्रभावात्तत्र नैराश्यं मनागपि नास्ति । तस्य काव्ये सर्वत्रोत्साह-स्योर्मयः, जीवनस्य परिस्पन्दः, अन्यायस्य प्रतिरोधभावना च दृश्यते । शिवा-द्वयवादे ब्रह्मवादे चेदमेव मूलभूतमन्तरम् । शाङ्कर-वेदान्ते आत्मा विश्वोत्तीर्णः, सच्चिदानन्दः, एकः, सत्यस्वरूपः, निर्मलः, निरहङ्कारः, अनादिः, अनन्तः, शान्तः, सृष्टि-स्थिति–संहारहेतुः, भावाभावविहीनः, स्वप्रकाशः, नित्यमुक्तोऽस्ति; किन्तु तस्मिन् कर्तृत्वं नास्ति । परन्तु शिवाद्वैते विमर्श आत्मनः स्वभावः । ज्ञान-क्रिययोस्तत्र सामानाधिकरण्येन स्थितिः । तस्य क्रियैव ज्ञानं यतोहि सा ज्ञातुर्धर्मः, ज्ञातुश्च कर्तृस्वरूपत्वात्तस्य ज्ञानमेव क्रियास्ति । ज्ञानक्रिययोरुन्मुख-तैवेच्छास्ति । अतएव स इच्छामय, इच्छादिशक्तित्रययुक्तः, स्वातन्त्र्यमयो वा । ऐश्वर्यविमर्श-पूर्णहन्ता-प्रभृतीन्यस्यैव स्वातन्त्र्यस्य नामान्तराणि ।

शिवाद्वैतसम्मत आत्मा सदैव पञ्चकृत्यकारी । स हि तस्य स्वो भावः । सृष्टि-स्थिति-संहार-अनुग्रह-विलया एव पञ्चकृत्यानि । शाङ्करवेदान्तादयमेवात्र विशेषः । तत्र नात्मा एवंस्वभावः । कर्तृत्वाभाववान् सः, परं शैवागमेषु कर्तृत्व-युक्तो हि सः ।

शिवाद्वैते शक्तिशक्तिमतोरभेदः । विना शक्तिं शिवस्य प्राप्तिर्दुर्लभा । एवंस्थिते पुण्यात्पुण्यस्य, अधर्माद्धर्मस्य, अकर्तव्यात्कर्तव्यस्य, अन्यायान्न्यायस्य

रक्षणार्थं प्रयत्नाः स्वत एवाविर्भवन्ति । इदमेव जीवनं, जीवनम् । "दुःखं न किञ्चिदपरं पुरुषत्वहानेः" (४५।३२), अस्य पौरुषस्य स्वाभिमानस्य च रक्षा प्राणपणेनापि कर्तव्या, प्रज्ञा ह्यत्र परमोपयोगिनी—"प्रज्ञावतां जगति तन्न यद-स्त्यसाध्यम्" (६।७५), संसारस्य सर्वमपि सुखं, सर्वापि सम्पत्, चन्द्रनिर्मला कीर्तिरुद्योगिनमेव प्राप्ता भवति (१४।३६), "तन्द्रालुभिर्न सुलभा ननु धैर्यशौर्य-शौटीर्यहार्यहृदया क्वचिदेव लक्ष्मीः" (३५।३९) एवंविधैरनेकैः सुभाषितैः स पाठकान् सन्दिशन्निव प्रतिभाति । तस्य जीवनदर्शनस्य चर्चा विस्तरशः पूर्वभागे कृतास्ति । साररूपतया अन्यायप्रतिरोधः, नैराश्यत्यागः, कर्तव्यपालनाभिनिवेशः "मुहूर्तं ज्वलितं श्रेयो, न च धूमायितं चिरम्" इत्येवं च तस्य सन्देशः प्रतीयते ।

यद्यप्यद्यत्वे रत्नाकरस्याधिकः प्रचारो नास्ति परं पुरा तु तस्य महती कीर्तिः प्रसृताऽऽसीत् । स्वमहत्वविषये स स्वयं जागरूक आसीत् । अतएव यत्र-तत्र व्यञ्जनया स स्व कवित्वविषये सङ्केतं करोति—'न रत्नदीपस्य शिखा सकज्जला (१२।२३), उत्पद्यते जगति कोऽपि स एक एव यस्योक्तिषु स्फुरति सर्वमनोरमोऽर्थः' (११।११), अन्येषु सत्स्वपि निसर्गविनिर्मलेषु मन्ये महाजनधुरां कतिचिद् वहन्ति; (११।६०) एवमादिभिर्वचनैः स स्वं प्रत्येव सङ्केतं कुर्वन् प्रतीयते ।

स सारस्वतः,[१४] उत्पादकः,[१५] चिन्तामणिः,[१६] महाकवि[१७]रस्ति । प्राचीनैर-र्वाचीनैश्च समालोचकैस्तस्य भूयसी प्रशंसा कृतास्ति । स 'तालरत्नाकर'-विरु-देनास्ति सम्मानितः । मम्मटसदृशेन समीक्षक-शिरोमणिना स्वकाव्यप्रकाशे तस्योदाहरणानि प्रदत्तानि । अनेन तस्य लोकप्रियता महत्त्वं च द्योत्यते । तद्विषयिणीनामुक्तीनां साकल्येन दर्शनं प्रथमपरिशिष्टे भविष्यति । अत्र त्वर्वा-चीनप्राचीनयोः समालोचकयोरेकैकोक्तिः प्रदीयते । रत्नाकरस्य महत्वविषये श्रीशङ्करशास्त्रिद्राविडाः कथयन्ति :

---

१४. सारस्वतः स्वतन्त्रः स्यात् । (का०मी० ४)

१५. उत्पादको मौलिकः ।
सन्ति श्वान इवासंख्या जातिभाजो गृहे-गृहे ।
उत्पादका न बहवः कवयः शरभा इव ॥ (हर्षचरितम् १।६)

१६. चिन्तासमं यस्य रसैकसूतिरुदेति चित्राकृतिरर्थसार्थः ।
अदृष्टपूर्वो निपुणैः पुराणैः कविः स चिन्तामणिरद्वितीयः ॥ (का०मी० १२)

१७. शब्दार्थोक्तिषु यः पश्येदिह किञ्चन नूतनम् ।
उल्लिखेत् किञ्चन प्राच्यं मन्यतां स महाकविः ॥ (सैव, ११)

दुग्धाब्धीनां सहस्रं न कुसुमलसितं सद्वसन्तायुतं वा,
कोटिर्वा पार्वणानां, सुषमशशभृतां नेषदोषातनानाम् ।
सम्पूर्णं वा सुधाभिः पुरटघटशतं हन्त धन्वन्तरेर्नो,
पाणिस्थं चारुरत्नाकरसुकविगिरां मेरुरत्नं न मूल्यम् ।।

समालोचक-पुङ्गवेन राजशेखरेण तु स साहित्यिकमूल्याङ्कनस्य परां कोटिमेव प्रापितः :

मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे ।
इतीव रचितो धात्रा कवी रत्नाकरोऽपरः ।।

अस्मादधिकं किं कथनीयं स्यात् ?

# परिशिष्टम् (१)

## रत्नाकरस्य विषये समीक्षकाणामुक्तयः।

(१)

मुक्ताकणः शिवस्वामी कविरानन्दवर्धनः।
प्रथां रत्नाकरश्चागात् साम्राज्येऽवन्तिवर्मणः॥

(कल्हणः)

(२)

मा स्म सन्तु हि चत्वारः प्रायो रत्नाकरा इमे।
इतीव रचितो धात्रा कवी रत्नाकरोऽपरः॥

(राजशेखरः)

(३)

वसन्ततिलकारूढा वाग्वल्ली गाढसङ्गिनी।
रत्नाकरस्योत्कलिका चकास्त्याननकानने॥

(क्षेमेन्द्रः)

(४)

माघः शिशुपालवधं विदधत् कविमदवधं विदधे।
रत्नाकरः स्वविजयं हरविजयं वर्णयन् व्यवृणोत्॥

(अलङ्कारविमर्शे)

(५)

दुग्धाब्धीनां सहस्रं न कुसुमलसितं सद्वसन्तायुतं वा,
कोटिर्वा पार्वणानां सुषमशशभृतां नैषदोषातनानाम्।
सम्पूर्णं वा सुधाभिः पुरटघटशतं हन्त! धन्वन्तरेर्नो,
पाणिस्थं चारुरत्नाकरसुकविगिरां मेरुलक्षं न मूल्यम्॥

(श्रीशङ्करशास्त्रि द्राविडः)

(६)

विचित्रमार्गमूर्धन्यं रत्नाकरमजानता।
वृथैव चेनचित् प्रोक्तं माघे सन्ति त्रयो गुणाः॥

(प्रस्तुतसमीक्षकः)

# परिशिष्टम् (२)

## हरविजयस्य सुभाषितानि

रत्नाकरस्य 'हरविजयम्' सुभाषितानां भाण्डारः। तत्रायातानां विविध-विषय-सम्बद्धानां सूक्तीनां संग्रहोऽत्र सर्गानुसारं समुपस्थाप्यते। विरामात्पूर्वं सर्गसंख्या तदनन्तरं श्लोकसंख्या दीयते :

१. त्यजति कः प्रकृतोपकृतिं जनः सपदि नापदि नाम मलीमसः ? ३।८५
२. भावानुरक्तहृदयः कुरुते न किं वा ? ४।३०
३. शक्नोत्यनुग्रहमभीक्ष्णमपग्रहं च कर्तुं महान्हि महतः समये महस्वी। ८।४०
४. विस्तारिणी फलभरप्रसवैकहेतुर्लक्ष्मीलता सपदि वृद्धिमुपैतु नूनम्। ८।४८
५. तेजस्विनः समुदिताः स्फुटमेकमेव,
धुर्यावलम्बनमिहोज्ज्वलयन्ति कार्यम्।
संहारकालसविशेषरुचोऽतितीव्र-
मुष्णत्विषो दिनमिवोदयदुर्निरीक्ष्याः॥ ८।४९
६. प्रज्ञातिरेकवशतो विशदावभास-
मालोच्यमानमखिलं खलु कार्यतत्त्वम्।
पुष्णाति निष्प्रतिघमर्थविशेषजात-
मुद्घृष्यमाणमिव वर्णकदारुगन्धम्॥ ६।७३
७. मन्त्रेण पञ्चविधतामुपजग्मुषा च,
नीतिप्रपञ्चरचना विजिगीषुपुंसाम्।
आसंसृतिक्रमजुषा भुवनत्रयेऽपि,
निर्वर्त्यते हि मरुतेव शरीरयात्रा॥ ६।७४
८. प्रेक्षावतां जगति तन्न यदस्त्यसाध्यम्॥ ६।७५
९. सर्वोऽनुभावगरिमा स मुखानिलस्य,
शब्दायते श्रुतिसुखं यदतीव वेणुः॥ १०।१२
१०. स्यात्कश्चिदेव स मुनिर्ननु शातकुम्भ-
निष्ठीविता जगति यस्य गता प्रसूतिम्॥ १०।१३

११. येषां निसर्गविमलत्वमुपादधाना,
नार्थान्प्रकाशयति दीपशिखेव बुद्धिः ।
क्रोधान्धकारगहने प्रविजृम्भमाणे,
तेऽन्धीभवन्ति ननु सत्स्वपि लोचनेषु ॥ १०११४

१२. विश्राणया विमलतामधिकं धियैव,
मोहं व्यपोहति विशारदिमानमाप्तः ।
दिक्चक्रवालविनिरोधि विजृम्भमाण-
मन्धं तमस्तिरयति प्रभयैव भानुः ॥ १०११५

१३. चन्द्रोदयेऽपि जलधिः स्तिमितत्वमेति,
विद्युल्लतापि परिमुञ्चति चञ्चलत्वम् ।
तिग्मांशुमण्डलमपि ग्रसते न राहुः,
प्रज्ञावता नय इह प्रवितन्यमाने ॥ १०११६

१४. त्रैविद्यवृद्धरचितं नयवर्त्म शश्व-
दातस्थुषः स्थिरविपक्षजितो विजेतुः ।
लक्ष्मीर्न मुञ्चति कदाचन चञ्चलापि,
दीप्रा रुचिर्दिनपतेरिव मण्डलाग्रम् ॥ १०११७

१५. शङ्के समाप्य महतां हृदयेषु पूर्व-
मीषत्तदंशपरमाणुलवावशेषाम् ।
गम्भीरतां जलधिषु स्थिरतां नगेषु,
विस्तीर्णतां च नभसि व्यधिताथ वेधाः ॥ १०११८

१६. प्रेक्षावतोऽप्यविहितौपयिकप्रयोग-
शून्यानभीक्ष्णमधिकुर्वत एव तीक्ष्णाः ।
चक्षुष्मतोऽपि चरणेष्ववधानवन्ध्या-
न्विध्यन्ति कण्टकशिखा निशिता अवश्यम् ॥ १०११९

१७. कालादिसाधनमवेक्षितमर्थसिद्धि-
मभ्यर्णतां नयति निष्प्रतिघं जिगीषोः ।
तन्निर्व्यपेक्षमनसां नयशासनेषु,
दोर्दण्डदर्परभसो विनिपातहेतुः ॥ १०१२०

१८. न्याय्यं तदेतदिह तावदुपप्लवेऽपि,
कुर्वन्ति यन्न जगति स्थितिभङ्गमार्याः ।
मर्यादया विरहिताः प्रलयागमेऽपि,
किं वाच्यतां जलधयो भुवने न याताः ? ॥ १०१३६

१९. उद्दामदर्पनिकषान्करिणो विहाय,
विष्यन्दिदानजलनिर्झरधौतगण्डान् ।
पृष्ठे कुरङ्गकशिशोः करवालचक्र-
मुत्प्लुत्य पातयितुमिच्छसि नासि सिंहः ॥ १०।३८

२०. कार्यान्तरेष्वनुगमव्यतिरेकदृष्ट-
सारेषु सारगुरवो नहि विप्लवन्ते ॥ १०।३९

२१. अभ्युत्पतञ्जलभृतः स्तनतो निहन्तुं,
किं विक्रमेण विनिपातफलेन कुर्यात् ?
पर्यस्तदानजलकुञ्जरकुम्भपीठ-
कुट्टाककोटिकरजक्रकचोऽपि सिंहः ॥ १०।४३

२२. गम्भीरतां दधति तावक एव धैर्य-
मास्थां बबन्ध हृदयेऽत्र विशालसत्वे ।
पातालरन्ध्रमपहाय कृतप्रतिष्ठ-
मन्यत्र किं जलनिधेरवधार्यतेऽम्भः ॥ १०।४९

२३. उत्पद्यते जगति कोऽपि स एक एव,
यस्योक्तिषु स्फुरति सर्वमनोरमोऽर्थः ।
अन्यः स कल्पविटपी मणिमञ्जरीषु,
चिन्तामणिः स्तबकतामुपयाति यस्य ॥ ११।१०

२४. एकैव सा जलनिधेरुदियाय चन्द्र-
लेखा समस्कुरुत या शितिकण्ठजूटम् ॥ ११।११

२५. पङ्कत्वमेति न मधुस्थितिकारणं या
सान्यैव सम्भृतगुणा कुसुमस्य धूलिः ॥ ११।१२

२६. तेजो विकासि दधतः करचक्रवाल-
लीलागृहीतककुभः शुचिमण्डलस्य ।
भानोर्दिनस्थितिरिवापरिवृत्तिशून्य-
मैकात्म्यमेव भजते क्षितिपस्य लक्ष्मीः ॥ ११।५३

२७. ज्योत्स्नावितानपरिपाण्डुरुचो न जातु
कीर्तेर्जनो भजति भाजनतां द्विजिह्वः ।
दण्डत्वमेति कुटिलो जयवैजयन्त्याः
प्रत्यग्रकण्टकशिखाजटिलो न वंशः ॥ ११।५४

२८. तुच्छोपमानपदवीमुपजग्मुषापि
निःसारतामपि गतेन जडात्मवृत्तेः ।

क्रोडे न्यधायि हरिणेन पदं यदस्य
चन्द्रस्य पश्यत फलं तदनूष्मतायाः ॥ ११।५५
२९. तज्जाड्यसम्भृतिविजृम्भितमेव तस्य
तेजस्विशब्दसदृशं विदधाति नासौ ।
निर्ह्रीक इन्दुरसकृत्तपनावधूत-
च्छायोऽप्युदेति निशि यत्प्रतिकारशून्यः ॥ ११।५६
३०. आजन्मनोऽपि चपला नियमेन तत्र
लक्ष्मीः कथं न निवसेदरविन्दखण्डे ।
तिष्ठन्ति यस्य परिणामशुचावखण्ड-
कोषस्थितेर्गुणगणाः सकृदेव दण्डे ॥ ११।५७
३१. शान्तिं न यात्यपरथा परविप्रकार-
पांसुर्जगत्यतनुसम्भृतिरेष तावत् ।
तिग्माभितापशमनाय कृपाणमेघ-
धाराजलान्यविरलं न पतन्ति यावत् ॥ ११।५८
३२. आधारधाम्नि रचितस्थितिरल्पकेऽपि
तुच्छेऽपि तेजसि परिस्फुरति स्फुटं श्रीः ।
दीपोऽपि मुञ्चति शिखां भवनान्धकार-
निर्वासनाय किमुतावसरे प्रवीरः ॥ ११।५९
३३. अन्येषु सत्स्वपि निसर्गविनिर्मलेषु
मन्ये महाजनधुरां कतिचिद्वहन्ति ।
एकः स कम्बुरुदभूद्विमलोऽम्बुराशे-
र्यः पूर्यते मधुरिपोर्मुखमारुतेन ॥ ११।६०
३४. तिग्मत्विषः परिमिताखिलमानमेव
तेजः प्रकाशितजगत्स्थितमत्र बिम्बे ।
तेजस्विनः पुनरपर्यवसानमेव
मन्ये तदत्र हृदये निवसत्यसह्यम् ॥ ११।६१
३५. भ्रूभङ्गमाशु दिशतोल्बणरोषरूक्ष-
मक्ष्णोश्च रागमुपपादयतासहिष्णोः ।
वामभ्रु वामतनुमानपरिग्रहेण
चेतो दुनोत्यभिमुखं स्फुरितोऽधरोऽपि ॥ ११।६२
३६. विस्तारशालिनि हृदि प्रथिमानमाप्य
लोकास्त्रयः किल वसन्ति रथाङ्गपाणेः ।

सप्तापि धीरहृदये सविकासमेव
तिष्ठन्ति ते स्फुटमिति स्म ममैष तर्कः॥ ११।६३

३७. आजन्मनोऽप्यकृतपूर्वतया परेषां
साधारणत्वरहितां पुरुषप्रकाण्डः।
प्रत्यग्रतारकगुणां निजपौरुषस्य
छायां विमुञ्चति निशामिव शीतरश्मिः॥ ११।६४

३८. कार्यं भवेत्क्वचन किञ्चिदणीयसापि
स्थूलैरलं तनुभृतामुपयोगवन्ध्यैः।
क्ष्माभृत्तटेषु वरमस्तु तृणोलपादि
किं गण्डशैलनिकरैः पृथुगण्डकल्पैः॥ ११।६५

३९. निष्ठ्यूतदीधितिशिखादलितान्धकार-
राशिर्वरं मणिरसौ तनुरप्यनर्घः।
क्षोणीभृतां कटकवर्त्मनि किं नु कृत्य-
मंशुश्रिया विरहितैर्ननु गण्डशैलैः॥ ११।६६

४०. लूताकृतो वरमसौ जगतीह तन्तु-
रारुह्य नाकमधिरोहति कीटकोऽयम्।
अस्ताचलस्य शिरसोन्नतिशालिना कि-
मालम्बनं न तरणेः पततो दिवो यत्॥ ११।६७

४१. तुङ्गात्मतास्तशिखरस्य मुधैव भानो-
र्नालम्बनं भवति यत्समये प्रपित्सोः।
श्लाघ्यः स तामरसनालगुणोऽपि दैत्य-
भीत्या यमेत्य मरुतां पतिराललम्बे॥ ११।६८

४२. आप्लावितक्षितितला वडवाग्निनैव
सा दह्यतां जलनिधेर्वरमम्भसां श्रीः।
शक्ता न योन्नतिकृतो वपुषः प्रमार्ष्टु-
मङ्कोत्थितस्य शशिनोऽपि कलङ्कलेखाम्॥ ११।६९

४३. ऊर्ध्वं गताभिरवटास्पदपादपस्य
शाखाशिखाभिरलमुन्नतिशालिनीभिः।
श्लाघ्यामधोगतिमपि स्खलतां कदाचि-
दालम्बकारणमवैमि जटावलीनाम्॥ ११।७०

४४. न भ्रूविभंगरचना वदने न चांसदेशाहृतिर्न दशनच्छददंशयोगः।
क्रोधानुभावघटनेन विना क्षयेऽग्निर्भस्मीकरोति भुवनानि च दुःसहार्चिः॥ ११।७३

४५. गिरानया प्रस्तुतमेतदीदृशं तवार्यकार्यं बहु मन्यते न कः?
मृणालवल्लीकुसुमं तनोति तत्करोति लक्ष्मीरपि यन्निकेतनम्॥ १२।१९

४६. अयं जडोऽस्मात्कुत एवं नीतिमद्वचोऽभ्युदेतीति न कल्पना क्षमा।
किमश्मनोऽत्यन्तमलीमसात्मनः सुवर्णमक्षुण्णगुणं न जायते॥ १२।२२

४७. न रत्नदीपस्य शिखा सकज्जला॥ १२।२३

४८. अभीक्ष्णमन्तः सरसान्यतन्द्रिताः सुवृत्ततां बिभ्रति नीतिशालिनः।
वितन्वते संसदि कूर्चकेसरद्रुमाः फलानीव वचांसि सूरयः॥ १२।२४

४९. समीक्ष्य सम्यग्भुवि कृत्यवस्तु यः प्रतीक्षते देशबलादिसाधनम्।
भवन्ति तस्यानपचारचारवः क्रियाविशेषा न विपाकनीरसाः॥ १२।२५

५०. अखण्डितात्यूर्जितवीर्यसंपदो निराकरिष्णोस्तरसा युधि द्विषः।
प्रमाददोषानुपघातसुस्थितं न नीतितुल्यं क्षममस्ति साधनम्॥ १२।२६

५१. प्रयुक्तसंस्कारगुरुर्गरीयसां व्रजत्यवस्थैव ननु प्रतीक्ष्यताम्।
भजत्युपावर्जिततैलसेकया नहि प्रदीपो दशया विना स्थितिम्॥ १२।२७

५२. मलीमसाचारनिरर्गलस्थितेरखण्डमन्यन्मलिनं प्रकल्पते।
तमोघने वेश्मनि तिष्ठतोऽनिशं व्रजत्यशेषं जगदन्धकारिताम्॥ १२।२८

५३. यथाभिलाषास्तु परस्य वृत्तयः। १२।२९

५४. सभूमिलाभं शुभवर्तिरेखया मनोरमं मण्डलकार्यमस्खलत्।
अशेषमुन्मीलयति क्षमाभृतां विचित्ररूपा ननु नीतितूलिका॥ १२।३०

५५. यथाखिलद्रव्यगतांश्चिकित्सका विविञ्चते पञ्चरसादिकान् बुधाः।
तथैव मन्त्राश्रयतामुपेयुषः सुनीतिभाजोऽवयवाञ्जिगीषवः॥ १२।३१

५६. अपार्थतादोषपरीतमक्रमं ससंशयं संधिविहीनतां गतम्।
न देशकालादिविरोधिपण्डितैः प्रशस्यते कार्यमसाधुकाव्यवत्॥ १२।३२

५७. बिभर्ति पारिप्लवतामुदन्वतस्तदूर्मिसंसर्गकृतामिवोत्थिता।
अवैमि लक्ष्मीर्नयवर्त्मनागता स्थिरं निबध्नाति नृपे पदं पुनः॥ १२।३३

५८. अमन्दरभ्रान्तिकदर्थितोदधिर्विलुप्तदेवासुरमन्थसंभ्रमः।
सचेतसः कस्य न वल्लभोऽर्जने नयप्रकारोऽपर एव वा श्रियः॥ १२।३४

५९. न नीतिशास्त्रोपनिषत्सु पञ्चधा स्थितिं जहात्येष परः पुमानिव।
प्रदीपितोद्दामविपर्ययग्रहैर्निरूपितो मन्त्र इह प्रणेतृभिः॥ १२।३५

६०. विभज्यमाना बहुधार्थकोविदैः ससंशयग्रन्थिरमन्थरात्मभिः।
मृणालवल्लीव गुणान्विहाय किं व्यनक्ति नीतिर्जडसङ्करोद्धृता॥ १२।३६

६१. उपायशून्यास्तरवः क्षिताविव क्रियाविशेषा व्यभिचारिणः फले ।
त एव नूनं नियमेन भूभृतां फलन्ति कल्पद्रुमवन्नयाश्रयाः ॥ १२।३७

६२. स्थिराभ्युपायप्रकटारसञ्चयं दधद्विरूढक्रमकालनेमिताम् ।
प्रवर्तितं मण्डलनाभिबन्धनं न कार्यचक्रं क्वचनावशीर्यते ॥ १२।३८

६३. व्यपेक्षते बाहुबलं जिगीषतः सुनीतिमाक्रान्तजगत्रयं भुवम् ।
रथास्पदं चक्रमिवाश्वमण्डलीं विवस्वतो मेरुतटीविवर्तिनः ॥ १२।३९

६४. उपायसोपानपरम्परामिमां यथाक्रमं योऽधिरुरुक्षुराश्रितः ।
स नूनमुच्चैः पद एव नीतिमान्कृतप्रतिष्ठो न चिराद्विभाव्यते ॥ १२।४०

६५. प्रकाश एव प्रविलुप्तदर्शनो गतः क्षणाद्घूकं इवान्ध्यविप्लवम् ।
न जातु कालं मतिदुर्विधो जनो बिभर्ति सामर्थ्यमुदर्कमीक्षितुम् ॥ १२।४२

६६. क्रियापचारा न भवन्ति धीमतामगुक्रमापक्रमयोगचिन्तया ॥ १२।४३

६७. विरूढमूलस्य नयानुसारिणः सकोषदण्डोपचयस्य भूपतेः ।
कुशेशयस्योपचितेव कर्णिका बिभर्ति लक्ष्मीः परिणामपीनताम् ॥ १२।४४

६८. विचिन्वतोऽर्थं निजमण्डलाश्रयं गुणानुपायांश्च नृपस्य शक्तयः ।
न देशकालानवधारणक्रमात्समुत्पतिष्णोरुपयान्ति बृंहणम् ॥ १२।४५

६९. मदच्छटार्द्रीकृतगण्डमण्डलीनिलीनभृङ्गादवियूथदारिणः ।
निमज्जतो वारिणि तीव्रतेजसः सटा विलुम्पन्ति हरेर्झषा अपि ॥ १२।४६

७०. अतीतकालस्य तदत्र जृम्भितं तपस्यमासे करिणोऽपि दुर्जयः ।
निदाघकाले मुखलाङ्गलः शुनामपि व्रजत्येव निकार्यतां यतः ॥ १२।४७

७१. समुद्वहन्नक्षतपक्षभूमिभृद्विभेददक्षामिह शक्तिमायताम् ।
मयूरकेतुर्वदनैरिवाधिकं विभाति षड्भिर्नयविस्तरो गुणैः ॥ १२।४८

७२. विभाव्यमानासनसंधिसंश्रया गुणाः परिष्कारमणिस्फुटत्विषः ।
तदद्भुतं यद्विजयैषिणां श्रियं प्रसादयन्त्यप्रविमृष्टविग्रहाः ॥ १२।४९

७३. कृतास्पदा सारगुरुः स्थिरात्मसु क्षमेव दिक्कुञ्जरविग्रहेष्वसौ ।
जहात्युपायेषु चतुर्षु न स्थितिं दृढीकृता नीतिरिह क्षमाधरैः ॥ १२।५०

७४. अतोऽत्र युक्तो नय एव संकटे जलप्लवे सेतुरिवोत्तितीर्षताम् । १२।५४

७५. उपाय एवेति च दण्ड एष नो न नीतिवृद्धै रवलम्बनीकृतः ।
तथापि कार्येऽत्र गुरुण्युपेक्षितुं न युक्तरूपो भवतामनुक्रमः ॥ १२।५६

७६. निरुद्धरन्ध्रप्रसरश्लथीभवज्जडप्रवेशस्थिरसंधिसुस्थिताः ।
न कार्यसिन्धोरिह तारयन्ति कं प्लवा इवोच्चैः कृतिनः सकर्णकाः ॥ १२।५७

७७. दहन्ति कल्पप्रलयेषु भानवो जगन्ति वेलां श्लथयन्ति सागराः ।
न तादृशोऽस्मी ममयोऽस्ति यत्र वा स्थितिं विभिन्दन्ति रुषा भवादृशाः ॥ १२।५८

७८. जगत्परिप्लावयितुं न वीचयः
क्षमास्तटस्थस्य कदाचिदम्बुधेः। १२।५६
७९. यदानुगुण्यं भजते जगत्यसौ
तदा तदात्वायतिषु स्फुटं नृणाम्।
क्रियाविशेषाः सकलाः प्रवर्तिता
विपर्ययेणापि हि सिद्धिहेतवः॥ १२।६३
८०. इहैव निःश्वासगमागमक्रिया-
प्रवन्धभेदेन चराचरात्मनि।
व्रजत्यभीक्ष्णं प्रतिबद्धवृत्तता-
मशेषविश्वोदयसंहृतिक्रमः॥ १२।६५
८१. लोकः प्रमादपरमः क्वचिदर्थसिद्धि-
माप्नोति नूनमिह सत्यपि नाभ्युपाये।
आलोकयत्यभिनिमीलितलोचनः कि-
मादर्शमण्डलतले विमलेऽपि वक्त्रम्? १२।७२
८२. प्रस्तूयते यदभिधेयवचोभिरस्त–
मोहान्धकारनिकरैरिह कार्यतत्त्वम्।
भङ्गं तदाशु मतिदुर्विधदुरूट-
कूटाभिरूपकुटिलाङ्गुलिभिः सहैति॥ १२।७३
८३. प्राप्ता विशुद्धिमधिकां परिणामरूप-
वन्ध्याश्रिता प्रकृतिभोगनिरर्गलत्वम्।
उर्वीधरस्य चितिशक्तिरिवापचार-
शून्या भवत्यनिशमप्रतिसंक्रमा श्रीः॥ १२।७५
८४. तस्मान्निरूपितपरात्मबलाबलैक–
कार्यक्रमौपयिकशक्तिगुणोदयानाम्।
कर्तुं तदत्रभवतां क्षममाहवेषु
येनानुतापशिखिना न परिप्लवध्वे॥ १२।७६
८५. तीक्ष्णेन तीक्ष्णमनिशं मृदुना मृदुं च
संसाधयन्ति परमौपयिकेन तज्ज्ञाः!
सूर्योपलं दिनपतिर्ज्वलयत्यभीक्ष्ण-
मिन्दुश्च चन्द्रमणिमार्द्रयति स्वधाम्ना॥ १२।७८
८६. प्रज्ञां नमामि भुवनेषु विचित्ररूपा-
माद्यां गिरं च सकलव्यवहारहेतुम्।

वक्तुं यदाश्रयवशेन ममापि धैर्य-
मुक्तं त्वयापि गणनायक ! नीतिगर्भम् ।। १३।६

८७. मार्गत्रयेऽप्यविहतप्रसरामनोज्ञ-
शब्दश्रुतिः शुचितयानुगताञ्चितश्रीः ।
जह्नोरिवाशु तनया घटमानकर्ण-
धारा मनोहरति कस्य सतां न वाणी ?।। १३।१०

८८. सुप्तप्रबुद्धवदनर्गलमुन्मिषन्ति
यासु श्रुतासु सुधियामपि धीविकल्पाः ।
श्च्योतन्ति ताः किमपि तन्मधु हृद्यमर्घ्यं
चित्रागिरः श्रवणहारिगभीरबन्धाः ।। १३।११

८९. कार्यं सुनिश्चितमुपक्षिपतीह मन्त्र-
चर्चासु नीतिनिपुणः परिणामरम्यम् ।
बीजं प्रजापतिरुवाप तदर्घ्यमप्सु
यस्माददः समुदभूत्कमलासनाण्डम् ।। १३।१२

९०. आह्लादहेतुमनिशं न जगत्त्रयस्य
स्यन्दिष्यते कथमिवामृतमिन्दुबिम्बात् ? १३।१४

९१. नैवास्ति किञ्चिदनपाश्रितता रतम्यम् । १३।१६

९२. दोर्दण्डदर्परभसप्रतिबद्धवृत्ति-
मुत्साहमुत्ससृजुषां भजतां च नीतिम् ।
न्यक्षेण कार्यगहनं विषमीकरोति
पुंसामुपायकलनाघनमारुतौघः ।। १३।१७

९३. ते मन्दवीर्यगतयः स्फुटमन्य एव
सामादिमन्थरपराक्रममासते ये ।
ये तु प्रसह्य दलयन्ति विपक्षचक्र-
माक्रम्य ते जगति खड्गविषाणकल्पाः ।। १३।१९

९४. संग्रामवासभवने नियतं निषण्णा
निःसंशयं विदधति प्रतिपक्षलक्ष्मीम् ।
संवाहिकां चरणयोः करिकुम्भपीठ-
पीनोन्नतस्तनकृतास्पदयोः समर्थाः ।। १३।२३

९५. आरोप्यते भटजनेन शरासनाग्र-
कोटिं समीकभुवि यो गुणबन्धपाशः ।

आकृष्य तेन तरसा तरलत्वमाप्ता
संयम्यते दृढतरं प्रतिपक्षलक्ष्मीः ॥ १३।२४

९६. तेजस्विनो नन विधेयमियत्पिनष्टि
दुष्टात्मनां यदनपेक्षितदेशकालः ।
दैवानुभाववशतो वनगोचरोऽपि
किं श्रीफलं कथयतापरथा न भुङ्क्ते ॥ १३।२५

९७. देशो न सोऽस्ति न कृतस्थितिरेष यत्र
कालं विभोः प्रणुदतस्तदपेक्षया किम् ।
मिथ्याविकल्पजनितारिविनाशविघ्न-
निघ्नाः किमेवमधुनाश्रितशङ्कमाध्वे ॥ १३।२६

९८. क्षीणोऽपि दूरमवलम्बत एव नून-
मव्याहतां जगति कार्यधुरां महस्वी ।
किं लोचनोत्सवविधायिकलावशेष-
रूपोऽपि शीतकिरणः कुरुते न रात्रिम् ॥ १३।२७

९९. अम्भोनिधिं प्रलयकालविलङ्घितात्म-
मर्यादमस्तमयनिष्प्रभमुष्णरश्मिम् ।
आलोक्य धीरमनसो हृदयेन नून-
मुच्चैर्हसन्ति विपदि स्थिरधैर्यरूपाः ॥ १३।२८

१००. उत्प्रेक्ष्य नूनमभयेऽपि भयं निसर्ग-
भीरुर्नितान्तमुपगच्छति विह्वलत्वम् ।
पञ्चत्वमेति नितरां सुचिकित्सितोऽपि
शङ्काविषव्यतिकरेण विमूर्छितः सन् ॥ १३।२९

१०१. विस्तीर्णतादिगगनोदधिभूभृतां य-
श्चक्रे स सङ्कटमनाः स्फुटमन्य एव ।
येन व्यधायि महतां हृदयेष्वनाप्त-
पर्यन्तवृत्ति तदसावपरोऽस्ति वेधाः ॥ १३।३०

१०२. जृम्भापरीतवदनाः श्वसितानुबन्ध-
मोजःप्रकम्पिवपुष्पोऽरुणरूक्षनेत्राः ।
रोषज्वराकुलधियः सुभटाः कृपाण-
धाराजलं समभिलष्यथ हे न कस्मात् ॥ १३।३१

१०३. अभ्युद्धृतक्षितिभृतां प्रलयागमेषु
निष्कम्पमेव गगनं हि समीरणानाम् । १३।४१

१०४. मन्दाकिनीं प्रथितपुण्यगुणां विहाय
रत्नाकरं क इव पूरयितुं क्षमोऽन्यः। १३।४६

१०५. संपश्यतोऽन्तरमिहासुमतां विसारि-
सत्त्वं बलादधिकमित्यपि मे वितर्कः।
सिंहो निपातयति चण्डचपेटयैव
पृष्ठेन तूद्वहति कुञ्जरमष्टपादः॥ १३।४७

१०६. गम्भीरगर्जितरवश्रवणोत्थभीति-
नश्यत्कुरङ्गककुलस्य करालमूर्तेः।
लाभोऽस्ति कः कठिनकुञ्जरचक्रवाल-
कुम्भस्थलीविदलनादपरो मृगारेः॥ १३।४८

१०७. शब्दान्तराणि खलु सन्ति पृथग्विधानि
यैर्व्याप्तमेव जगदव्यतिकीर्णरूपैः।
दानाम्बु शोषयति यः करिणां श्रुतोऽपि
कोऽप्यन्य एव हरिणाधिपतेः स नादः॥ १३।४९

१०८. हेलाविनिर्जितरिपुस्फुटशौर्यलक्ष्मी-
लीलानिकेतविकटोन्नतचन्द्रशालाम्।
विस्तारिणीं सुभटवंशहिमाद्रिगङ्गा-
कीर्तिं न यान्ति रणवर्त्मनि तीर्थकाकाः॥ १३।५०

१०९. अप्राप्तहारिपरिणामगुणा कदाचि-
दाजन्मनोऽपि विरसा मम सा दशाभूत्।
किं नीरसा जलपृषज्जलधेरुपैति
मुक्ताफलत्वमिह शुक्तिपुटान्तरेषु॥ १३।५१

११०. संग्रामलाभरभसेन भटैः सलील-
मास्फालिताश्च जयकुञ्जरकुम्भभागाः।
नाकौकसां विगलिताश्च विपक्षचक्र-
सीमन्तिनीस्तनतटास्पदतारहाराः॥ १३।५२

१११. निस्त्रिंशघातदलितद्विपकुम्भपीठ-
निर्मुक्तमौक्तिककणप्रकरावकीर्णे।
संग्रामवासभवनेऽभिमता जिगीषो-
स्तीक्ष्णैः शिलीमुखमुखैर्वशमेति लक्ष्मीः॥ १३।५३

११२. प्रत्यग्ररत्नकिरणच्छुरणाभिराम-
मम्भोदनीलमभितोऽधिवसत्यभीक्ष्णम्।

वक्षःस्थलं मधुरिपोरिव तीक्ष्णवर्त्म-
पट्टं परिप्लवतया रहितादृता श्रीः ।। १३।५४

११३. संवादिनी नियतमस्य मुरारिदेह-
च्छायेति चञ्चलतया रहितात्र लक्ष्मीः ।
शङ्के शरद्गगननीलरुचौ कृपाण-
पट्टेऽनुरक्तहृदयारचयत्प्रतिष्ठाम् ।। १३।५५

११४. उत्सृज्य षट्चरणचारणचक्रवाल-
गीतस्तुतां नवकुशेशयकोशशय्याम् ।
वीरानुरागरभसेन वसत्यभीक्ष्णं
शङ्के सलीलमसिपत्रवनेऽपि लक्ष्मीः ।। १३।५६

११५. दोर्दण्डनिर्जितरिपोर्जगति प्रसङ्ग-
लभ्येषु नास्ति विभवेषु कदाचिदास्था ।
तेजस्विनः करजजर्जरितेभकुम्भ-
कूटस्य मौक्तिकगणेषु हरेरिवार्याः ।। १३।५७

११६. श्लाघ्यः स एव कलशो भुवनेषु यस्मा-
दुत्थाय वन्द्यमहिमा सुरकार्यहेतोः ।
अम्भोधिमेकचुलकेन विवर्तमान-
वैकुण्ठकूर्मशफरेण पपावगस्त्यः ।। १३।६१

११७. हेतोः कुतोऽप्यसदृशादुदिता गरीयः
कार्यं निसर्गगुरवः स्फुटमारभन्ते ।
उत्थाय किं न कलशादपि सिन्धुनाथ-
मुद्वीचिमालमपिबद्भगवानगस्त्यः ।। १३।६१

११८. क्ष्मामण्डलं सकलमेव सरत्नराशि
विस्तारिनेमिवलयं रणबद्धकक्ष्यः ।
चक्रीकरोति सुभटः श्रवणान्तकृष्ट-
मौर्वीलतेन धनुषा सममेव नूनम् ।। १३।६३

११९. उद्दामदर्पनिकषप्रतिपक्षसम्प-
दुत्सादनेन कृतविग्रहवल्गुशोभाः ।
स्नाताश्च कीर्तिसलिलैः सुरभीभवन्ति
नूनं यशःपरिमलेन पराक्रमाढ्याः ।। १३।७१

१२०. चेतोहरेण हरकण्ठरुचा प्रकाम-
पुण्यात्मकत्वमनिशं दधता गरीयः ।

आत्मानमाशु सुभटः समरे पुनाति
निस्त्रिंशपुष्करजलेन कृताभिषेकः ।। १३।७२

१२१. श्रोत्ररन्ध्रगतकेकिकूजितः किं विरौति परुषं न मौकुलिः ? १४।१४

१२२. तीक्ष्णतामविहतां दधानया भेदपाटवजुषा युधि द्विषाम् ।
साधयन्त्यमलया धियोन्नताः कृत्यपक्षमथवासिधारया ।। १४।१७

१२३. साध्यवस्तुषु न सामपूर्वकं साधनं न खलु शस्यते बुधैः ।
बिभ्रतो भवति धीरकोपतामाननं प्रथममुन्मिषत्स्मितम् ।। १४।२३

१२४. कृत्यवस्तु निपुणं प्रसाधयद्विप्लवोदयदशाविनाकृतम् ।
विद्धि भेदगहनैरवस्थितं तच्च सङ्कुलितपञ्चभक्तिकम् ।। १४।२४

१२५. कृत्यपक्षमखिलं विचिन्वतां साधनाङ्गवचनानुदाहृतेः ।
दृश्यते पुरत एव मन्त्रिणां वादिनामिव विपर्यये जयः ।। १४।२५

१२६. दर्शितावयवपञ्चकं क्रमात्तत्कणव्रतविनेयविभ्रमाः ।
दुर्जयोर्जितविपक्षनिर्जये वाक्यमन्त्रिधियः प्रयुञ्जते ।। १४।२७

१२७. सङ्कटेष्वधिकमेव धीमतां विस्फुरन्ति ननु मन्त्रशक्तयः ।
व्याप्तवस्तु तिमिरेषु दिक्तटानुन्मिषन्त्यहिमदीधितित्विषः ।।

१२८. अव्यपायफलसाधनास्पदं क्ष्माभृतां चिरमनुज्झितक्रमैः ।
मण्डलं जगदिवर्तुभिः स्फुटं षड्भिरेव परिवर्त्यते गुणैः ।। १४।३५

१२९. चंचलत्वविरसाविसंवदत्स्वाशयानुगुणवृत्तितां गताः ।
मूढमार्गरभसाहृताः स्फुटं न श्रियोऽपि बहु मन्वते पतीन् ।। १४।३६

१३०. यद्यपीन्दुकरकोमलच्छविः कीर्तिरप्रतिमरूपतां गता ।
कातरस्य गणनाथ ! हारिणी नाकलोकललनेव दुर्लभा ।। १४।३९

१३१. कार्यमोहतिमिरावबोधिनी दुर्लभा तु मतिदीपिका नृणाम् ।। १४।५१

१३२. दाढ्यर्शालिगुणनीतिशृङ्खलाबन्धसंयतपदामनर्गलम् ।
स्थेयसीं विदधतीह पण्डिताः स्त्रीनिसर्गतरलां नृपश्रियम् ।। १४।५२

१३३. सांख्ययोगपरिनिष्ठितात्मतां ज्ञातसत्त्वपुरुषान्तरो दधत् ।
नूनमेति न विकारविप्लवक्लेशलेशघटनां विवेकभाक् ।। १४।५३

१३४. मुह्यते य इह कृत्यवस्तुनि ज्योतिरक्षततनयात्मकं दधत् ।
अन्धकूपकुहरे परिस्फुटं दीप्रदीपककरः पतत्यसौ ।। १४।५४

१३५. विद्विपत्यतुलितोरुविक्रमे विक्रमेत सहसा न नीतिमान् ।
को नु संशयितपन्नगे करं वामलूरविवरे विनिक्षिपेत् ? ।। १४।५५

१३६. मन्त्रयुक्तिगहनं प्रमाणतां सामभेदकृतसौष्ठवं दधत् ।
श्रौतमागममिवातिवर्तितुं कः क्षमेत नयशास्त्रसंग्रहम् ।। १४।५६

१३७. प्रतिपादयितुं यदन्यथार्थान् कुशलत्वेन जनो व्यवस्यतीमान् ।
सकलः स गुणोऽस्य वाग्मितायाःसततं ते पुनरात्मरूपनिष्ठाः ।। १५।१६

१३८. ननु ताम्यति मानसं भटानां किमुपायान्तरचिन्तनान्तरायैः ? १५।३०

१३९. अनपेक्षितकालयापनानां भुजदण्डेऽद्रिशिलाविशङ्कटांसे ।
युगपन्निवसन्ति सत्त्वभाजामसिसंग्रामजयश्रियो भटानाम् ।। १५।३१

१४०. लोकान्दिधक्षुरखिलानयुगार्चिरर्चि-
रुग्रं यदीरयति तत्र किमद्भुतं स्यात् ।। १६।४

१४१. अम्भोजपक्ष्मरजसो मकरन्दविन्दु-
माधूसरादपि किमाददते न भृङ्गाः ? १६।५

१४२. गर्भीकृतत्रिभुवनोदरवर्तिविश्व-
निःसंख्यवाङ्मयकृतास्पदवर्णदेहा ।
काप्यद्भुतेयमनघा परमेश्वरस्य
शक्तिः स्थिता प्रतिमुखं भुवि मानवानाम् ।। १६।६

१४३. व्यापारिता नयपथेन जगत्यभीक्ष्णं
भावा व्रजन्तु मृदवोऽपि पटुक्रियत्वम् ।
प्रस्तौति मन्त्रकृतसंस्कृतिरूपवेणु-
वीणारवोऽपि विषमस्य विषस्य नाशम् ।। १६।९

१४४. सान्द्रो रसः कथमित्राम्रशलाटुनि स्यात् ? १६।१०

१४५. येनेतरः शममुपैत्यनलो जलेन
भस्मीकरोत्यनिशमेव तदौर्ववह्निः । १६।१६

१४६. नैकत्र शक्तिविरतिः क्वचिदस्ति सर्वे
भावाः क्रियास्वपरिनिष्ठिततारतम्याः ।
आकल्पमौर्वदहनेन निपीयमान-
मम्भोधिमेकचुलकेन पपावगस्त्यः ।। १६।१७

१४७. शंसन्ति नीतिहृदयं सुधियस्तदेत-
दालोच्यते स्वपरपक्षबलाबलं यत् । १६।७७

१४८. वक्त्रामृतांशुकिरणाहतमप्यभीक्ष्ण-
मुन्निद्रमेव दधती करपुण्डरीकम् ।
लक्ष्मीर्नृणां मतिमतामिह चित्तवृत्ति-
माह्लादयत्यधिकमेव नयादवाप्ता ।। १६।७८

१४९. भिन्नेतरप्रकृतिमण्डलकार्यतत्त्व-
बोधे यतः प्रणिधिरेव रिपोस्तमाहुः । १६।७९

१५०. प्रेमाहो क्वचिदपि नेक्षते व्यपायम् । १७।१२
१५१. प्रेमाहो विविधविधिप्रपञ्चदक्षम् । १७।१४
१५२. भावेषु स्थितिरुचिता जनस्य शस्या । १७।२६
१५३. को नाद्यं त्यजति पदं विशेषलाभात् ? १७।३४
१५४. विस्रम्भः सुहृदि फलं ननु प्रधानम् । १७।३६
१५५. कः श्रेयानधिकगुणत्वमाप्य न स्यात् ? १७।४५
१५६. एकोऽपि प्रसवशरः स केन सह्यो
नानात्मा किमु गणनातिगोचरो यः ?
तद्भिन्ने हृदि चरितार्थ एव कामो
मानिन्यां न पुनरभूदधिज्यचापः ।। १७।४६
१५७. नैवार्ता लघुनि पदे भवन्ति धीराः । १७।५०
१५८. भग्नानामपि पुनरुक्त एवं भङ्गः । १७।५२
१५९. युक्तानां तरलतया मलीमसानां
न स्वार्थात्क्वचिदतिरिच्यतेऽनुरोधः । १७।५७
१६०. नो कार्ये क्वचन भवन्ति दीर्घसूत्राः । १७।५९
१६१. पर्याप्तं न खलु मलीमसस्य धाष्ट्र्यम् । १७।६०
१६२. न श्रेयान् सममधिकश्रिया विरोधः । १७।६४
१६३. प्रेमाहो रचयितुमीहतेऽनुकूलम् । १७।६७
१६४. अध्यास्ते हृदयमकृत्रिमप्रियाणां
कान्तानामतिबहुमत्सरो ह्यनङ्गः । १७।७२
१६५. नोद्वृत्तैः सह गुणिनां चिराय योगः । १७।७८
१६६. अश्रेयो जगति भवेज्जडान्न केषाम् ? १७।८२
१६७. नौत्सुक्यं व्रजति हि रम्यदर्शनात्कः ? १७।८५
१६८. आरूढो विनिपततीति नात्र चित्रम् । १७।८६
१६९. सद्वृत्तैरपि खलु खेदमेति कश्चित् । १७।८८
१७०. प्रेमाहो युवतिषु मौग्ध्यदुर्विदग्धम् । १७।९१
१७१. आकारादपि गुण एति वल्लभत्वम् । १७।९२
१७२ वञ्च्यन्ते न खलु परैर्विशेषनिष्ठाः । १७।९४
१७३ साधीयो हरति गुणान्तरेण गुण्यः । १७।९५
१७४. गच्छन्ति प्रकृतिमनोरमाः कदाचित्
कालेन स्फुटमसता गुणेन योगम् । १७।९७

१७५. प्रायेण ह्यननुगुणे विधावुपैति
ध्यातोऽर्थः परिणतिमन्यथैव पुंसाम्। १७।९९
१७६. भावानां भवति कुतः प्रकर्षनिष्ठा। १७।१०४
१७७. भव्यानां भवति यतस्ततोऽर्थसिद्धिः। १७।१०५
१७८. रम्याः स्युः क इव हि सुत्यजाः पदार्थाः। १७।१०८
१७९. योग्यः पातः सर्वथा निर्गुणानाम्। १८।१२
१८०. किं तत्प्रेम्णा कार्यतै यन्न लोकः? १८।२६
१८१. किं विधत्तामुद्वृत्तैर्वा संगतोऽन्यज्जलौघः। १८।३२
१८२. स्यात्साध्यः को बद्धमूलो जलानाम्? १८।३७
१८३. प्रायेणेत्थं श्रेयसे विक्रियापि
प्रादुर्भूता कल्पते कोमलानाम्। १८।४१
१८४. कस्य स्याद्वा मौग्ध्यभाजो विवेकः? १८।४६
१८५. निःसामर्थ्ये शक्तताहो जडानाम्। १८।४९
१८६. येनारब्धं यन्न तत्र व्यपेते
तस्याभावाज्जायतेऽतिप्रसंगः। १८।५३
१८७. स्वच्छैर्योगः संपदे कस्य न स्यात्? १८।६४
१८८. स्वल्पः प्रीत्यै विप्रकारोऽप्यरातौ १८।६७
१८९. कः स्यान्नोच्चैः स्थानलाभो गुणाय? १८।७४
१९०. भूतार्थैव श्रेयसी नन्वभिख्या: १८।७५
१९१. पात्यन्ते नो के जलौघैः सुवृत्ताः? १८।७९
१९२. प्रत्यापत्तिर्भ्रंशभाजां दुरापा। १८।८१
१९३. दुर्लंघ्याहो रूढरुपा प्रतीतिः। १८।८५
१९४. एकात्मतां विदधतामिदमेव युक्तम्। १९।२३
१९५. किं वा शुभं प्रभवतो मलिनात्मनः स्यात्? १९।४०
१९६. दुःखे सुखं भवति साधु सुखे न दुःखम्। १९।५२
१९७. साधारणत्वरहिता महतां हि शक्तिः २०।३८
१९८. सन्तः परार्थघटने नहि विघ्ननिघ्नाः २०।४२
१९९. अक्षुण्णवामचरिता बत पद्मनेत्राः। २०।७०
२००. कार्ये क्वचिद्भवति कस्यचिदेव शक्तिः। २०।८०
२०१. स्फुटं परासेकपराङ्मुखात्मनः
स्थिरा विभूतिर्विमलस्य जायते। २१।४

२०२. सदानुकूले हि जनोऽनुरज्यते । २१।१७
२०३. प्रकर्षतः प्रेमगुणस्य नास्ति तनू-
न वल्लभस्य क्रियते यदीप्सितम् । २१।३५
२०४. न गण्यते प्रेमणि दोषदूषणम् । २१।३७
२०५. निलीनभागान्तरमिश्रमूर्ध्वगं
विभाति चक्षुर्दधदर्धतारकम् । २१।३९
२०६. शक्तो न रक्षितुमिहापदि कोऽपि केचित् । २२।३१
२०७. स्निग्धेऽपि जातु न जडस्य भवत्यपेक्षा । २२।५४
२०८. के वा न प्राप्नुवन्ति व्यसनमुपगता विक्रियां जाड्यहेतोः ? २२।६१
२०९. संतोषवान्भवति को गुणवान्गुणेषु ? २३।२५
२१०. क इवैति विपद्वतीह नो प्रतिकूलत्वमदोषवानपि ।
सुदृशो विरहे मृत (स्रवाः शशिमासो)ऽप यदूहुरग्निताम् ।। २४।५
२११. व्यपोहितुं व्यसनं धीरतया हि शक्यते । २४।१०
२१२. सुखमेवाधिकदुः स्वसाधनम् । २४।१७
२१३. अहो ! कार्यगतेर्विचित्रता । २४।२५
२१४. अन्यादृगप्यपरथैव जनस्य नूनं
भावस्थितिर्भवति विप्लुतचित्तवृत्तेः ।
नक्तंकरस्य किरणाः सुधया यदार्द्राः
प्रेयोवियोगविधुरास्तरुणीरधाक्षुः ।। २४।४४
२१५. कार्यं हि कारणसदृग्भवतीति सत्यम् । २६।४१
२१६. सिद्धिं ध्रुवां तरलता शिथिलां विधत्ते । २७।१६
२१७. यस्योचितं भवति यत्तदवाच्यमेव
तस्यानतिक्रम इह क्रियते विदग्धैः । २७।२२
२१८. सीत्कारकान्तमलमर्थवचो विदग्ध-
हावानुबन्धि मणितं ललिता विलासाः ।
इत्यङ्गसंग्रहमनोहरतापि येन
पुष्पायुधः कथमहो स भवेदनङ्गः ? २७।२५
२१९. व्यक्तं न कायिकतया चिरकालगुप्तिः
संवर्धितेऽपि भवति क्वचन व्यपेक्षा । २७।२६
२२०. प्रभवति वस्तुषु वाम एव कामः । २७।३५
२२१. चित्रप्रपञ्चचतुरत्वमहो स्मरस्य । २७।७७

२२२. दधत्कान्ति नासावनुभवति किं खण्डनदशां
निपीतः सन् रागं प्रकटयति नो वा किमधिकम् ?
किमानन्दस्यैको न भवतितरां हेतुरतनोः
सुधासूतिश्चन्द्रः किमधरदलं नोत्पलदृशाम् ? ॥ २७।१०७

२२३. श्लघयति कातरतेप्सितार्थसिद्धिम् ॥ २८।३७

२२४. असाधुव्यतिकरतो नहि किञ्चिदस्ति सेव्यम् । २८।३९

२२५. ननु विपदि विवाददुर्गतानां
किमिव हि दुस्तरमस्ति सहतानाम् । २८।४४

२२६. बत मलिनस्य हि भूयसी विभूतिः । २८।६२

२२७. क्षणमपि सहते नहि प्रगल्भां
क्वचिदहितस्य पुरः स्थितिं महस्वी । २८।९६

२२८. ननु मलिनस्य कुतश्चिरं व्यवस्था ? २८।१०४

२२९. च्युतः पदान्न भवति गौरवास्पदम् । २९।६

२३०. करोत्यहो अपि निजसंपदः स्फुटं
दिवषद्गता विपदधिकं सुखोदयम् । २९।११

२३१. सुखं चिरादुपनतमप्यसंशयं व्रजा-
त्यहो विधिहतकस्य दूरताम् । २९।१७

२३२. कुतोऽथवा सुखमनुदर्कदर्शिनाम् । २९।१९

२३३. विरोधिता विपदि परस्परं कुतः । २९।३५

२३४. अत्यन्तवक्रहृदयाद्वत कस्य शान्तिः ? २९।५७

२३५. कल्याणीं गिरमुत्प्रष्टुं विरला एव जानते ।
सत्यां रेखां विलिखितुं चित्रकर्मविदो यथा ॥ ३२।७८

२३६. निर्दग्धाशेषभुवनाः कियन्तो वह्नयः क्षये ? ३२।८४

२३७. गुणांस्तव गिरां नाथो वक्ति तेनाथवाप्यलम् ।
सिन्धोस्तटेषु सिकताकणान्गणयितास्ति कः ? ॥ ३२।८७

२३८. क्व वा काव्यविकल्पानां गुणानां च तवावधिः । ३२।८८

२३९. ज्योत्स्ना चन्द्रक्रमेणैव क्षीयते वृद्धिमेति च ।
शूराणां च रणे कीर्तिर्गता न विनिवर्तते ॥ ३२।१०२

२४०. अतिसंघर्षतः सिन्धुमन्दराचलयोः पुरा ।
प्राक्कालकूटसंभारः पश्चादमृतमुत्थितम् ॥ ३२।१०८

२४१. कामं भवन्ति शतशो जगतीह कुल्या-
स्तुल्यानुभावबलता कुत एव तेषाम् ?

आलिङ्ग्यते तदतिरिक्तगुणोदयश्री-
र्यत्संपदा तदपि वाच्यपदं जडानाम् ॥ ३३।२०

२४२. कालक्रमादधिगतोदयमेकतोऽपि
बीजाङ्कुरात्सपदि यातमधोमुखत्वम् ।
वल्लीकुलाय किमसूयति मूलजाल-
मूर्ध्वावकाशरचितस्थितये तरूणाम् ॥ ३३।२१

२४३. पातालमन्दिरतले किमियात्र कृत्य-
मन्येर्व्यतीतगणनैः फणिनां शिरोभिः ?
श्लाघ्यं तदेकमपि शेषफणासहस्र-
मुर्वी बिभर्ति यदशेषगिरीन्द्रगुर्वीम् ॥ ३३।२२

२४४. विष्पन्दशीतरुचिनिर्झरवारिधौत-
दिक्काः सहस्रगणना ननु सन्ति शैलाः ।
क्ष्मापीठधारणसहाः कतिचित्तु नून-
मव्याहतस्थितिकुलव्यपदेशयोग्याः ॥ ३३।२३

२४५. सर्वत्र वस्तु वितथप्रतिभासमेव
निःसंशयं भवति विप्लवमन्ददृष्टेः ।
मन्दाकिनीसलिलमिन्दुमरीचिगौर-
मुत्प्रेक्ष्यते क्षतजभित्यनिशं पिशाचैः ॥ ३३।२८

२४६. निन्द्यानपि स्तुवत एव गुणानुभाव-
बन्ध्यानधिक्षिपत एव विमूढवृत्तेः ।
दुःस्वामिनस्तनुभृतामतिदैन्यभाजं
भावानुबृत्तिरसिकामनुजीवितां धिक् ॥ ३३।३०

२४७. अन्तर्दधत्कलुषतामपि जिह्मवृत्ति-
राविष्करोति गुणमेव बहिः प्रकामम् ।
कुक्षिप्रविष्टविषसंहृतिरुत्तमाङ्ग
रत्नप्रकाशमिव गूढपदो विमूढः ॥ ३३।३२

२४८. श्वासानिलः सरलतामुपयाति वेणौ
शङ्खोदरे कुटिलता पुनरस्य सिद्धा । ३३।३३

२४९. संभाव्यते शिखरिणां नहि मुग्धपत्रि-
शब्दुश्रुतिक्षुमितकेसरिकंदरत्वम् । ३५।११

२५०. वक्तुं क्षमं पितृगृहे तदशेषमेव
श्रोतास्ति यत्र रभसेन स भ्रातृवर्गः । ३५।१३

२५१. मन्ये निसर्गमहतां हृदयेषु पूर्व-
मिच्छैव निष्प्रतिघतामनघां वहन्ती।
पश्चादुपायघटना सकलेषु कृत्य-
वस्तुष्वनन्यसदृशीमुपयाति सिद्धिम्॥ ३५।५५

२५२. विस्पष्टमुष्टिघटनागुणयोगभाज-
स्तीक्ष्णीकृता भटजनेन कृपाणपट्टाः।
कार्यप्रबन्धघटनावहितैः सुनीति-
मार्गाश्च धीरहृदयैर्ननु सप्रपञ्चाः॥ ३५।५६

२५३. यस्मिन्निसर्गमहतां चरमः प्रकृष्ट-
मारम्भमाद्यमतिशेत इह प्रयत्नः।
तं तारतम्यभरसंभृतिजृम्भमाण-
संरम्भशून्यफलमाद्रियते विदग्धः॥ ३५।५७

२५४. और्जित्यमुज्झितवतां बत वीतशङ्क
कार्यं करिष्यति च नीतिविषूचिका वः (चेत्)।
वन्ध्यासुतः शशिविषाणधनुर्विधाय
मोक्ष्यत्यवश्यमचिरेण स नाकबाणान्॥ ३५।५८

२५५. तन्द्रालुमिर्न सुलभा ननु धैर्यशौर्य-
शौटीर्यहार्यहृदया क्वचिदेव लक्ष्मीः॥ ३५।५९

२५६. पर्याप्तिमेति शिखिनः समिदुद्धतस्य
दग्धुं स्फुलिङ्गकणिकापि समासजन्ती। ३६।६

२५७. भस्मीकरोतु वडनानलमन्तरेण
कल्लोलकाण्डकलिलं क इवाम्बु सिन्धोः? ३६।८

२५८. कोऽप्येष शब्दमहिमा जलदस्य येन
रत्नाङ्कुरप्रसवमेति विदूरभूमिः। ३६।१०

२५९. ग्राव्णः प्रसूतिमधिगच्छति हेम यस्मा-
न्नासौ क्वचिद्भवति तस्य निकाषट्टः। ३६।११

२६०. अल्पोऽपि किं मधुकरैर्मकरन्दरेणु
रादीयते हि मधुनो न मधूकपुष्पात्? ३७।५

२६१. क्षीराम्बुधेः कुत इवामृतशीकरार्द्र-
सान्द्रप्रभाधवलचन्द्रकलाप्रसूतिः। ३७।६

२६२. सुव्यक्तमूर्जितधियो युधि हासयन्ति
वैदग्ध्यनिह्नुतिधियो नयमार्गलग्नाः।

दोलाधिरोहविधुरं विहितं च कार्य-
मुत्सन्नमेव च तदित्यपि मेऽभिसंधिः ॥ ३७।२६

२६३. शब्दः स केसरिण एव भयङ्करेण
येन श्रुतेन विमदीभवतीभयूथः । ३७।४६

२६४. मन्ये तदेव वचनं रिपुविप्रकार-
रोषेण रूपितधियः समरेषु यस्मिन् ।
उद्भिद्यतेऽतिविषमा समवर्तिराज-
धानीभटस्य भृकुटिः प्रतिकारहेतोः ॥ ३७।४७

२६५. संग्रामकाननुमुदूढकरालपीलुबन्धं
चमूरचितशोभमरातिसंस्था ।
नैवाधितिष्ठति चिरं सुभटस्य चाप-
टाङ्कारनादचकिता हरिणीव लक्ष्मीः ॥ ३७।४९

२६६. हेलावरुग्णहरिणा हरयो यथेच्छ-
मध्यावसन्ति ननु काननचक्रवालम् । ३७।६४

२६७. एकीभवन्ति नहि केसरिणः कुरङ्गैः । ३७।६६

२६८. सिंहोऽस्तु शत्रुरथवाधिपतिर्मृगाणां
शंसास्पदं तदपि द्वयमेव मन्ये ।
तस्य स्फुरत्करजवज्रशिखाभिघात
हेलानिपातितमतङ्गजजङ्गमाद्रेः ॥ ३७।६७

२६९. श्रुतिदीपतिरस्कृतान्धकारा
प्रतिभासंपदमक्षतां वहन्ती ।
जयति व्यवहारहेतुरेका
मतिरेवार्थविनिर्णयं विधात्री ॥ ३८।२

२७०. विशिनष्ट्यनिशं शरीरभाजां
करणग्राममशेषमेव जिह्वा ।
कृतधीरयथोद्गतानुमाना
कुरुते यत्र सरस्वती प्रतिष्ठाम् ॥ ३८।३

२७१. प्राप्ता सुवर्णघटनां शुभवीजसूति-
हेतुर्गृहीतहृदयातिसुवृत्तभावात् ।
वाणी सतो मधुरतामनिशं वहन्ती
कं कर्णिका च न हरेदिह पङ्कजस्य ॥ ३८।६

२७२. विवेकभाजो विरला हि लोके
व्यतीतसंख्या ननु सन्ति मूर्खाः। ३८।८

२७३. प्रायः कृशैरपि गुणैर्बहुमानगुर्वी
संभावनां विदधदात्मनि मूढचेताः।
विभ्रन्मनो गुणमहत्स्वपि सावहेलं
हास्यत्वमेव लघुवृत्तिरुपैति लोकः॥ ३८।९

२७४. दूरव्यपोढचरितातिशयाः स्वशंसां
कुर्वन्ति नीचमतयो रसनासहस्रैः।
श्लाघ्यात्मनां गुणगणग्रहणे तु नूनं
स्तम्बेरमा इव भवन्ति विवृत्तजिह्वाः॥ ३८।१०

२७५. सन्मण्डलस्थितिकृता तनुनापि नूनं
कोदण्डदण्ड इव भाति गुणेन साधुः।
नीचस्तु तस्य सरलोन्नतसाधुवृत्तेः
संभाव्यते कुणिरिव ग्रहणेऽप्ययोग्यः॥ ३८।११

२७६. यः सज्जनो जगति यश्च खलैकवृत्ति
र्द्वावप्यलीकवचसावमिध्महे तौ।
एको गुणानसत एव यतः परस्य
वक्तीतरः किल सतोऽपि विनिह्नुते तान्॥ ३८।१२

२७७. आरोप्य दूरमसतोऽपि गुणान्ब्रवीते
साधुः खलस्तु तदपह्नववृत्तिरास्ताम्।
चेतः समाश्वसिति यस्य पुनः प्रकर्ष—
पर्यन्तगेष्वपि न तेषु स कश्चिदेकः॥ ३८।१३

२७८. आवर्ज्यतेऽवसर एव हि चित्तवृत्ति-
रत्यन्तदक्षिणतया सुजनस्य वाग्भिः।
प्राप्ते मधावविरतं नवचूतयष्टि
रुल्लास्यते मलयमारुतवेल्लनाभिः॥ ३८।१४

२७९. वक्त्रश्रियं वितनुते नवसिन्धुवार-
पुष्पप्रकाण्डलवलीव सतः शुचिश्रीः।
शूलं करोति शिरसो विषमञ्जरीव—
कर्णे कृता खलजनस्य तु वागभीक्ष्णम्॥ ३८।१५

२८०. आबिभ्रतः खलु कलावति पक्षपात-
मुद्वृत्तकामजयिनो वृषयानभाजः।

वाक्यं मलीमसमपि प्रतनोति कण्ठ-
शोभां सतो विषमिव त्रिशिखायुधस्य ॥ ३८।१६

२८१. गाम्भीर्यशालि हृदयं महतामगाध-
धैर्यं भवत्यनुकृताखिलसागराम्भः।
प्राप्तं निसर्गलघुसत्वसमाश्रयत्व-
मन्ये तु तद्दधति तुल्यमुदुम्बरस्य ॥ ३८।१७

२८२. साधारणैरपि गुणैर्बहुमानमेति
भूयिष्ठमेव पुरुषो लघुचित्तवृत्तिः।
लोकोत्तरैरपि न तैरपरस्तु धत्ते
दोलायमानमतिरुद्धुरकंधरत्वम् ॥ ३८।१८

२८३. यस्मिन्परिस्फुरति शेषगुणप्रकाशो
मन्दायते शशभृतीव च तारकौघः।
संतोषिणो जगति सोऽपि गुणोऽस्तु नाम,
तेनापि चेतसि मदो धिगपत्रपत्वम् ॥ ३८।१९

२८४. ख्यातिं पुमानिति पुमान्भजते स एव
योऽलङ्कृतो गुणगणैः शिशिरांशुशुभ्रैः।
सोऽश्मैव संप्रति मणिः प्रथिताकरोऽपि
यस्य स्फुरन्ति न करा दलितान्धकाराः ॥ ३८।२०

२८५. आलम्बितेऽपि हि विकासविधौ निरर्थ-
मानावलेपपवनक्षतबुद्धिगन्धाः।
वृन्तावशेषकुसुमाकृतयो न लक्ष्मी-
मासादयन्ति पुरुषा गुणहीनरूपाः ॥ ३८।२१

२८६. स्वच्छन्दता खलगिरां न भवन्ति वस्तु
तत्त्वस्पृशो जगति केचन तासु शब्दाः।
आत्मस्तुतिं सुजनसच्चरितापलाप-
पापं च तेन विदधीत कथं न मूढः ? ३८।२२

२८७. योग्योऽहमेव मम ये तु गुणा न सन्ति
तान्दूषयेदसत एव कथं ह्यसाधुः।
लोकापवादपरिधूसरतामवाप्तै-
र्दूयन्त एव गुणिनो ननु तैरभीक्ष्णम् ॥ ३८।२३

२८८. ये निर्गुणाः परगुणेषु दृढानुरागा-
स्तेभ्यो नमः सकलसज्जनशेखरेभ्यः।

येषां पुनर्गुणवतामपि साभ्यसूयं
चेतोऽन्यदीयगुणसंपदि धिक्खलांस्तान् ॥ ३८।२४

२८९. शून्यात्मनस्त्वमवनिर्जगतीह तस्य
पुंसोऽनिशं परगुणग्रहणाभियोगे ।
धत्तेतरां सदसि संयुगसङ्कटे च
जिह्वेन्द्रियं करतलं च न यः किणाङ्कम् ॥ ३८।२५

२९०. आश्चर्यवृत्ति हृदयं महतामहो नु
विस्तीर्णतालवकणान्वयिनाकमार्गम् ।
आवद्धचते तनुभिरप्यखिलं गुणैर्य-
दक्रीतदासमनिशं विमलैः परेषाम् ॥ ३८।२६

२९१. न प्राप्नुवन्ति समतामखिलैर्मदीयै
रेते गुणैः परगुणेष्विति यान्ति नेर्ष्याम् ।
प्राप्ता च तैः सदृशताधिकताधवैषां-
जातश्च साधुरपि मत्सरमूढचेताः ॥ ३८।२७

२९२. उद्दाममत्सरविमूढधियो भवन्तु
मा वा परे मलिनितच्छविवक्त्रशोभाः ।
उद्भिन्नपीनपुलकाभरणो भवामि
यत्सत्यमन्यगुणकीर्तनतोऽहमेकः ॥ ३८।२८

२९३. शक्यो न तोषयितुमात्मनि यः कृतास्थैः
संख्यातिगैरपि गुणैर्गुरुतां दधद्भिः ।
स्वल्पैरसौ परगतैः परितुष्यतीति
विस्मायि चेष्टितमहो महतस्तदेतत् ॥ ३८।२९

२९४. व्यक्तं खटुङ्कजनतापिहितात्मनोऽपि
निर्भत्सराः सततमुन्नमयन्ति साधोः ।
सन्तो गुणान्घनरसातलतालुपङ्क-
मग्नान्मणीन्जलनिधेरिव वीचिभङ्गाः ॥ ३८।३०

२९५. आत्माभिमानविषमग्रहनिघ्नचित्त-
वृत्तेः परस्य न गुणेषु कदाचिदास्था ।
अन्योभिनन्दति तनूनपि तानवश्य-
मध्यात्मनो जगति मङ्गलमौक्तिकाभान् ॥ ३८।३१

२९६. कुर्वन्तु नाम बहिरन्यगुणेषु केचि-
दत्यन्तमत्सरविमूढधियोऽभ्यसूयाम् ।

तेषां पुनर्जगति ये हृदयान्यभीक्ष्णं
नावर्जयन्ति नितरां न गुणैर्गुणस्तैः ॥ ३८।३२

२९७. प्राप्ताः प्रकर्षपदवीममृतोर्मिभङ्ग-
शीताः शशाङ्करुचयो धनमत्सराणाम् ।
येषां सुखोपकरणं न गुणाः परेषा-
मात्मद्रुहो धिगधमान् हतजन्मनस्तान् ॥ ३८।३३

२९८. दत्त्वा बहिः परगुणेष्वपि साधुवाद-
मन्तस्तु मत्सरविषानलदह्यमानः ।
निर्वाति मूढहृदयः स्वविकल्पशिल्प-
सङ्कल्पितं कमपि तेष्वधिरोप्य दोषम् ॥ ३८।३४

२९९. श्लाघ्यः स एव निजवशसुमेरुकुञ्ज-
कल्पद्रुमः सुचरितातिशयेन यस्य ।
वन्द्या गुणास्त्रिभुवनेऽपि न संभवन्ति
शौरेः क्रमा इव विनिर्गतकीर्तिगङ्गाः ॥ ३८।३५

३००. तेजोदरिद्रा वरमस्तु वुद्धिः
प्रज्ञाविहीनेन किमोजसा स्यात् ।
किं वारिदे गर्जति दत्तझम्पः
प्राप्नोति नाशं शरभो न तेन ? ३८।३६

३०१. कालो निरर्गलतया मुनत्रयेऽत्र
क्रीडत्यहो जयपराजयलीलयासौ । ३८।३९

३०२. क्रूरस्य कालकरिणो दृढदीर्घहस्त-
पाशस्य नैव ससुरासुरचक्रवालम् ।
पर्याप्तिमेति जगदेकविधानपिण्ड-
लीलावकीर्णकवलग्रहविभ्रमाणाम् ॥ ३८।४०

३०३. क्रोडीकृतं जगदनित्यतया हि सर्वम् । ३८।४२

३०४. वहुगुणमपि मन्ये दोषहेतुं कदाचित् । ४१।७

३०५. स्फुटमिह विमलानां स्वच्छता श्लाघ्यरूपा
विसदृशमुपधानं तत्र दोषाय नूनम् ।
प्रतिमितमभरौघा मेनिरे यन्निरीक्ष्य
क्षितितलमपि शीतामीशुविम्वे कलङ्कम् ॥ ४१।६४

३०६. महतां स्थितिः परहितप्रवणा । ४२।५

३०७. हेलानिपातहतसंहतहस्तिहस्त
हेतिः सहेत सहसानिलवेल्लयमानाः ।
सिंहः सटा अपि कथं गुरुरोषगाढ–
गम्भीरगर्जितनिनादितशैलकुञ्जः ॥ ४५।१०

३०८. प्रायेण कार्यकरणं प्रतिविस्फुरन्ति
तेजस्विनो न वहुसाधनसव्यपेक्षाः ।
लोकान्विनिर्दहति सप्तभिरेव सप्त
संहारकालमुदितो दहनः शिखाभिः ॥ ४५।१३

३०९. क्लिष्टं मलेन न कदाचिदहेमवद्ध
मावन्ध्यताविरहितं स्पृहणीयरूपम् ।
निर्व्याजमाहुरिह भूषणमार्यवृत्ताः
शौर्यप्रतापजनितं यश एव पुंसः ॥ ४५।१५

३१०. तावद्व्रजन्ति गुरुतां यशसैव यावद–
ध्यासिता हिमजिपाण्डुरुचा महान्तः ।
लूने विकासिकुसुमे च शिखाग्रभागात्–
कस्यादरो भवति शंसत तस्य वृन्ते ? ४५।१६

३११. श्चयोतत्प्रफुल्लनवचूतसुगन्धिदान–
गण्डालिमण्डलसडिण्डिमडम्बरेभ्यः ।
स्तम्बेरमेभ्य इव केसरिणां न भीतिः
संभाव्यतेऽत्रभवतां भवतां रिपुभ्यः ॥ ४५।१७

३१२. तेजस्विनोऽतिमहतः क्वचनापि नूनं
तीक्ष्णे मृदौ च न विहन्यत एव शक्तिः ।
उत्थाय नागनगराद्वडवाग्निनैव
सार्धं विनिर्दहति सिन्धुपतिं क्षयाग्निः ॥ ४५।२६

३१३. दुःखं न किञ्चिदपरं पुरुषत्वहानेः । ४५।३२

३१४. तेजस्विनो न खलु काचिदपीह शक्ति–
राप्नोति कार्यकरणे क्वचनोपघातम् ।
एकापि सास्ति न शिखा वडवानलस्य
या निर्दहत्यनिशमेव न सिन्धुतोयम् ॥ ४५।३३

३१५. उल्लासि दूरतरमस्खलितत्वमाप्त–
मुल्लङ्घिताखिलजगत्प्रतिवन्धशून्यम् ।

श्लाघ्यं दुरावतरया भुजशालिनां हि
पूर्वं यशस्तदनु निस्फुरतीह तेजः ॥ ४५।४२
३१६. विद्यन्त्यङ्गमसूर्यथा स्मितरुचो मुक्ता रणप्रेक्षकै-
र्नैवं पत्रिपरम्पराः कटुरणत्कोदण्डखण्डच्युताः ।
संप्रस्तौत्ययशो यथा च नितरामन्धं तमश्चक्षुषो-
र्नैवं वाजिखुराग्रखण्डितरणक्षोणीसमुत्थं रजः ॥ ४५।४६
३१७. वार्ताभङ्गः प्रथयति यथा मूर्छनामिन्द्रियाणां
सान्द्राप्येवं न खलु सुभटप्रेरितास्त्रप्रहारः ।
त्यक्ताः प्राणैर्भृशमशुचितां नैवमायान्ति काया
यद्वद्व्रीडां गुणमणिखनिं लङ्घयन्तो लघीयः ॥ ४५।५०
३१८. निर्भिन्दती भवनवर्तिनिशान्धकार-
माश्चर्यधाम नहि दीपशिखा कदाचित् ॥ ४७।२
३१९. आस्वादयन्त्यमृतशीकरबिन्दुवर्ष-
मभ्येति कस्य रसना विरसामवस्थाम् ॥ ४७।१६६
३२०. रन्ध्रेन जातु रिपुषु प्रहरन्ति धीराः । ५०।५५
३२१. अन्या हि नृत्तरभसोत्थितदत्तताल-
वेतालमालिततला पितृमन्दिरोर्वी ।
संग्राममूमिरपरा भटचण्डचक्र-
दोर्दण्डदर्पनिकषोपलपट्टिकाश्रीः ॥ ५०।६२

## परिशिष्टम् (३)

# सहायक-ग्रन्थ-सूची


| | | |
|---|---|---|
| १ | अथर्ववेदः | श्रीराम शर्मा, संस्कृति-संस्थानम्, बरेली, १९६२ |
| २ | अनर्घराघवम् | चौखम्बा |
| ३ | अभिनवगुप्त ( ए स्टडी आफ़ हिस्ट्री एण्ड फ़िलासफ़ी) | कान्तिचन्द्रपाण्डेयः, चौखम्बा, १९२५ |
| ४ | अभिधावृत्तिमातृका | मुकुलभट्टः, सं० डा० रेवाप्रसाद द्विवेदी, चौखम्बा, १९७३ |
| ५ | अभिज्ञानशाकुन्तलम् | डा० कपिलदेव द्विवेदी, साहित्यसंस्थानम्, प्रयागः |
| ६ | अमरकोषः (रामाश्रयी–टीकासहितः) | चौखम्बा, १९७० |
| ७ | अलङ्कारसर्वस्वम् (जयरथ-कृतटीकासहितम् | निर्णयसागरः, १९३९ |
| ८ | अष्टाङ्गहृदयम् (वाग्भटः) | सं० कविराजो त्रिदेवगुप्तः,चौखम्बा,१९६२ |
| ९ | आधुनिक संस्कृत-साहित्य | डा० हीरालाल शुक्लः, रचनाप्रकाशनम्, इलाहाबाद–१, १९७१ |
| १० | ईशादि नौ उपनिषद् | श्री हरिकृष्णदास गोयन्दका, गीताप्रेसः, गोरखपुरम्, वि० सं० २०२१ |
| ११ | ईशावास्योपनिषद् | गीताप्रेसः, गोरखपुरम् |
| १२ | ईश्वरप्रत्यभिज्ञाविमर्शिनी (१-३) | अभिनवगुप्तः, कश्मीरसंस्कृत ग्रन्थावलिः, रिसर्च एण्ड पब्लिकेशन डिपार्टमेण्ट, जम्मू कश्मीरः । |

१३ उत्तररामचरितम्(भवभूतिः) — सं० आचार्यश्रीब्रह्मानन्द शुक्लः, साहित्य-भण्डारः, मेरठ, तृतीयं संस्करणम्, १९७३

१४ ऋग्वेदः — श्री विश्वबन्धुः, विश्वेश्वरानन्द शोध-संस्थानम्, होशियारपुरम्,१९६५–६६

१५ ऋक्सूक्तसमुच्चयः — डा० रामकृष्णाचार्यः,विनोदपुस्तकमन्दिरम्, आगरा, १९७३

१६ ए हिस्ट्री आफ् संस्कृत–लिटरेचर — एस. एन. हासगुप्ता, एस.के. दे., कलकत्ता वि० वि, १९२५

१७ ए क्रिटिकल स्टडी आफ् श्रीहर्षाज़ नैषधीयचरितम् — डा०अरुणोदय नटवरलाल जानी, ओरि–यण्टल इन्स्टीट्यूट, बड़ौदा(१९५७)

१८ ए हिस्ट्री आफ् संस्कृत–लिटरेचर — ए० बी० कीथ (हिन्दी-अनुवादः) डा० मंगलदेव शास्त्री, मोतीलाल-बनारसीदासः, दिल्ली

१९ औचित्यविचारचर्चा — चौखम्बा०

२० कठोपनिषद् — भाष्यकारः डा० ब्रह्ममित्रोऽवस्थी, इन्द्र-प्रकाशनम्, दिल्ली-७

२१ कप्फिणाभ्युदयः — शिवस्वामी, सं० श्री गौरीशङ्करः, पंजाव वि०वि०, लाहौर (१९३७)

२२ कल्पवृक्षः — श्री साहिवकौलः (अप्रकाशिता कृतिः)

२३ कल्याण — शिवाङ्कः, १९३३

२४ कल्याण — शक्त्यङ्कः, १९३४

२५ कल्याण — उपनिषदङ्कः, १९४९

२६ कल्याण — हिन्दू-संस्कृत्यङ्कः, १९५०

२७ कल्याण — शिवपुराणाङ्कः, १९६२

२८ कल्याण — उपासनाङ्कः, १९६८

२९ कल्याण — अग्निपुराणाङ्कः, १९७०

३० कल्याण — अग्निपुराण-गर्ग संहिताङ्क, १९७१

३१ कविकण्ठाभरणम् — क्षेमेन्द्रः,काव्यमाला, चतुर्थो गुच्छः, १८९९

३२ कविसमयमीमांसा — श्री विष्णुस्वरूपः, काशी हिन्दू वि०वि०, १९६३

३३ कादम्बरी — सम्पा० भट्ट मथुरानाथ शास्त्री, निर्णय-सागर, १९४०

| | | |
|---|---|---|
| ३४ | कामसूत्रम् | वात्स्यायनः, माधवाचार्य-सम्पादितः वेंकटेश्वर प्रेस, बम्बई, १९९१ |
| ३५ | कामन्दकीयनीतिसारः | सम्पा० पं० ज्वालाप्रसाद मिश्रः, वेंकटेश्वर प्रेस, बम्बई, सं० २००९ |
| ३६ | कामायनी में काव्य-संस्कृति और दर्शन | डा० द्वारकाप्रसाद सक्सेना, विनोदपुस्तक-मन्दिरम्, आगरा, १९७१ |
| ३७ | किरातार्जुनीयम् (पञ्चमं सं०) | सम्पा० श्री आदित्यनारायण पाण्डेयः, चौखम्बा, १९६८ |
| ३८ | कौटिलीयमर्थशास्त्रम् | सम्पा० श्री वाचस्पति गैरोला, चौखम्बा, १९६२ |
| ३९ | काव्यप्रकाशः | श्री वामनाचार्य झलकीकरः, भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना, १९५० |
| ४० | काव्यप्रकाशः | डा० हरिदत्तशास्त्री, सा० भ०, मेरठ, २०१७ |
| ४१ | काव्यप्रकाशः (द्वि० सं०) | आचार्य विश्वेश्वरः, ज्ञानमण्डलम्, वाराणसी, २०१८ |
| ४२ | काव्यप्रकाशः (अंग्रेजी-अनु०) | डा. गङ्गानाथ झा, भारतीय विद्या-प्रकाशनम्, वाराणसी-१ |
| ४३ | काव्यकल्पलतावृत्तिः | श्री अमरचन्द्रयतिः, चौखम्बा, १९२८ |
| ४४ | काव्यमीमांसा | राजशेखरः, चौखम्बा, १९६४ |
| ४५ | काव्यतत्वसमीक्षा | श्रीनरेन्द्रनाथ चौधुरी, मोतीलाल-बनारसीदास, १९५९ |
| ४६ | काव्यसमीक्षा | डा० विक्रमादित्यरायः, भारतीय विद्या-भवन प्रकाशनम्, वाराणसी, १९६७ |
| ४७ | काव्यालङ्कारसूत्रवृत्तिः | वामनः, सम्पादकः-आचार्य विश्वेश्वरः, आत्माराम एण्ड संस, दिल्ली, १९५४ |
| ४८ | काव्यालङ्कारः | रुद्रटः, चौखम्बा, १९६६ |
| ४९ | काव्यालङ्कारः | भामहः, सं० श्री बटुकनाथ शर्मा, चौखम्बा, १९२८ |
| ५० | काव्यादर्शः | दण्डी, सं० श्रीनृसिंहदेव शास्त्री, मेहरचन्द-लछमनदास, लाहौर, १९२५ |
| ५१ | कालिदासग्रन्थावली | सम्पा० आचार्यः श्री सीताराम चतुर्वेदी, |

| | |
|---|---|
| | भारत प्रकाशन-मन्दिरम्, अलीगढ़, सं० २०१६ |
| ५२ कालिदास | श्री वासुदेव विष्णु मिराशी-हिन्दीग्रन्थ-रत्नाकरः, बम्बई, १९५६ |
| ५३ कालिदास की कला और संस्कृति | डा० देवीदत्त शर्मा, सा०भ० मेरठ, १९७० |
| ५४ काश्मीर-शैविज्म | श्री जगदीशचन्द्र चटर्जी, रिसर्च एण्ड पब्लिकेशन डिपार्टमेण्ट, जम्मू-कश्मीरः, १९६२ |
| ५५ काश्मीरेतिहासः | श्री हनुमत्प्रसाद शास्त्री - श्रीलालबहादुर-शास्त्री, राष्ट्रिय संस्कृत-विद्यापीठः,दिल्ली, सं० २०२४ |
| ५६ कुमारसम्भवम् | चौखम्बा |
| ५७ चाणक्यनीतिदर्पणः | भार्गवपुस्तकभवनम्, गायघाट, वाराणसी, सं० २०१७ |
| ५८ चित्रकाव्यकौतुकम् | श्री रामरूप पाठकः, मोनीलाल-बनारसीदासः, दिल्ली, १९६५ |
| ५९ चित्रमीमांसा | सम्पा० श्री जगदीशचन्द्र मिश्रः, चौखम्बा, १९७१ |
| ६० छान्दोग्योपनिषद् | गीता प्रेस, गोरखपुरम् सं० २०१६ |
| ६१ जानकीहरणम् | सं० श्रीगोपालरघुनाथ नन्दार्गीकरः, बम्बई, १९०७ |
| ६२ जानकीहरणम् | मित्र-प्रकाशनम्, इलाहाबादः |
| ६३ तर्कभाषा | सं० आचार्य विश्वेश्वरः, चौखम्बा, द्वि०सं० १९६३ |
| ६४ तर्कसंग्रहः | सं० डा० दयानन्द भार्गवः, मोतीलाल बनारसीदासः, दिल्ली, १९७१ |
| ६५ तन्त्रसारः | अभिनवगुप्तः,कश्मीर-सं०ग्रन्थावलिः, जम्मू-कश्मीर, १९१८ |
| ६६ तन्त्रमहाविज्ञान् (द्वौ भागौ) | श्रीश्रीरामशर्मा, संस्कृति-संस्थानम्, बरेली, द्वि० सं० १९७१ |

६७ तन्त्रालोकः (१-१२ भागाः) — अभिनवगुप्तः, कश्मीर-सं०-ग्रन्थावलिः

६८ तान्त्रिक साहित्य — म०म० गोपीनाथ कविराजः, हिन्दी-समिति, लखनऊ, १९७२

६९ तैत्तिरीयोपनिषद् — गीताप्रेस, गोरखपुरम्, सं० २०१९

७० दशरूपकम् — सं० भोलाशंकर व्यासः, चौखम्बा, द्वि०सं० १९६२

७१ दुर्गासप्तशती — गीताप्रेस, गोरखपुरम्

७२ देवीनामविलासः — श्रीसाहिब कौलः, काश्मीर ग्रन्थावलिः, १९४२

७३ द्विसन्धानमहाकाव्यम् — महाकविर्धनञ्जयः, भारतीय ज्ञानपीठः, दिल्ली, १९७०

७४ ध्वनिगाथापञ्चिका — रत्नाकरः, भण्डारकर ओरियण्टल रिसर्च इन्स्टीट्यूट, पूना, २५३, संख्यका हस्त-लिखिता प्रतिः (१९७५-७६)

७५ ध्वन्यालोकः — आचार्य विश्वेश्वरसम्पादितः, गौतम बुक-डिपो, दिल्ली, प्र०सं० १९५२

७६ ध्वन्यालोकः — डा० कृष्णकुमारः, सा०भ० मेरठ, १९७३

७७ धातुकाव्यम् — नारायणकविः, काव्यमाला (दशम गुच्छकः) निर्णयसागरः, १९१५

७८ नाट्यदर्पणः — रामचन्द्र-गुणचन्द्रौ, सं० आचार्य विश्वेश्वरः, हिन्दी विभागः, दिल्ली वि०वि०, १९६१

७९ नाट्यशास्त्रम् — भरतमुनिः, निर्णयसागरः, १९४३

८० नैषधीयचरितम् — सम्पा० म०म०पं० शिवदत्त शर्मा दाधीचः, १९२८

८१ नैषध-परिशीलन — डा० चण्डिकाप्रसाद शुक्लः, हिन्दुस्तानी एकेडमी, उ०प्र०, इलाहाबादः (१९६०)

८२ पद्मपुराणम् — नन्दलाल मोरः, ५ क्लाइव रोड, कलकत्ता

८३ परमार्थसारः — अभिनवगुप्तः, कश्मीरसंस्कृत-ग्रन्थावलिः

८४ पराप्रवेशिका — श्री क्षेमराजाचार्यः, सं० श्री स्वामी जी महाराज, पीताम्बरापीठ, दतिया (म०प्र०)

८५ परात्रीशिकातात्पर्यदीपिका — सं० श्री जगद्धर जाडू, काश्मीर-संस्कृत-ग्रन्थावलिः, १९४७

८६ पुरुषसूक्तम् — साहित्यभण्डारः, मेरठ

८७ प्रकृति और काव्य (संस्कृत-साहित्य) — डा रघुवंशः, नेशमल पब्लिशिंग हाउस, दिल्ली, १९६३

८८ प्रत्यभिज्ञाहृदयम् — श्रीक्षेमराजः, सं० श्री विशालप्रसाद त्रिपाठी, नेशनल पब्लिशिंग हाउस, दिल्ली, १९६९

८९ प्रबन्धरत्नाकरः — डा० रमेशचन्द्र शुक्लः, चौखम्बा, १९६७

९० पातञ्जलयोगदर्शनम् — सं० श्री ब्रह्मलीनमुनिः, श्रीकबीर-मन्दिरम्, दागलिया, मौ० महीधरपुरा, सूरत (गुजरात), १९५८

९१ बुद्धचरितम् — सं० श्री सूर्यनारायण चौधरी, संस्कृत-भवनम्, पूर्णिया (बिहार), प्रथमोभागः, १९४८, द्वितीयो भागः, १९५३

९२ बोधसारः — श्री नरहरिः, सम्पा० पं० रामावतार विद्या-भास्करः, प्रका० ठा० कायमसिंहः, मैनपुरी

९३ भक्तिसुधा(१-३ भागाः) — श्री करपात्रस्वामी, भक्ति-साहित्य-सुधा-परिषद्, कलकत्ता, प्र० भागः(सं० २०२०), द्वि० भागः(२०२१), तृ०भागः(२०२२)

९४ भट्टिकाव्यम् — सम्पा० श्री शेषराज शास्त्री, चौखम्बा, १९५१-५२

९५ भारतीय दर्शन — श्री बलदेव उपाध्यायः (षष्ठं संस्करणम्) शारदामन्दिरम्, वाराणसी (१९६०)

९६ भारतीय दर्शन — डा० उमेश मिश्रः, हिन्दी समितिः, उ०प्र०, लखनऊ, १९६४

९७ भारतीय दर्शन की रूपरेखा — श्री हिरियन्ना (हिन्दी-अनुवादः), राजकमल प्रकाशनम्, दिल्ली, प्र०सं० १९६५

९८ भारतीय दर्शन का इतिहास — डा० हरिदत्त शास्त्री, सा०भ०, मेरठ, १९६६

९९ भारतीय संस्कृति का — डा० मंगलदेव शास्त्री, भारतीय विद्या-

विकास (द्वितीय खण्ड:) प्रकाशनम्, वाराणसी, १९६६
१०० भारतीय साहित्यशास्त्र श्री बलदेव उपाध्याय:, प्र०सं०, द्वि०सं० १९६३, द्वि०ख०, तृ०सं० १९६७, नन्दकिशोर एण्ड संस, चौक, वाराणसी
१०१ भारतीय साहित्यशास्त्र श्री गणेश त्र्यम्बक देशपाण्डे, पोपुलर बुक डिपो, लैमिंगटन रोड, बम्बई-७ (१९६०)
१०२ भारतीय साहित्य-दर्शन श्री राममूर्ति त्रिपाठी, सरस्वती-मन्दिर, जतनबर, वाराणसी, १९५९
१०३ भावप्रकाश: चौखम्बा, वाराणसी, १९६१
१०४ मनुस्मृति: सम्पा० श्री हरगोविन्दशास्त्री, चौखम्बा, १९५२
१०५ महाकवि कालिदास श्री रमाशंकर तिवारी, चौखम्बा, सं २०१८
१०६ महाभारतम् गीताप्रेस, गोरखपुरम्
१०७ महाभारत की नामानुक्रमणिका गीताप्रेस, गोरखपुरम्
१०८ मत्स्यपुराणम् नन्दलाल मोर, ५, क्लाइव रोड, कलकत्ता
१०९ मन्त्रमहाविज्ञान(१-४ भागा:) सम्पा० डा० चमनलाल गौतम:, संस्कृति संस्थानम्, बरेली, १९७२
११० महाकवि माघ:-उनका जीवन तथा कृतियाँ डा० मनमोहनलाल जगन्नाथ शर्मा, नवयुग-प्रकाशनम्, दिल्ली, १९६३
१११ मालिनीविजयोत्तरतन्त्रम् रिसर्च डिपार्टमेण्ट, जम्मू-कश्मीर, १९२२
११२ मुण्डकोपनिषद् गीता प्रेस, गोरखपुरम्
११३ मुद्राराक्षसम् सम्पा० आचार्य श्री ब्रह्मानन्द शुक्ल:, प्रकाशक:- मास्टर खेलाड़ीलाल एण्ड सन्स, वाराणसी, १९५३
११४ मेघदूतम् साहित्य भण्डार, मेरठ
११५ यजुर्वेद: श्रीराम शर्मा, द्वितीय सं १९६२, संस्कृति संस्थानम्, बरेली
११६ युधिष्ठिरविजयम्(वासुदेव:) निर्णयसागर:, १९३०
११७ युधिष्ठिरविजयम्(वासुदेव:) सम्पा० श्री व्रजेशचन्द्र श्रीवास्तव:, चौखम्बा, १९६८

| | |
|---|---|
| ११८ रघुवंशम् | चौखम्बा० |
| ११९ रत्नावली | श्री हर्षः, चौखम्बा |
| १२० रसगंगाधरः | सम्पा०भट्ट श्री मथुरानाथ शास्त्री, निर्णय-सागरः, १९३९ |
| १२१ रससिद्धान्त | डा० नगेन्द्र, नेशनल पब्लिशिंग हाउस, दिल्ली दिल्ली, १९६४ |
| १२२ रससिद्धान्त और सौन्दर्यशास्त्र | डा० निर्मला जैन, नेशनल पब्लिशिंग हाउस दिल्ली, १९६७ |
| १२३ रसगंगाधर का शास्त्रीय अध्ययन | डा० प्रेमस्वरूप गुप्त, भारत प्रकाशन मन्दिरम्, अलीगढ़, १९६२ |
| १२४ राघवपाण्डवीयम् | कविराजः, सम्पा० श्री दामोदर झा, चौखम्बा, १९६५ |
| १२५ राघवनैषधीयम् | हरदत्त सूरि, निर्णयसागरः, १९२६ |
| १२६ राजतरङ्गिणी | कल्हण, सम्पा० स्टीन, मुंशीराम मनोहर-लाल, दिल्ली |
| १२७ रामकृष्णविलोमकाव्यम् | दैवज्ञ श्री सूर्यकविः, सम्पादक श्री कामेश्वर-नाथ मिश्र, चौखम्बा, १९७० |
| १२८ रावणार्जुनीयम् | श्री भट्टभीमः, निर्णयसागरः, १९०० |
| १२९ रोमाण्टिक साहित्यशास्त्र | श्री देवराज उपाध्याय, आत्माराम एण्ड सन्स, दिल्ली, १९५१ |
| १३० वक्रोक्तिजीवितम् | श्री सुशीलकुमार दे, के. एल. मुखयोपाध्याय, कलकत्ता, तृतीयं सं १९६१ |
| १३१ वक्रोक्तिपञ्चाशिका | काव्यमाला (प्रथम गुच्छकः), पृ० १०१-११४, निर्णयसागरः, १८९३ |
| १३२ वक्रोक्ति और अभिव्यञ्जना | श्रीरामनरेश शर्मा, ज्ञानमण्डलम्, काशी, सं० २०१८ |
| १३३ वाक्यपदीयम् (ब्रह्मकाण्डम्) | भर्तृहरिः, चौखम्बा |
| १३४ वाचस्पत्यम् | चौखम्बा (१८६९-७०) |
| १५३ वासुदेवविजयम् | वासुदेवः, काव्यमाला० (दशमोगुच्छकः), निर्णयसागरः, १९१५ |
| १३६ विश्वसंस्कृत शताब्दीग्रन्थः | अ० भा० सं० सा०सम्मेलनम् दिल्ली सं० |

(जम्मू-कश्मीर राज्यभागः) २०२२
१३७ विक्रमोर्वशीयम् चौखम्बा
१३८ वृत्तरत्नाकरः केदारभट्टः, चौखम्बा, द्वि०सं०, सं० २००४
१३९ वेदान्तदर्शन हरिकृष्णदास गोयन्दका, गीताप्रेस, गोरखपुरम्, पञ्चम सं०, २०२०
१४० वेदान्तसारः सदानन्दः, सम्पा० श्रीसत्यनारायण श्रीवास्तव्यः, लोकभारती प्रकाशनम्, इलाहाबाद-१, प्र०सं० १९६८
१४१ वेदार्थसंग्रहः श्री रामानुजाचार्यः, सम्पा० श्रीनीलमेघाचार्यः, आचार्यप्रेस, बरेली
१४२ वैदिक साहित्य पं० रामगोविन्द त्रिवेदी, भारतीय ज्ञानपीठ, दिल्ली, १९६८
१४३ व्यक्तिविवेकः महिमभट्टः, सम्पा० डा० रेवाप्रसाद द्विवेदी, चौखम्बा, वाराणसी
१४४ शब्दकल्पद्रुमः स्यार-राजा राधाकान्तदेव बहादुरः, तृतीय सं०, चौखम्बा, २०२४
१४५ शब्ददर्शन श्री रामस्वरूप शास्त्री, शारदासदनम्, मुज़फ्फ़रनगर, १९७२
१४६ शब्दव्यापारविचारः मम्मटः, सम्पा० रेवाप्रसाद द्विवेदी, चौखम्बा, १९७४
१४७ श्वेताश्वतरोपनिषद् गीता प्रेस, गोरखपुर
१४८ शंकराचार्यः उनके मायावाद तथा अन्य सिद्धान्तों का आलोचनात्मक अध्ययन डा० राममूर्ति शर्मा, साहित्यभण्डार, मेरठ, १९६४
१४९ शाक्तविज्ञानम् सोमानन्द, सम्पा० जगद्धर ज़ाडू, कश्मीर संस्कृत ग्रन्थावलिः, श्रीनगरम् (जम्मू-कश्मीरः), १९४७
१५० शारदापीठ-प्रदीपः इण्डोलाजिकल रिसर्च इन्स्टीट्यूट, द्वारका, अगस्त, १९६४
१५१ शार्ङ्गधरसंहिता चौखम्बा, १९५८
१५२ शिवपुराणम् सम्पा० श्री रामतेज पाण्डेयः, पण्डित-पुस्त-

कालयः, काशी, सं २०२०

१५३ शिवपुराण में शैवदर्शन तत्व (व्याप्ति और मान्यता) — आचार्य नितेन्द्रचन्द्र भारतीय, निर्मोही बन्धु प्रकाशन, १०६५सी, गोदानिकुञ्ज, महानगर, लखनऊ-६, १९७२

१५४ शिशुपालवधम् — सम्पा० श्री हरगोविन्द शास्त्री, चौखम्बा, द्वि० सं०, सं० २०१८

१५५ शिवकवचम् — गीता प्रेस, गोरखपुर

१५६ शिवताण्डव स्तोत्रम् — गीता प्रेस, गोरखपुर

१५७ शिवदृष्टिः — उत्पलदेवः, रिसर्च डिपार्टमेण्ट, जम्मू-कश्मीर, १९३४

१५८ शिवमहिम्नस्तोत्रम् — चौखम्बा

१५९ शिवसूत्रविमर्शिनी — रिसर्च डिपार्टमेण्ट, जम्मू कश्मीर, श्रीनगर, १९११

१६० शुक्रनीतिः — सम्पा० श्री ब्रह्मशङ्कर मिश्रः, चौखम्बा, १९६८

१६१ शैवमत — डा० यदुवंशी, बिहार राष्ट्रभाषा परिषद्, पटना, प्र०सं० १९५५

१६२ श्रीकण्ठचरितम् — मङ्खकः, निर्णयसागरः, १९३०

१६३ श्रीश्रीतन्त्राभिधानम् — सम्पा० श्रीपञ्चानन भट्टाचार्यः, संस्कृत-बुक डिपो, कार्नवालिस स्ट्रीट, कलकत्ता, १९३७

१६४ श्रीमद्भगवद्गीता — (शाङ्करभाष्यम्), सम्पा० श्री हरिकृष्णदास गोयन्दका, गीताप्रेस, गोरखपुर, दशम् सं० २०१८

१६५ श्रीमद्भगवद्गीता (गीतातत्वविवेचनी) — श्रीजयदयाल गोयन्दका, गीता प्रेस, गोरखपुरम् नवम सं०, सं० २०२३

१६६ श्रीमद्भागवतम् — गीताप्रेस, गोरखपुर, पञ्चम सं०, सं०२०२१

१६७ श्रीमद्वाल्मीकीयरामायणम् — गीताप्रेस, गोरखपुर, प्र०सं०, सं० २०१७

१६८ श्रीविक्रमाङ्कदेवचरितम् — सम्पा० डा० मंगलदेव शास्त्री, ज्योतिष-प्रकाश प्रेस, बनारस, १९४५

१६९ षट्त्रिंशत्तत्वसन्दोहः — श्रीराजानकानन्दाचार्यः, सम्पा० श्रीस्वामी जी महाराज, पीताम्बरापीठ, दतिया (म०प्र०)

| | | |
|---|---|---|
| १७० | संगीतशास्त्र | के० वासुदेव शास्त्री, प्रकाशन-शाखा, सूचना-विभागः, उ०प्र०, प्रथम सं० १९५८ |
| १७१ | सरस्वतीकण्ठाभरणम् | भोजराजः, निर्णयसागर |
| १७२ | सर्वदर्शनसंग्रहः | श्री अभ्यङ्करवासुदेव शास्त्री, निर्णयसागरः, १९२४ |
| १७३ | स्तुतिकुसुमाञ्जलिः | श्री जगद्धर भट्टः, मास्टर खेलाड़ी लाल एण्ड सन्स, वाराणसी |
| १७४ | स्पन्दकारिका | रिसर्च डिपार्टमेण्ट, जम्मू-कश्मीरः, १९१३ |
| १७५ | स्वच्छन्दतन्त्रः (१-६भागाः) | रिसर्च डिपार्टमेण्ट, जम्मू-कश्मीरः, १९२१-१९३५ |
| १७६ | स्वप्नवासवदत्तम् | सम्पा० श्री सी० आर०देवधरः, ओरियण्टल बुक एजेन्सी, पूना, १९३६ |
| १७७ | संस्कृत-कवि-दर्शन | डा०भोलाशङ्कर व्यासः, चौखम्बा, द्वि०सं० १९६१ |
| १७८ | संस्कृत कविता में रोमाण्टिक प्रवृत्ति | डा० हरिश्चन्द्र वर्मा, लीलाकमल प्रकाशनम्, मेरठ |
| १७९ | सस्कृत-काव्यकार | डा० हरिदत्त शास्त्री, साहित्यभण्डारः, मेरठ, १९७० |
| १८० | संस्कृत-महाकाव्य की परम्परा | डॉ० केशवराव मुसलगाँवकर, चौखम्बा०, सं० १९६९ |
| १८१ | संस्कृत-काव्यशास्त्र का इतिहास | म०म० पी०वी० काणे, अनुवादकः श्री इन्द्रचन्द्र शास्त्री, मोतीलाल-बनारसीदास, १९६६ |
| १८२. | संस्कृत-आलोचना | श्री बलदेव उपाध्याय, प्रकाशन-ब्यूरो, सूचना विभागः, उ०प्र० १९५७ |
| १८३. | संस्कृत-शब्दार्थ-कौस्तुभ | सम्पा० श्री द्वारकाप्रसादशर्मा, रामनारायणबेनीमाधव, इलाहाबाद, तृतीय, १९६७ |
| १८४. | संस्कृत-साहित्य का इतिहास | श्री बलदेव उपाध्याय, शारदा-मन्दिर, वाराणसी, अष्टम सं०, १९६८ |
| १८५. | संस्कृत साहित्य की प्रवृत्तियाँ | डॉ० जयकिशन लाल खण्डेलवाल, श्री वेणीमाधव शास्त्री, मुसलगांवकर, विनोद- |

पुस्तक-मन्दिरम्, आगरा प्र०सं० १९६९

१८६. संस्कृत-साहित्य का इतिहास — श्री वरदाचारी, हिन्दी अनुवादक: डॉ० कपिलदेव द्विवेदी, रामनारायणलाल-वेनीमाधव, इलाहाबाद-२, १९६२

१८७. संस्कृत-साहित्य विमर्शः — श्री द्विजेन्द्रनाथ शास्त्री, भारतीप्रतिष्ठानम्, ३१, आनन्दपुरी, मेरठ, प्र०सं० १९५६

१८८. संस्कृत-साहित्य की रूपरेखा — श्री चन्द्रशेखर पाण्डेय, सप्तम सं० १९६४ साहित्य-निकेतनम्, कानपुर

१८९. संस्कृत-साहित्य का समीक्षात्मक इतिहास — डॉ० कपिलदेव द्विवेदी, सं० सा० संस्थान, इलाहाबाद-२, १९७४

१९०. संस्कृत-हिन्दी कोशः — श्री वामन शिवराम आप्टे, १९६६, मोतीलालबनारसीदास, दिल्ली

१९१. सांख्यकारिका — श्री बलराम उदासीनः, सं० १९८७, रामा मुद्रणालयः, गया

१९२. सांख्यकारिका — सम्पा० डॉ० ब्रजमोहन चतुर्वेदी, नेशनल पब्लिशिग हाउस, दिल्ली, १९६९

१९३. सांख्यतत्वविवेचन — स्वामी विवेकानन्द सरस्वती, परमार्थ-निकेतन, ऋषिकेश, सं० १९१८

१९४. सामवेदः — श्रीराम शर्मा, संस्कृति-संस्थानम्, बरेली, १९६२

१९५. साहित्यशास्त्र के प्रमुख पक्ष — वाणी-वितान-प्रकाशनम्, ब्रह्मनाल, वाराणसी, प्रथम सं १९६६

१९६. साहित्यदर्पणः — श्री जीवानन्द विद्यासागर, कलकत्ता

१९७. साहित्यदर्पणः (लक्ष्मीटीका) — श्री कृष्णमोहन शास्त्री, चौखम्बा०, द्वि०सं० १९५५

१९८. सौन्दरनन्दम् (अश्वघोषः) — सम्पा० सूर्यनारायण चौधरी, संस्कृत भवन पूर्णिया, बिहार

१९९. सौन्दर्यलहरी — श्री शङ्कराचार्यः, चौखम्बा

२००. सौन्दर्यशास्त्रः — डॉ० हरद्वारी लाल शर्मा, साहित्य भवन, इलाहाबाद, १९५३

२०१. हरविजयम् — निर्णयसागर १८९० (ग्रन्थस्थानेषु)

| | | |
|---|---|---|
| २०२. | हर्षचरितम् (बाणभट्ट) | सम्पा० श्री जीवानन्द विद्यासागर, वाचस्पत्ययन्त्रम् कलिकाता, १६३६ |
| २०३. | हर्षचरित : एक सांस्कृतिक अध्ययन | डॉ० वासुदेवशरण अग्रवालः, बिहार राष्ट्र-भाषा परिषद्, पटना, द्वि०सं०१६६४ |
| २०४ | हंसविलासः | श्री हंसमिठ्ठुः, ओरियण्टल इन्स्टीट्यूट, बड़ौदा, १६३७ |
| २०५ | हिन्दी-महाकाव्य : सिद्धान्त और मूल्यांकन | श्री देवीप्रसाद गुप्त, अपोलो पब्लिकेशन, जयपुर—३, प्र०सं० १६६८ |
| २०६ | हिन्दी-सर्वदर्शन-संग्रह | प्रो० उमाशङ्कर ऋषिः, चौखम्बा०, प्र०सं० १६६४ |
| २०७ | हिन्दी-साहित्य-कोष (भाग १) | प्रधान सम्पा०-धीरेन्द्र वर्मा, ज्ञानमण्डल लिमि०, वाराणसी, सं०२०२० |
| २०८ | हिन्दी अभिनवभारती | सम्पा० आचार्य विश्वेश्वरः, हिन्दी-विभागः, दिल्ली वि०वि०, १६६० |
| २०९ | हिस्ट्री आफ् क्लासिकल संस्कृत-लिटरेचर | श्रीकृष्णमाचारी, १६३७ |
| २१० | हिन्दू-राज्यशास्त्र | श्रीअम्बिकाप्रसाद वाजपेयी, हिन्दी-साहित्य-सम्मेलनम्, प्रयाग, सं० २००६ |

## लेखकस्यागामिन्यः कृतयः

(१) हरविजयस्य सांस्कृतिकमध्ययनम् ।

(२) हरविजयस्य दार्शनिकमध्ययनम् ।

(३) माघ और रत्नाकर ।

(४) संस्कृत–साहित्य में शैवकाव्यपरम्परा ।

(५) शिवपुराण–समीक्षण ।